तेऽर्थाः साधनीया दृश्यन्ते । तानेतान् क्लेशान् परिजिहीर्षुर्भोजदेवः गणपठितान् शब्दान्, परिभाषाः, ज्ञापक–भाष्येष्टि–वार्तिक–व्याख्यागम्यानर्थांश्च सूत्ररूपेण ग्रन्थशरीर एव समयोजयत् । क्वचित् तत्र तत्र विप्रकीर्णानां सूत्राणामेकत्रैव समावेशेन, क्वचिच्च प्रकरणादिविनिमयेन, सूत्राणां प्रदेशविनिमयेन पौर्वापर्यविपरिणामादिना च महती सौकर्यसम्पत्तिः सम्पादिता । स्थालीपुलाकन्यायेन कानिचन परमुदाह्रियन्ते :—

पाणिनिर्हि वृद्धिरादैच् इत्येवमादिकानि संज्ञासूत्राणि कानिचन प्रथमेऽध्याये, तत्पुरुषः, सङ्ख्यापूर्वो द्विगुः इत्येवमादीनि कानिचन द्वितीये, सनाद्यन्ता धातवः इत्यादीनि तृतीये, पूर्वोऽभ्यासः इत्यादीनि च कानिचन षष्ठे इत्येवं विप्रकीर्णतया संज्ञाः समसूत्रयत । नचैतेषामेवं विप्रकीर्णतया तत्र तत्र पाठे विशिष्य किमपि प्रयोजनं दृश्यते । एकत्रैव समाहारेण पाठे महत् सौकर्यं स्यादध्येतॄणामिति मन्वानो भोजदेवः शास्त्रप्रक्रियानिर्वाहोपयोगितया संज्ञासूत्राणां शास्त्रारम्भ एव पाठः समुचित इति प्रथमाध्यायप्रथमपाद एव तानि पपाठ । यानि पुनस्त्रिचतुराणि सूत्राणि 'अव्ययीभावः' इत्यादीनि तृतीयाध्याये पठ्यन्ते तानि चाधिकारसूत्राणीति न कोऽपि दोषः ।

एवं पाणिनिना तत्र तत्र पठितानि परिभाषासूत्राणि भाष्यवार्त्तिकयोर्निबद्धानि ज्ञापकन्यायसिद्धानि वाचनिकानि च परिभाषारूपाणि सर्वाण्यपि सङ्गृह्य प्रथमाध्यायद्वितीयपाद एव पपाठ । तथोणादीनां कृत्सु, फिट्सूत्राणां स्वरप्रकरणे, गणपठितानां च शब्दानां यथायथं तत्र तत्रैव च प्रकरणे सूत्रशरीरेष्वेव समावेशनेन च वार्त्तिकगणपाठादिबहुग्रन्थपरिशीलनपरिक्लेशं दूरीकुर्वता महदुपकृतमध्येतृमण्डलस्य ।

तथा पाणिनीयात् प्रस्थानात् सूत्राणां केषांचन प्रदेशविनिमयेन च महत् सौकर्यमापादितम् । यथा—पाणिनिर्हि तृतीयाध्याये लस्य, तिप्तस्झि इति लादेशत्वेन तिबादीन् विधाय तेषामेव तिबादीनामागमादेशादीन् थासः से इत्येवमादीन् कांश्चन तत्रैव पठित्वा कांश्चन परं झोऽन्तः अदभ्यस्तात् इत्यादिकान् सप्तमाध्याये पपाठ । तथा तुरीयाध्याये ङ्याप्प्रातिपदिकात् स्वौजसमौट् इति सुपं विधाय तदादेशादीन् अतो भिस ऐस् इत्यादिकान् सप्तमेऽङ्गाधिकारे पपाठ । भोजस्तु तानेतान् पाणिनीयाङ्गाधिकारगतान् सकलानपि विधीन् तृतीयाध्याये एव तत्तत्प्रत्ययविधिसमनन्तरमेव पपाठ । मन्ये युक्तं चैतत्—यत्

तत्तत्प्रत्ययविधानानन्तरमेव बोद्धृजनानुग्रहाय तदादेशादीनामपि विधानम्। किञ्च नह्येतेषामङ्गाधिकार एव पाठे विशिष्य फलं दृश्यते। अत एव च भाष्ये 'कानि पुनरङ्गाधिकारस्य प्रयोजनानि। अङ्गाधिकारस्य प्रयोजनं सम्प्रसारण-दीर्घत्वे। लिङ्येत्वे प्रयोजनम्। अतो भिस ऐस्त्वे प्रयोजनम्। लुङादिष्व-डाटौ प्रयोजनम्। इयङुवङ्युष्मदस्मत्तातङामिनुडानेमुक्केह्रस्वयिदीर्घभितत्त्वानि' इति प्रपञ्चितेषु प्रयोजनेषु 'नैतानि सन्ति प्रयोजनानि। कथम्। अर्थवद्-ग्रहणप्रत्ययग्रहणाभ्यां सिद्धम्। अर्थवद्ग्रहणप्रत्ययग्रहणाभ्यामेवैतानि सिद्धानि। क्वचिदर्थवद्ग्रहणे नानर्थकस्येत्येवं न भविष्यति। क्वचित् प्रत्ययग्रहणेऽप्रत्ययस्य नेति'(६-४-१) इति अतो भिस ऐस् इत्येवमादिषु केषुचिदर्थवद्ग्रहणप्रत्यय-ग्रहणपरिभाषाभ्यामेवानिष्टनिवारणसम्भवात् तेषामङ्गाधिकारपाठे फलाभाव उप-पादितः।

तथा पाणिनिना द्वितीयाध्याये आर्धधातुके इति प्रकृत्य पठिताः अदो जग्धिरित्येवमादिकाः प्रकृत्यादेशाः प्रकृत्यधिकारे एवान्तर्भाविता भोजेन। प्रकृत्यादेशानां प्रकृत्यधिकार एव पाठस्यौचित्यात्। एषां च पुनः सूत्राणां प्रकृत्यधिकारपाठे कैयटादिभिः समुद्भाविता दोषाश्च यत्नान्तरेण मन्ये परिहृताः। तथाहि—सूत्राणामेषामङ्गाधिकारीयार्धधातुकाधिकारपाठे वक्ष्य-माणो दोष उद्भावितः कैयटेन। तथाच तद्वाक्यम्—(६-४-४६-सूत्रे) 'अथ द्वितीयाध्यायविहिता आर्धधातुकनिमित्ता आदेशा इहैव कस्मान्नोक्ताः। एवं हि द्विरार्धधातुकग्रहणं न कर्तव्यं भवति। नैवं शक्यम्। आभाच्छास्त्रीये कार्ये कर्तव्ये तेषामसिद्धत्वप्रसङ्गात्। ततश्चास्त्यादेशस्य भुवो वुग् न स्याद्, अनादेश-स्यैव तु स्यात्। तथा चख्यतुरित्यादौ ख्याञोऽसिद्धत्वादाल्लोपाप्रसङ्गः' इति। एतावता चाङ्गाधिकारगतभाधिकारान्तर्भूतार्धधातुकाधिकारपाठ एव दोषोद्भावनं कृतं नत्वङ्गाधिकारपाठे। तत्परिजिहीर्षया च भोजेन भाधिकाराद् बहिरेवैते पृथगार्धधातुके इत्यधिकृत्य समावेशिताः। यद्यप्येतावता कैयटप्रदर्शितदिशा द्विरार्धधातुकाग्रहणरूपं लाघवं न भवत्येव, यतो भोजीयेऽस्मिन् प्रस्थानेऽपि दोषपरिहाराय भाधिकारे तद्बहिश्चेति द्विरार्धधातुकग्रहणस्यावश्य-कर्तव्यतैव; अथापि प्रतिपत्तिसौकर्यमस्तीति परमत्र विशेषः। अङ्गाधिकार एतेषां पाठे च 'स्यसिच्—' इति सूत्रभाष्योक्तहनिणिङादेशानां वारणं च 'चिण्वद्भावाच्चिणाश्रयं कार्यं भवति। लुङाश्रयं तु न भवति'

तथानुपूर्वीविपरिणामश्च क्वचिद् व्युत्क्रमपरिहारायाभ्युपेतः । तथाहि — इड्विधौ प्रथमं पाणिनिना 'नेड् वशि कृति' इति प्रतिषेधकाण्डपाठानन्तरम् 'आर्धधातुकस्येड् वलादे'रिति विधिकाण्डः प्रस्तुतः । तस्य चास्य पुरस्तात्प्रतिषेधकाण्डारम्भस्य प्रयोजनमेवं प्रपञ्चितं भाष्यादिषु । यथा — 'इण्मात्रमनाश्रितविषयविशेषमनारभ्याधीतेन प्रतिषेधेन बाध्यते' इति । तथाच तुष्टोथ, दुद्रोथ इत्यादौ थलि भारद्वाजनियमप्रापितस्यापीटो निवारणेन समीहितसिद्धिः, इति । इदमत्राकूतम् — यथा पपिथ इत्यादौ प्रथमं वलादिलक्षणेन प्राप्त इट् एकाच इति प्रतिषिद्धः पुनश्च क्रादिनियमात् प्राप्तोऽचस्तास्वदिति प्रतिषिद्धः, तत्र ऋत एव भारद्वाजस्य नान्येभ्य इति नियमात् पक्षे भवति, एवं तुष्टोथेत्यत्रापि प्राप्नोति । येन नाप्राप्तन्यायेन हि स्तुद्रुस्रुश्रुवां ग्रहणं क्रादिनियमप्राप्तमेवेटं बाधेत नतु भारद्वाजनियमप्राप्तमपि । सोऽयं विकल्पेन प्राप्त इट् पुरस्तात्प्रतिषेधकाण्डकरणात् इण्मात्रस्यानाश्रितविधानविशेषस्य बाधविज्ञानाद् निवार्यते इति।

भोजस्तु प्राप्तिपूर्वकत्वात् प्रतिषेधस्य, विध्युत्तरकालस्यैव च प्रतिषेधस्य न्याय्यत्वात् पाणिनीयं क्रमव्यतिक्रममसाम्प्रतं चिन्तयन् सूत्राणां पौर्वापर्यविनिमयेनान्यथाकरणेन च तमिममर्थं साधयित्वा दोषमिमं परिजहार । तथाहि — 'कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि ………… अचस्तास्वत् थल्यनिटो नित्यम्, उपदेशेऽत्वतः, ऋतो भारद्वाजस्य' इत्येवमष्टाध्याय्यां पाठक्रमः । एवं पाठे ऋदन्तानामपि थलि अचस्तास्वदित्यनेनेण्निषेधस्य सिद्धत्वात् ऋतो भारद्वाजस्येत्यस्य नियमार्थता सम्भवति । भोजस्य तु 'सृभृवृस्तुद्रुस्रुश्रुभ्यो लिटः । कृञोऽसुटः । ऋतस्तासि नित्यानिटस्थलः । अचो वा । पाठेऽत्वतः' इत्येवं सूत्रपाठः । अत्र पक्षे स्रादिनियमप्राप्तस्येटः प्रतिषेधार्थतैव ऋतस्तासीति सूत्रस्य, न नियमार्थता । इण्निषेधस्याप्राप्तत्वात् । ततः स्रादिनियमेन लिटि सामान्येन प्राप्तस्येटः अचो वा इति थलि विकल्पः । स चायं विकल्पः स्रादिसूत्रे स्तुद्रुस्रुश्रुवां ग्रहणेन तुष्टोथेत्यादौ न प्रवर्तते इति । उक्तं च दण्डनाथेनापि — "स्तुद्रुस्रुश्रुभ्यस्थलः (अचो ने इति नियमाद्?)य इट् प्राप्तः सोऽपि प्रतिषिध्यते" इति ।

तत्तत्प्रत्ययविधानानन्तरमेव बोद्धृजनानुग्रहाय तदादेशादीनामपि विधानम्। किञ्च नह्येतेषामङ्गाधिकार एव पाठे विशिष्य फलं दृश्यते। अत एव च भाष्ये 'कानि पुनरङ्गाधिकारस्य प्रयोजनानि। अङ्गाधिकारस्य प्रयोजनं सम्प्रसारण-दीर्घत्वे। लिङ्येत्वे प्रयोजनम्। अतो भिस ऐस्त्वे प्रयोजनम्। लुङादिष्व-डाटौ प्रयोजनम्। इयङुवङ्युष्मदस्मत्तातङामिनुडानेमुकेहृस्वयिनीनिमित्तानि' इति प्रपञ्चितेषु प्रयोजनेषु 'नैतानि सन्ति प्रयोजनानि। कथम्। अर्थवद्-ग्रहणप्रत्ययग्रहणाभ्यां सिद्धम्। अर्थवद्ग्रहणप्रत्ययग्रहणाभ्यामेवैतानि सिद्धानि। क्वचिदर्थवद्ग्रहणे नानर्थकस्येत्येवं न भविष्यति। क्वचित् प्रत्ययग्रहणेऽप्रत्ययस्य नेति'(६-४-१) इति अतो भिस ऐस् इत्येवमादिषु केषुचिदर्थवद्ग्रहणप्रत्यय-ग्रहणपरिभाषाभ्यामेवानिष्टनिवारणसम्भवात् तेषामङ्गाधिकारपाठे फलाभाव उप-पादितः।

तथा पाणिनिना द्वितीयाध्याये आर्धधातुके इति प्रकृत्य पठिताः अदो जग्धिरित्येवमादिकाः प्रकृत्यादेशाः प्रकृत्यधिकारे एवान्तर्भाविता भोजेन। प्रकृत्यादेशानां प्रकृत्यधिकार एव पाठस्यौचित्यात्। एषां च पुनः सूत्राणां प्रकृत्यधिकारपाठे कैयटादिभिः समुद्भाविता दोषाश्च यत्नान्तरेण मन्ये परिहृताः। तथाहि—सूत्राणामेषामङ्गाधिकारीयार्धधातुकाधिकारपाठे वक्ष्य-माणो दोष उद्भावितः कैयटेन। तथाच तद्वाक्यम्—(६-४-४६-सूत्रे) 'अथ द्वितीयाध्यायविहिता आर्धधातुकनिमित्ता आदेशा इहैव कस्मान्नोक्ताः। एवं हि द्विरार्धधातुकग्रहणं न कर्तव्यं भवति। नैवं शक्यम्। आभाच्छास्त्रीये कार्ये कर्तव्ये तेषामसिद्धत्वप्रसङ्गात्। ततश्चास्त्यादेशस्य भुवो वुग् न स्याद्, अनादेश-स्यैव तु स्यात्। तथा चख्यतुरित्यादौ ख्याञोऽसिद्धत्वादाल्लोपाप्रसङ्गः' इति। एतावता चाङ्गाधिकारगतभाधिकारान्तर्भूतार्धधातुकाधिकारपाठ एव दोषोद्भावनं कृतं नत्वङ्गाधिकारपाठे। तत्परिजिहीर्षया च भोजेन भाधिकाराद् बहिरेवैते पृथगार्धधातुके इत्यधिकृत्य समावेशिताः। यद्यप्येतावता कैयटप्रदर्शितादिशा द्विरार्धधातुकाग्रहणरूपं लाघवं न भवत्येव, यतो भोजीयेऽस्मिन् प्रस्थानेऽपि दोषपरिहाराय भाधिकारे तद्बहिश्चेति द्विरार्धधातुकग्रहणस्यावश्य-कर्तव्यतैव; अथापि प्रतिपत्तिसौकर्यमस्तीति परमत्र विशेषः। अङ्गाधिकार एतेषां पाठे च 'स्यसिच्—' इति सूत्रभाष्योक्तहनिणिङादेशानां वारणं च 'चिण्वद्भावाच्चिणाश्रयं कार्यं भवति। लुङाश्रयं तु न भवति'

तथानुपूर्वीविपरिणामश्च क्वचिद् व्युत्क्रमपरिहारायाभ्युपेतः । तथाहि — इड्विधौ प्रथमं पाणिनिना 'नेड् वशि कृति' इति प्रतिषेधकाण्डपाठानन्तरम् 'आर्धधातुकस्येड् वलादे'रिति विधिकाण्डः प्रस्तुतः । तस्य चास्य पुरस्तात्प्रतिषेधकाण्डारम्भस्य प्रयोजनमेवं प्रपञ्चितं भाष्यादिषु । यथा — 'इण्मात्रमनाश्रितविषयविशेषमनारभ्याधीतेन प्रतिषेधेन बाध्यते' इति । तथाच तुष्टोथ, दुद्रोथ इत्यादौ थलि भारद्वाजनियमप्रापितस्यापीटो निवारणेन समीहितसिद्धिः, इति । इदमत्राकूतम् — यथा पपिथ इत्यादौ प्रथमं वलादिलक्षणेन प्राप्त इट् एकाच इति प्रतिषिद्धः पुनश्च क्रादिनियमात् प्राप्तोऽचस्तास्वदिति प्रतिषिद्धः, तत्र ऋत एव भारद्वाजस्य नान्येभ्य इति नियमात् पक्षे भवति, एवं तुष्टोथेत्यत्रापि प्राप्नोति । येन नाप्राप्तन्यायेन हि स्तुद्रुस्रुश्रुवां ग्रहणं क्रादिनियमप्राप्तमेवेटं बाधेत नतु भारद्वाजनियमप्राप्तमपि । सोऽयं विकल्पेन प्राप्त इट् पुरस्तात्प्रतिषेधकाण्डकरणात् इण्मात्रस्यानाश्रितविधानविशेषस्य बाधविज्ञानाद् निवार्यते इति।

भोजस्तु प्राप्तिपूर्वकत्वात् प्रतिषेधस्य, विध्युत्तरकालस्यैव च प्रतिषेधस्य न्याय्यत्वात् पाणिनीयं क्रमव्यतिक्रममसाम्प्रतं चिन्तयन् सूत्राणां पौर्वापर्यविनिमयेनान्यथाकरणेन च तमिममर्थं साधयित्वा दोषमिमं परिजहार । तथाहि — 'कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि ··········· अचस्तास्वत् थल्यनिटो नित्यम्, उपदेशेऽत्वतः, ऋतो भारद्वाजस्य' इत्येवमष्टाध्याय्यां पाठक्रमः । एवं पाठे ऋदन्तानामपि थलि अचस्तास्वदित्यनेनेण्निषेधस्य सिद्धत्वात् ऋतो भारद्वाजस्येत्यस्य नियमार्थता सम्भवति । भोजस्य तु 'सृभृवृस्तुद्रुस्रुश्रुभ्यो लिटः । कृञोऽसुटः । ऋतस्तासि नित्यानिटस्थलः । अचो वा । पाठेऽत्वतः' इत्येवं सूत्रपाठः । अत्र पक्षे क्रादि— नियमप्राप्तस्येटः प्रतिषेधार्थतैव ऋतस्तासीति सूत्रस्य, न नियमार्थता । इण्निषेधस्याप्राप्तत्वात् । ततः क्रादिनियमेन लिटि सामान्येन प्राप्तस्येटः अचो वा इति थलि विकल्पः । स चायं विकल्पः क्रादिसूत्रे स्तुद्रुस्रुश्रुवां ग्रहणेन तुष्टोथेत्यादौ न प्रवर्तते इति । उक्तं च दण्डनाथेनापि— "स्तुद्रुस्रुश्रुभ्यस्थलः (अचो ने इति नियमाद् ?)य इट् प्राप्तः सोऽपि प्रतिषिध्यते" इति ।

एवं यत्र यत्र पुरस्तात् प्रतिषेधकाण्डारम्भप्रयोजनतयेडभावः साधितः, तत्र सर्वत्रापि पौर्वापर्यादिविनिमयेनैव भोजेन सोऽर्थः साध्यते । यथा — स्वृत्वेत्यादौ स्वरत्यादिसूत्रेण क्त्यपि परत्वात् प्राप्तो विकल्पः श्र्युकः कितीति पुरस्तात् प्रतिषेधारम्भाद् वारितः पाणिनीयैः । भोजेन तु स्वरत्यादिसूत्रात् परमेव श्र्युगूर्णुभ्यः कितः इति पाठाभ्युपगमेन परबलीयस्त्वेनैव किति प्राप्तो विकल्पो निवार्यते । एवमितरत्रापि ।

एवं लाघवैकदत्तदृष्टिर्भोजः नात्यर्थमुपयुज्यमानान् कित्त्वाद्यतिदेशानपि परित्यजति । पाणिनिर्हि 'असंयोगाल्लिट् कित्' इत्यादिना केषाञ्चित् कित्त्वमतिदिश्य तत्फलत्वेनानिदितामित्यादिना नलोपादिकं विधत्ते । इदमेव हि कित्त्वातिदेशस्य फलं— यद् गुणवृद्धिप्रतिषेधसम्प्रसारणानुनासिकलोपादिकम् । एतानि चेत् कार्याणि येषां कित्त्वमतिदिदिक्षितं तेष्वेव परतो विधीयन्ते तर्हि स्यान्महल्लाघवं प्रक्रियायाः । यथा — मृडमृदेति सेटः क्त्वः कित्त्वातिदेशस्य फलमुपधागुणाभावः । तत्र कित्त्वमतिदिश्य पुनः क्ङितीतिगुणप्रतिषेधाद् वरम् एषां क्त्वि परे गुणाभावस्यैव विधानम् । एवं सम्प्रसारणादीनामपि । एवं हि प्रक्रियालाघवं ग्रहणसौकर्यं च भवति । तथ, ससर्वनामस्थानादिकाश्च संज्ञाः प्रक्रियालाघवार्थं भोजेन त्यक्ताः । पद्धतिश्चेयं मन्ये कातन्त्रानुसारेण भोजेन स्वीकृता ।

तथा ज्ञापकयोगविभागादिना पाणिनीयैः साध्यमाना अप्यर्थाः ग्रन्थशरीरे एव भोजेन गुम्भिताः । यथा — 'अष्टन आ विभक्तौ । इहात्वस्य वैकल्पिकत्वाद् अष्टभिः अष्टाभिः इति रूपद्वयं सिद्ध्यति । तदिदं वैकल्पिकत्वं ज्ञापकसाध्यं पाणिनीयानाम् । नहि सूत्रे विकल्पवाचकं पदमुपलभ्यते । नाप्यनुवृत्तिसाध्यम् । अष्टनो दीर्घादिति सूत्रस्थदीर्घपदेन वैकल्पिकत्वं ज्ञाप्यते । यदि स्यान्नित्यमात्वं दीर्घादिति विशेषणं व्यर्थं स्याद् व्यावर्त्याभावात् । तथा अष्टाभ्य औशिति कृतात्वनिर्देशोऽपि । तथाच दीर्घग्रहणात् कृतात्वनिर्देशाच्च वैकल्पिकत्वं ज्ञाप्यते । भोजस्तु क्लेशमिमं परिजिहीर्षुः 'अष्टनो वा सुप्यात्' इति वाशब्दघटितमेव समसूत्रयत् ।

तथा अन्यदीयम् अन्यत्कारकम् इत्यादिसिद्ध्यर्थम् 'अषष्ठ्यतृतीया— इति सूत्रे योगविभागश्चोदितो भाष्ये — 'अषष्ठ्यतृतीयास्थस्येत्युच्यते ।

तत्रेदं न सिद्ध्यति । अन्यस्येदमन्यदीयम् । अन्यस्य कारकोऽन्यत्कारक इति । एवं तर्हि अविशेषेणान्यस्य दुक् छकारकयोरित्युक्त्वा ततो वक्ष्यामि अषष्ठ्यतृतीयास्थस्याशीराशास्थास्थितोत्सुकोतिरागेष्विति' इति । तदेतदेवाभिप्रेत्य सूत्रितं भोजेन -- छकारकयोरन्यस्य दुक् । अषष्ठीतृतीयास्थस्याशीराशास्थास्थितोत्सुकोतिरागेषु' इति ।

एवं व्याख्यानावृत्तिभाष्येष्ट्यादिभिः साध्यमानानर्थान् भोजो ग्रन्थशरीर एव समयोजयत् ।

अपिच काशिकाकारादीनामनभिमताः क्वचिच्च क्लिष्टतयानुशिष्यमाणाश्च शब्दाः मतान्तरपर्यालोचनया साधुतयानुशिष्यन्ते भोजेन । यथा — अग्नायी देवता अस्य आग्नेयः स्थालीपाकः इत्यत्र 'भस्याढे तद्धिते' इति ढे तद्धिते पुंवद्भावप्रतिषेधात् 'कर्तव्योऽत्र यत्नः' इत्याह काशिकाकृत्, भाष्यकारश्च । तथा वमितः, जपितः, आश्वसितः, विश्रामः इत्यादीनामसाधुतां मन्यते काशिकाकारः । तथाहि — आदितश्चेति सूत्रे चकारोऽनुक्तसमुच्चयार्थः । आश्वस्तः वान्तः' इति इडभावघटितमेव रूपमुदाजहार । 'नोदात्तोपदेश —' इति सूत्रे 'सूर्यविश्राम भूमिरित्येवमादिकं प्रयोगमन्याय्यमेव मन्यन्ते' इति चाह ।'

तथा दृढभक्तिः दृष्टभक्ति इत्यादिकानां भक्तिशब्दस्य प्रियादिषु पाठात् पुंवद्भावाप्राप्त्या साधुत्वान्वाख्यानाय 'दृढभक्तिरित्येवमादिषु स्त्रीपूर्वपदस्याविवक्षितत्वात् सिद्धमिति समाधेयम्' इति चाह ।

भोजस्तु एवमादिकानां शब्दानां महाकविभिः साधुतया प्रयुज्यमानानाम् *आचार्यान्तरमतावलम्बेन 'ढे आग्नायी', 'जपिवम्याश्वसिविश्वसिभ्यश्च- 'विश्रमेर्वा', 'भक्तौ च कर्मसाधनायाम्' इत्यादिभिः सूत्रैः साधुत्वं ख्यापयति । एवं समानगामा, सनामा, उपदिदीषते, उपदित्सते इत्यादीनामपि ।

---

*कातन्त्रे (दुर्गवृत्तिः) 'चकारोऽनुक्तसमुच्चयार्थः । तेन जपिवमिभ्यां वा । जप्तः' जपितः । वान्तः, वमितः । व्याङ्भ्यां श्वसः । विश्वस्तः विश्वसितः । आश्वस्तः आश्वसितः' 'वौ श्रमेः नञा निर्दिष्टस्यानित्यत्वात् । विश्रामः ।' इति । page 452, 300.

तथा क्वचित् सूत्रवार्तिकभाष्यादिष्वदृष्टचरीं शब्दव्युत्पत्तिं प्रदर्शयति। तथाहि—'पूर्वतरपरतराभ्यामेद्यविः परश्च' (५. ३. ३०) 'आरिः संवत्सरे' (५. ३. ३१) 'पूर्वादुच्च' (५. ३. ३२) 'परात्' (५ ३. ३३) इति सूत्रैः पूर्वतरे परतरे वाहनि परेद्यविशब्दं पूर्वतरे परतरे वा संवत्सरे परारिशब्दं पूर्वस्मिन् परस्मिन् वा संवत्सरे परुच्छब्दं च व्युत्पादयति। भाष्यादौ तु परस्मिन्नहनि परं परेद्यविशब्दः, पूर्वतरे संवत्सरे परं परारिशब्दः, पूर्वस्मिन् संवत्सरे परं परुच्छब्दश्च व्युत्पादितो दृश्यते। (भाष्य० ५- ३- २२)

तथा पाणिनीयानुशासनेऽदृष्टानां विखुविखादिशब्दानामनुशासनं विदधता भोजेन समेषामपि साधुशब्दानां तत्कालप्रसिद्धानां सङ्ग्रहणे स्वस्य महानभिनिवेशो व्यक्तीकृतः।

क्वचिच्च भाष्यादिविरुद्धोऽप्यर्थ उल्लिखितो दृश्यते। यथा—

| | |
|---|---|
| हिमं न सहते हिमेलुः। | हिमं सहते हिमेलुः। |
| 'हिमाच्चेलुः' 'हिमाच्चेलुर्ववत-व्यस्तत्र सहत इत्येतस्मिन्नर्थे' इति। (भा· वा० ५- २- १२२) | 'हिमात् सहते चेलुः' (५- २- २२६) भोजः |
| नासिकाया नते निबिडम् इति (काशिका ५- २- ३२) | 'नेर्बिडच्बिरीसचौ नीरन्ध्रे' (भोजः ५- २- ४०) |

क्वचिच्च पाणिनीये सूत्रेऽनुपपत्तिं पश्यन् सूत्रविपरिणामं करोति। यथा—श्नसोरल्लोपः। अत्र हि श्न + अस् अनयोः अकः सवर्णे दीर्घ इति सवर्णदीर्घे श्नासोरित्येव भाव्यं; नतु श्नसोरिति निर्देशेऽनुपपत्तिं पश्यन् काशिकाकारः 'श्नसोरिति पररूपं शकन्ध्वादिषु द्रष्टव्यम्' इत्याह। भोजस्तु वरं शकन्ध्वादित्वकल्पनात् कृतदीर्घस्यैवोच्चारणमिति 'श्नासोरल्लोपः' इत्येव सूत्रयामास।

किं बहुना। भाष्यवार्तिककाशिकादिसारांशसङ्कलनेन मतान्तरसंग्रथनेन तत्तत्कालसमुच्चितानां नैकेषां शब्दानां संग्रहणेन च गहनतरव्याकरणाम्भोधिमुत्तितीर्षूणां भवति च प्लव इव परमोपकारकमपूर्वं भोजीयमिदं सरस्वतीकण्ठाभरणाख्यं ग्रन्थरत्नम्।

न च बहुभिः प्रमाणतयाङ्गीकृतत्वाद् आर्षत्वाच्च पाणिनीयस्यैव प्रामाण्यं, भोजीयस्य चास्यार्वाचीनत्वादप्रामाण्यमेव इति वाच्यम्।

"पाणिन्युक्तं प्रमाणं, न तु पुनरपरं चन्द्रभोजादिसूत्रं
केऽप्याहुः, तल्लघिष्ठं; न खलु बहुविदामस्ति निर्मूलवाक्यम्।
बह्वङ्गीकारभेदो भवति गुणवशात्; पाणिनेः प्राक्तनं वा
पूर्वोक्तं पाणिनिश्चाप्यनुवदति; विरोधेऽपि कल्प्यो विकल्पः॥"
(प्रक्रियासर्वस्वम्)

इति पद्येन, "भाष्यादिकथितसकललक्षणानुकथनादिपरिनिश्चितबहुविद्भावा हि भोजादयः शास्त्रान्तरमहाजनप्रयोगादिमूलमालम्ब्यैव शास्त्राणि प्रणीतवन्तः इति पाणिनीयवत् तेषामपि प्रामाण्यमेव" इत्यनेन वचनेन च वैयाकरण-शिरोमणिभिर्नारायणभट्टपादैः प्रामाण्यस्य साधितत्वात्। कृष्णलीला-शुक-वर्धमान-क्षीरस्वामिप्रभृतिभिरनेकैस्तत्र तत्र भोजसूत्रस्य प्रमाणतया स्वीकृ-तत्वाच्च। एवं बहुभिः प्रमाणतया स्वीकृतं क्वचन काले लब्धप्रतिष्ठमपीदं ग्रन्थरत्नं पाणिनीयस्य व्याकरणस्यार्षत्वात् श्रुत्यपरपर्यायचतुर्दशसूत्रमूलकत्वाद् व्याख्यापरम्परायाश्च प्रसृतत्वाद् बहुभिरङ्गीकृतत्वाच्च कुहचन कोणे निलीनं नाममात्रावशेषं सदिदानीं प्रकाशपदवीमधिरूढमिति महदिदं प्रमोदस्थानं पण्डितमण्डल्याः।

जीवितसमयादिकं च भोजराजस्य विमर्शकैर्निर्णीतमेवेति नात्र तद्वि-चारः प्रस्तूयते।

वृत्तिश्चेयं दण्डनाथनारायणभट्टसमुद्धृता नाम्ना हृदयहारिणी सरसल-लितोदारमधुरया वाचा समुचितोदाहरणप्रदानेन च मूलार्थं विवृण्वती प्रमाणभूत-प्राचीनाचार्यमतान्यप्याविष्कुर्वती तत्र तत्र यावदपेक्षं लघुना विवरणेन सूत्रका-राशयं विशदयन्ती च मन्ये हृदयहारिणीत्वं स्वस्यान्वर्थयति।

सूत्रार्थवर्णने उदाहरणप्रदर्शने च वृत्तिरियं काशिकावृत्तिमेवोपजीवति। यद्वा भूयसा काशिकावाक्यान्येवानुवदतीत्यपि नासाम्प्रतम्। मन्ये चात एव दण्डनाथेन 'समुद्धृतायाम्' इति समुद्धृतपदं युक्तमुपयुक्तं न तु विरचिता-यामिति। क्वचिच्च कैयटवाक्यान्यप्यनुवदति। यथा

दण्डनाथः —

'अत्र शुक्लत्वमधुरत्वादयो मतुब्लुकि विज्ञायमाने यद्यपि तद्धितान्तास्तथापि गुणगुणिनोर्जातितद्वतोरिव सोऽयमित्यभिसम्बन्धेन लोकनिरूढेन भेदसम्बन्धस्य न्यग्भावाद् ……… व गुणभाव एव प्रत्ययो भवति नतु सम्बन्धे ।'

कैयटः —

'अभिन्नरूपाः शुक्लादयो मतुब्लुकि विज्ञायमाने यद्यपि तद्धितान्तास्तथापि तेभ्यो भावप्रत्ययो गुण एव भवति न तु सम्बन्धे । गुणगुणिनोर्जातितद्वतोरिव सोऽयमित्यभिसम्बन्धेन लोकनिरूढेन भेदसम्बन्धस्य न्यग्भावाद्, गुणवचनेभ्यो लुगिति …. …. …. यते ।'

… … … … …

… … … … …

… … … … …

… … … … …

'अव्यभिचरितसम्बन्धाः प्रायः कृत्स्वेव भवन्ति । सतो भावः सत्त्वं सत्ता विद्यमानत्वं विद्यमानतेति । अत्रापि जातावेव भावप्रत्ययः । नहि सद्वस्तु सत्तासम्बन्धं व्यभिचरतीति सत्तासम्बन्धानपेक्षाणां सम्बन्धे (न प्रत्ययः) पाचक इत्यादौ तु सम्बन्धस्य कादाचित्कत्वात् तदपेक्षाः पाचकादिशब्दाः स्वार्थमभिदधत इति ततः सम्बन्धे प्रत्ययो युक्तः । तस्मात् सत्स्वेव विद्यमानेषु पदार्थेषु नित्यसमवायिनी शब्दप्रवृत्तिहेतुः सत्तैव भावप्रत्ययवाच्या । न तु सत्सत्तयोः सम्बन्धः ।'

(५-१-१३३)

'अव्यभिचरितसम्बन्धात् सतो भावः सत्तेति जातावेव भावप्रत्ययः । नहि सद्वस्तु सत्तासम्बन्धं व्यभिचरतीति सत्तासम्बन्धानपेक्षणाद् न सम्बन्धे प्रत्ययः । राजपुरुषयोस्तु सम्बन्धस्य कादाचित्कत्वात् तदपेक्षो राजपुरुषशब्दः स्वार्थमभिधत्त इति ततः सम्बन्धे प्रत्ययो युक्तः । तस्मात् सर्वेषु पदार्थेषु नित्यसमवायिनी शब्दप्रवृत्तिहेतुः सत्तैव भावप्रत्ययवाच्या । न तु सत्सत्तयोः सम्बन्धः समवायाख्यः ।'

(५-१-११९)

'तथाहि —'अन्तादिशब्दाववयवविशेषवाचिनौ । तत्र यदि पूर्वं प्रत्ययवयवबुद्ध्या एकादेश आश्रीयते तदा

'तथाहि —अन्तादिशब्दाववयवविशेषवाचिनौ । तत्र यदि पूर्वं प्रत्ययवयवबुद्ध्या एकादेश आश्रीयते तदा

तस्यैव परं प्रति कथमादिवत्ता च स्यात् । एवं परं प्रत्यादिवत्त्वे पूर्वं प्रत्यन्तवद्भावाभावात्' । 'यदि हि वर्णरूपाश्रयो विधिरनेनातिदिश्येत तदाधीत्य प्रेत्येत्यादावेकादेशस्य ह्रस्वं प्रत्यादिवद्भावात् तुकः सिद्धत्वात् तुक्यसिद्धत्वं न ब्रूयात् ।'

(६—१—१३

'ननु च संज्ञाशब्दैकदेशे लुप्ते संज्ञास्वरूपानुपलम्भात् कथं संज्ञिनोऽवगमः । नहि यस्य देवदत्त इति संज्ञा कृता स पूर्वशब्दादुत्तरशब्दाद् वा प्रतीयते । न चैकदेशानुमीयमानसमुदायोऽर्थस्य वाचक इति वाच्यं, प्रत्ययार्थस्य प्रत्यायकत्वायोगाद्धि प्रधानं शेषभावमनुभवति ।'

(५—३—११८)

'यदापि क्रियैकदेशापवर्गाश्रयेण भूते क्तो विधीयते तदापि भवति कृतकल्पं वस्त्रमिति । एवं तिङन्तस्य तदभ्युपगन्तव्यम् । न ह्यन्यथा कृताकृतादयः क्रियैकदेशकरणाकरणाश्रयाः प्रयोगा उपपद्यन्ते । एवञ्च कालत्रयविषयेभ्योऽपि तिङन्तेभ्यः कल्पादयो भवन्ति पचतिकल्पं, पक्ष्यतिकल्पम्, अपाक्षीत्कल्पमिति ।'

(५—३—९२)

इत्यादि ।

तस्यैव कथं परं प्रत्यादिवद्भावः स्यात् । एवं परं प्रत्यादिवत्त्वे पूर्वं प्रत्यन्तवद्भावो न स्यात्' । 'यदि हि वर्णाश्रयो विधिरनेनातिदिश्येत तदाधीत्य प्रेत्येत्यादौ एकादेशस्य ह्रस्वत्वं प्रत्यादिवद्भावात् तुकः सिद्धत्वात् तुक्यसिद्धत्वं न ब्रूयात् ।'

(६—१—८५)

'अत्रेदं बोध्यम् — संज्ञाशब्दैकदेशे लुप्ते संज्ञास्वरूपानुपलम्भात् कथं संज्ञिनोऽवगमः । नहि यस्य देवदत्त इति संज्ञा कृता स देवशब्दाद् दत्तशब्दाद् वा प्रतीयते । न चैकदेशेन समुदायोऽनुमीयते समुदायस्त्वर्थवाचक इति युक्तं कल्पयितुम्, उच्चार्यमाणस्य प्रत्यायकत्वात् ।'

(५—३—८४)

'तथा तिङन्तादपि पचतिकल्पमिति । यदापि क्रियैकदेशापवर्गाश्रयेण भूते क्तो विधीयते तदापि कल्पादयो भवन्ति कृतकल्पं वस्त्रमिति । एवञ्च कृताकृतादयः एकदेशकरणाकरणाश्रयाः प्रयोगा उपपन्नाः ………. एवञ्च कालत्रयविषयेभ्यस्तिङन्तेभ्यः कल्पादयो भवन्ति पचतिकल्पं, पक्ष्यतिकल्पम् अपाक्षीत्कल्पमिति ।'

(५—३—६७)

कचित् पुनर्महाकविप्रयोगानुसारेण भाष्यकाराद्यनभिमतामपि शब्द-व्युत्पत्तिं प्रदर्शयति । यथा सरजसशब्दे —"सरजसमिति साकल्येऽव्ययीभावः सरजसमभ्यवहरति। बहुव्रीहिर्वा । सरजसमपहाय केतकीनां प्रसवम् ।" इति । नैव भाष्ये नवा काशिकादावव्ययीभावादन्यत्र बहुव्रीहौ सरजसशब्दो व्युत्पाद्यते । तथाहि 'अचतुर–' (५-४ ७७) इति सूत्रे भाष्यम् —' ... ... ... ... ... ... ... ... ... ततोऽव्ययीभावः । सह रजसा सरजसम्' इति । काशिकापि — 'साकल्ये — सरजसमभ्यवहरति । बहुव्रीहौ न भवति । सह रजसा सरजः पङ्कजम्' इति । कवयस्तु बहुलं प्रयुञ्जते । यथा — 'सरजसमकरन्दनिर्भरासु' 'सरजसतामवनेरपां निपातः' इत्यादि । प्रकाशवर्षादयः पुनः केचन बहुव्रीहावपि प्रयोगमनुमन्यन्ते । तथाहि —"सह रजसा यद् वर्तते तत् सरजसम्। अत्र समासान्तश्चिन्त्यः। 'अचतुरे'त्यादिनाव्ययीभावेऽस्य निपातितत्वात् । प्रकाशवर्षस्तु सरजस इत्यव्ययीभाव इति मतं प्रायिकं, बहुव्रीहावप्यनेकत्र दर्शनादित्याह" इति सरजसतामवनेरित्यस्य व्याख्याने (किरातार्जुनीयं १०-२०) देवराजः । तथा "सरजसमकरन्द इति पद्यव्याख्याने "सह रजसा सरजसम् । अचतुरे इत्यादिना साकल्यार्थेऽव्ययीभावः समासान्तनिपातः । तेन सरजस्क इति बहुव्रीह्यर्थो लक्ष्यः, मुख्यो वा महाकविप्रयोगबाहुल्यात् । अव्ययीभावदर्शनं तु प्रायिकमित्युक्तं प्राक्" इति मल्लिनाथोऽपि । तथा "सरजसमिति बहुव्रीहावच् समासान्तश्चिन्त्यः । साकल्येऽव्ययीभावे तस्य निपातितत्वात् । अथवा नैतत् सूत्रकारस्य वचनम् । पद्मनाभादिवद् 'अच्' इति योगविभागेन साध्यम् । प्रयोगा अपि दृश्यन्ते । यथा भारवेः— 'सरजसमपहाय ... ... कीर्णाम् ।' 'विरह ... ... ... ... निपातः' इति" इति चान्ये व्याख्यातारः । सरजसशब्दः समासान्तरेऽपि' इति शाकटायनव्याख्याने प्रक्रियासंग्रहेऽपि* । तथाच महाकविभिर्बहुलं प्रयुज्यमानत्वाद् व्याख्यातृभिश्च साधुत्वान्वाख्यानाद् दण्डनाथेनापि काशिकाद्यनभिमतापि व्युत्पत्तिः प्रत्यपादि ।

भोजीयं कण्ठाभरणं विवरीतुं प्रवृत्तोऽप्ययं वृत्तिकारः नैकेषु स्थलेषु

---

* Page 90 Published by Gustavoppert ph. D. Madras.

पाणिनीयैरेव सूत्रैर्व्यवहरति । यथा— 'श्रेण्यादयः कृतादिभिः,' 'भीस्म्योर्हेतुभये' 'अतो दीर्घो यञि' * इत्यादि ।

वृत्तिकारश्चायं कदा कं वा प्रदेशं स्वजन्मनालङ्कारेत्यत्र न किमपि प्रमाणमुपलभ्यते । परं तु माधवीयधातुवृत्तौ † "चपो वृक्ष इति मैत्रेयः । वेणुविशेष इति दण्डनाथः" इति माधवाचार्येण स्मर्यमाणत्वात् तत्पूर्वभावीति निश्चप्रचम् । माधवीयमपीदं वचनमर्थानुवादरूपमेव । यतः 'चपो नाम वंशविशेषः तस्य विकारश्चापः' इत्येवानुपूर्वी दृश्यते मुद्रितग्रन्थे (४-४-१०) ।

मद्रपुरीयविश्वविद्यालयप्रकाशितायाः उणादिवृत्तेरुपोद्घाते ब्रह्मश्री.ति.रा चिन्तामणिमहाशयैः दण्डनाथास्त्रय आसन्निति सरस्वतीकण्ठाभरणव्याख्यातुरस्य दण्डनाथस्य जीवितकालश्च क्रिस्त्वब्दीयद्वादशशतकपूर्वार्धं इति कविराजपण्डितसमकालिकश्चायमित्यभ्यूहितं दृश्यते ‡ । प्रमाणं त्वत्र न किमपि तैरुपवर्णितम् ।

परं तु अधोनिर्दिष्टैः प्रमाणैः मुग्धबोधकर्तुर्वोप्पदेवादर्वाचीनत्वमस्यास्माभिरभ्यूह्यते । तथाहि— "केचित् णलि थल्यपि विशेषनिर्देशेनैव सिद्धेः अलिटीति सामान्येन निर्देशाद् व्ययतेर्लिटि सम्प्रसारणं परपूर्वत्वं वा विभाषयन्ति । तेन संविव्ययतुः संविव्ययुः इत्याद्यपि भवति । तद्यथा—

§ 'संविव्ययुर्वसनचारुचमूसमुत्थं पृथ्वीरजः करभकण्ठकडारमाशाः ।'

इति (६-१-५६) तमसूत्रे मतान्तरमनुवदति दण्डनाथः । नैव भाष्ये नवा काशिकादिषु प्राचीनेषु ग्रन्थेषु व्ययतेर्लिटि सम्प्रसारणविकल्पः प्रपञ्चितः । नापि च कातन्त्रे शाकटायने वा सम्प्रसारणस्य विकल्पो निषेधो वा निरूपितः । माघव्याख्याता वल्लभदेवश्च 'केचित् संविव्ययुर्वसनचारुचमूसमुत्थमिति पठन्ति । तैः सम्प्रसारणाभावे युक्तिर्वक्तव्या' इति वदन् स्वजीवितसमये संविव्ययुरिति

----

* 'श्रेण्येकपूगकुण्डमुण्डराशिनिचयविशिखनिधानेन्द्रदेवकण्ठश्रवणभूतवदान्याध्यापकब्राह्मणक्षत्रियपट्टपण्डितकुशलचपलनिपुणाश्च्व्यर्थे कृतमतामितोक्तभूतसमाज्ञाताम्नाताख्याताससम्भाविताव‍धारितावकल्पितकलितनिराकृतापकृतापाकृतोदाहृतोदितदृष्टविश्रुतादिभिः ।' १-२-१०३

'भीस्मिभ्यां हेतुभययोस्तदर्थे' १-१-११६

'अत आद् यञि' ७-२-३९ इति भोजसूत्रानुपूर्वी ।

† 'चप सान्त्वने' इति धातौ ।

‡ Page 12 and 13 No. 7 Madras University Series

§ 'संविव्युरम्बरविकाशि चमूसमुत्थं' इत्येव मुद्रितपुस्तकपाठः । शिशु० ५-३.

पाठान्तरस्य सत्तां सूचयन् सम्प्रसारणविकल्पे युक्त्यभावं प्रतिपादयति । मुग्धबोधे परं विकल्पः प्रतिपाद्यते — यथा 'जि वान्त्यः किति (सू. ६३१) द्वेर्व्येञोऽन्त्यो भागो जि वा प्राप्नोति व्यां*किति। विव्युः, विव्ययुः' इति । तथाच वोपदेवेन सम्प्रसारणस्य वैकल्पिकताप्रपञ्चनेन विव्ययुरिति सम्प्रसारणाभावे रूपं साधितम् । प्रक्रियाकौमुदीव्याख्याने प्रसादे† 'व्येञोऽन्त्यभागस्य किति लिटि सम्प्रसारणं वेति केचित्' इति मूलवाक्यस्थं केचित् इति प्रतीकमुपादाय "केचिदिति । महाकवयो मुग्धबोधकारश्च । तथाहि वक्त्रैः संविव्ययुर्देहान्। संविव्ययुर्वसनचारुचमूसमुत्थमित्यादि महाकवयः । 'जि वान्त्यः किति' इति" इति प्रतिपादयता विट्ठलाचार्येण च सम्प्रसारणविकल्पस्य मुग्धबोधोपज्ञत्वं स्पष्टमेवोक्तम् । तथाच दण्डनाथेनापि केचिदित्यादिवाक्येन मुग्धबोधकारमसावेवाविष्कृतमिति सम्भाव्यते ।

तथा 'स्फायः स्फी' (६-१-२७) इति सूत्रे पूर्वसूत्राद् वेत्यनुवर्त्य स्फायतेर्निष्ठायां स्फी इत्ययमादेशो वा भवति । स्फीतः स्फीतवान् ; स्फातः स्फातवान् इति रूपद्वयमुदाहारि दण्डनाथेन । काशिकादिषु च स्फीतः स्फीतवान् इत्येकमेव रूपमुदाहृतम् । दुर्गसिंहेन परं कातन्त्रव्याख्यात्रा 'स्फायीति इदनुबन्धबलादादेशोऽयमनित्यः इति स्फातः' इत्यभिहितम् । अत्रापि च प्रसादे 'वेति केचित्' इति कौमुदीगतं प्रतीकमुपादाय 'तथोक्तं मुग्धबोधे स्फायः स्फी वा' इति मुग्धबोध एव प्रमाणीकृतः ।

तथा 'समानस्य च्छ—' (६-२-१९२) इति सूत्रे 'आदिग्रहणात् सलोहितसकुक्षिसवर्ण्यादयो भवन्ति' इति काशिकादावदृष्टान् मुग्धबोधमात्रोदाहृतान् सलोहितादिशब्दान् आदिग्रहणेन संगृह्णाति दण्डनाथः । अत्रापि प्रसादे 'पिण्डगन्धलोहितवेणिपत्नीपक्षेष्वपीति केचित्' इत्यत्र 'पिण्डेत्यादि । तथोक्तं मुग्धबोधे ज्योतिर्जनपदरात्रिनाभिबन्धुगन्धपिण्डलोहितकुक्षिवेणीब्रह्मचारितीर्थ्यपत्नीपक्षे समानस्य स इति' इति मुग्धबोधोपक्रमत्वं कुक्ष्यादेः प्रतिपाद्यते। तथाचैवमादिस्थलेषु दण्डनाथेन मुग्धबोध एवानूदित इति तत्प्रणेतुर्वोपदेवात् त्रयोदशशतकमध्यजीविनोऽर्वाचीनत्वं चतुर्दशशतकोत्तरार्धजीविमाधवाचार्यात् प्राचीनत्वं चानुमीयते ।

---

* जिरिति सम्प्रसारणस्य ठीति लिटश्च संज्ञा ।

† न व्यो लिटि (६-१-४६) Page 174, 2nd Part.

अथोनिर्दिष्टैः प्रमाणैर्व्याख्यानान्तरमप्यस्य सरस्वतीकण्ठाभरणस्यासी-दित्यभ्यूह्यते । तथाहि —'घृञ्प्रोर्णोर्नुग् वेति केचित्' इति प्रक्रिया-कौमुदीवाक्यं व्याचक्षाणेन प्रसादकृता केचिदिति प्रतीकमुपादाय केचिदिति । तथाच सरस्वतीकण्ठाभरणप्रक्रियायां पदसिन्धुसेताविल्युक्तं धावयतीत्येके भाययतीत्येके इति च' इति वर्णितत्वाद् पदसिन्धुसेतुनामकं व्याख्यान्तर-मासीदित्यनुमीयते । तथा दण्डनाथेनापि, 'केचित् कर्मकर्तरीति नानुवर्तयन्ति - तेषां दोषान्धकारभिदुरः, इत्यारिपक्षच्छिदुरः' (१-४-२३१) इति, 'केचिदभ्य-साभ्यामिति तृतीयां वाचक्षाणाः तद्योगे समा व्यवधाने विकल्पमिच्छन्ति, (६-१-३१) 'केचित् णलि थल्यपि विशेषनिर्देशेनैव सिद्धेः अलिटीति सामान्येन निर्देशाद् व्ययतेर्लिटि सम्प्रसारणं परपूर्वत्वं वा विभाषयन्ति (६-१-५६) इति बहुषु स्थलेषु व्याख्यानान्तरप्रदर्शनाच्च व्याख्यानान्तरसत्ता दण्डनाथप्राक्कालीनता च तस्याः स्फुटमनुमीयते इति ।

अन्ततश्च इदमेकं पण्डितमण्डलीं शिरसाभ्यर्थयन् प्रकृतमुपसंहरामि— यद् — अशुद्धप्रायमातृकैकशरणतया मातृकान्तरस्य चालाभेन मतिमान्द्या-दज्ञानाद् दृष्टिदोषात्प्रमादादनवधानाद् वा समुत्पन्नाः सर्वेऽपि स्खलिताः निर्मत्सरैर्गुणैकपक्षपातिभिः सद्भिर्मर्षणीया इति ।

सुबहु धारयन् यथावसरं समुचितोपदेशादिना सरस्वतीकण्ठाभरणस्या-स्योपोद्घाते मां चोदितवद्भ्यो मीमांसकरत्न मीमांसाविशारदब्रह्मश्री वि. ए. रामस्वामिशास्त्रिमहोदयेभ्योऽस्मदधिकरणाध्यक्षेभ्यः सहृदयसमक्षं ग्रन्थमिममवतारयामि ।

अनन्तशयनम्,
२२-११-१९४६.

के. एस्. महादेवशास्त्री.

---

* Page 313. Vol. II.

॥ श्रीः ॥

श्रीभोजदेवप्रणीतं

# सरस्वतीकण्ठाभरणं

श्रीनारायणदण्डनाथविरचितया

हृदयहारिण्याख्यया

वृत्त्या सनाथम् ॥

---

## अथ पञ्चमोऽध्यायः ।

### प्रथमः पादः ।

प्राग्वतेष्ठञ् ॥ १ ॥

'तेन तुल्यं क्रिया चेद्वतिः' इति वक्ष्यति । प्रागेतस्माद्वतिसंशब्दनात् येऽर्थास्तेषु ठञ्प्रत्ययोऽधिकृतो वेदितव्यः । वक्ष्यति — 'पारायणतुरायणचान्द्रायणेभ्यो वर्तयति' पारायणिकः । तौरायणिकः । चान्द्रायणिकः ॥

सङ्ख्यादेश्चालुकः ॥ २ ॥

अतः परं प्राग्वतेर्यतः प्रातिपदिकात् प्रत्ययविधिस्ततः केवलात् सङ्ख्यादेश्चालुको वेदितव्यः । तदुक्तं 'सङ्ख्यापूर्वपदानां तदन्तग्रहणमलुकि' इति । द्वैपारायणिकः । त्रैपारायणिकः । अलुक इति किम् । द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पम् । द्विशूर्पेण क्रीतं द्विशौर्पिकम् । शूर्पादञो लुकि न पुनरञ् भवति । सामान्यविहितष्ठञेव भवति ॥

आर्हादगोपुच्छसङ्ख्यापरिमाणाट्ठक् ॥ ३ ॥

अर्हति इति वक्ष्यति । प्रागेतस्मादर्हसंशब्दनाद्येऽर्थास्तेषु गोपुच्छादीन् वर्जयित्वा ठक्प्रत्ययोऽधिकृतो वेदितव्यः । अभिविधौ चायमाकारः । तेनार्हत्यर्थेऽपि ठग् भवति । ठञधिकारमध्ये तदपवादार्थ-

G. P. T. 1495. 500. 13-9-1115.

(ष्ठ ? त्वात् ठ)ग्विधेः । स्वरे चैतयोर्विशेषः । वक्ष्यति — तेन क्रीतम् । आश्विकम् । मौद्गिकम् । आपूपिकम् । शाष्कुलिकम् । अगोपुच्छादेरिति किम् । गोपुच्छेन क्रीतं गौपुच्छिकम् । ससत्या क्रीतं साषतिकम् । -श्रा(श ? शी)तिकम् । प्रस्थेन क्रीतं प्रास्थिकम् । कौडुविकम् । ठञ् भवति ॥

निष्कपाणिपादमाषवाहद्रोणषष्टिभ्यश्चासमासे ॥ ४ ॥

निष्कादिभ्यः शब्देभ्योऽसमासे वर्तमानेभ्य आर्हीयेष्वर्थेषु ठक्प्रत्ययो भवति । नैष्किकम् । पाणिकम् । पादिकम् । माषिकम् । वाहिकम् । द्रौणिकम् । षाष्टिकम् । असमास इति किम् । परमनैष्किकम् । उत्तमनैष्किकम् । ठञेव भवति । निष्काणां परिमाणार्थत्वात् । षष्टेश्च सङ्ख्यात्वात् पूर्वेणाप्राप्ते वचनम् । इहासमासग्रहणं पूर्वत्र तदन्तविधिरस्तीति ज्ञापयति । (स ? ग)-व्यं — सुगव्यम् । अपूप्यं — यवापूप्यम् । दन्त्यं — राजदन्त्यम् । तिल्यं—कृष्णतिल्यम् । माष्यं—राजमाष्यम् । इति ॥

कंसार्धाभ्यां टिठन् ॥ ५ ॥

आभ्यामार्हीयेष्वर्थेषु टिठन्प्रत्ययो भवति । कंसिकः — कंसिकी । अर्धिकः—अर्धिकी । टकारो ङीबर्थः । इकार उच्चारणार्थः । नकारः स्वरार्थः ॥

कार्षापणात् प्रतिश्चास्य वा ॥ ६ ॥

कार्षापणशब्दादार्हीयेष्वर्थेषु टिठन्प्रत्ययः प्रतिश्चास्यादेशो वा भवति । कार्षापणिकः—कार्षापणिकी । प्रतिकः—प्रतिकी ॥

शूर्पादञ् ॥ ७ ॥

शूर्पशब्दादार्हीयेष्वर्थेषु अञ्प्रत्ययो भवति । ठञोऽपवादः । पक्षे सोऽपि भवति । शूर्पेण क्रीतं शौर्पं—शौर्पिकम् ॥

सहस्रवसनविंशतिकशतमानेभ्योऽण् ॥ ८ ॥

सहस्रादिभ्य आर्हीयेष्वर्थेष्वण्प्रत्ययो भवति । ठक्ठञो(र)पवादः । साहस्रः । वासनः । वैंशतिकः । शातमानः ॥

शतात् केवलात् ठन्यतावतस्मिन् ॥ ९ ॥

शतशब्दात् केवलादार्हीयेष्वर्थेषु ठन्यतौ प्रत्ययौ भवतः । कनोऽपवादौ । तच्चेत्तदेव शतमभिधेयं भवति । शतिकः । शत्यः । केवलादिति किम् । द्वौ च शतं च द्विशतं तेन क्रीतं द्विशत(क)म् । अतस्मिन्निति किम् । शतं परिमाणमस्य शतकं निदानम् । अत्र हि प्रकृतार्थ एवाध्यायशतं प्रत्ययेनाभिधीयते । अन्यास्मिंस्तु शते भवत एव । शतेन क्रीतं शाटकशतं शत्यं शतिकम् ॥

सङ्ख्याया अतिशतः कन् ॥ १० ॥

त्यन्तशदन्तवर्जितायाः सङ्ख्याया आर्हीयेष्वर्थेषु कन्प्रत्ययो भवति । ठञोऽपवादः । द्वौ परिमाणमस्य द्विकः । त्रिकः । चतुष्कः । पञ्चकः । षोडशकः । शतकः । बहुकः । गणकः । अध्यर्धकः । अर्धपञ्चमकः । अतिशत इति किम् । आशीतिकः । चात्वारिंशत्कः ॥

कतेश्च ॥ ११ ॥

कतिशब्दाच्चार्हीयेष्वर्थेषु (ष्ठ ?)कन्प्रत्ययो भवति । कतिकः । त्यन्तत्वात् प्रतिषेधे प्राप्ते पुनर्वचनम् ॥

वतोरिट् च वा ॥ १२ ॥

'यत्तदेतद्भ्यो वतुप्' इति वक्ष्यति । तदन्तात् प्रातिपदिकादार्हीयेष्वर्थेषु कन्प्रत्ययो भवति । इडागमश्चास्य वा भवति । यावतिकः यावत्कः । तावतिकः तावत्कः ॥

विंशतित्रिंशद्भ्याम् ॥ १३ ॥

आभ्यामार्हीयेष्वर्थेषु कन्प्रत्ययो भवति । तिशदन्तत्वादप्राप्ते वचनम् । विंशतिकः । त्रिंशत्कः ॥

असंज्ञायां ड्वन् ॥ १४ ॥

विंशतित्रिंशद्भ्यामार्हीयेष्वर्थेष्वसंज्ञायां विषये ड्वन्प्रत्ययो भवति । विंशत्या क्रीतः (विंशकः । त्रिंशकः । असंज्ञायामिति किम् ।) विंशतिकः । त्रिंशत्कः । संज्ञायां पूर्वसूत्रेण कनेव भवति ॥

द्विगोर्लुगद्विः[1] ॥ १५ ॥

द्विगोः समासादार्हीयेष्वर्थेषूत्पन्नस्य प्रत्ययस्य सकृल्लुग् भवति । नतु द्विः । द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पम् । त्रिशूर्पम् । पञ्चशूर्पम् । अध्यर्धेन शूर्पेण क्रीतमध्यर्धशूर्पम् । अर्धपञ्चमैः शूर्पैः क्रीतमर्धपञ्चमशूर्पम् । अध्यर्धपूर्वपूरणात् समासकन्विधादिति संख्यासंज्ञान्तात् 'तद्धितार्थ' इति द्विगुः । अद्विरिति किम् । द्विः शूर्पेण क्रीतं द्विशौर्पिकम् । अध्यर्धशौर्पिकम् । असंज्ञायामित्येव । पञ्च लोहिन्यः (प्र ? परि)माणमस्य पाञ्चलोहितिकम् ॥

कार्षापणसहस्रसुवर्णशतमानाद्वा ॥ १६ ॥

द्विगोरध्यर्धपूर्वाच्च कार्षापणाद्यन्तात् प्रातिपदिकादार्हीयेष्वर्थेषु उत्पन्नस्य प्रत्ययस्य लुग् वा भवति । द्विकार्षापणं द्विकार्षापणिकम् । अध्यर्धकार्षापणम् । अध्यर्धकार्षापणिकम् । द्विसहस्रम् — द्विसाहस्रम् । अध्यर्धसहस्रम् । अध्यर्धसाहस्रम् । द्विसुवर्णम् । द्विसौवर्णिकम् । द्विशतमानम् । द्विशातमानम् । अध्यर्धशतमानम् । अध्यर्धशातमानम् ॥

द्वित्रिबह्वादेर्निष्कविस्तात् ॥ १७ ॥

द्व्यादिपूर्वाभ्यां निष्कविस्ताभ्यामार्हीयेष्वर्थेषूत्पन्नस्य प्रत्ययस्य लुग्वा भवति । द्विनिष्कं— (द्वैनिष्कं ? द्विनैष्किकम्) । त्रिनिष्कं — (त्रैनिष्कं ? त्रिनैष्किकम् ।) बहुनिष्कं — बहुनैष्किकम् । द्विविस्तं — द्विवैस्तिकम् । त्रिबिस्तं — त्रिबैस्तिकम् । बहुबिस्तं — बहुबैस्तिकम् ॥

विंशतिकात् खः ॥ १८ ॥

द्विगोरध्यर्धपूर्वाच्च विंशतिकान्तात् प्रातिपदिकाद् आर्हीयेष्वर्थेषु खप्रत्ययो भवति । द्विविंशतिकीनः । त्रिविंशतिकीनः । अध्यर्धविंशतिकीनः । विधानसामर्थ्यादस्य लुङ् न भवति ॥

केवलाभ्यां च खारीकाकणीभ्यामीकन्[2] ॥ १९ ॥

द्विगोरध्यर्धपूर्वाच्च खारीकाकण्यन्तात् प्रातिपदिकात् केवलाभ्यां चैताभ्यामार्हीयेष्वर्थेष्वीकन्प्रत्ययो भवति । द्विखारीकः । त्रिखारीकः ।

---

१. 'द्विः । द्वित्रि', २. 'मि' ख. ग. पाठः. ३. 'क्' क. पाठः.

(अर्ध ? अध्यर्ध)खारीकः । द्विकाकणीकः । (अर्ध ? अध्यर्ध)काकणीकः । खारीकः । काकणीकः ॥

पणपादमाषेभ्यो यत् ॥ २० ॥

द्विगोरध्यर्धपूर्वाच्च पणाद्यन्तात् प्रातिपदिकाद् आर्हीयेष्वर्थेषु यत्प्रत्ययो भवति । द्विपण्यम् (अर्ध ? अध्यर्ध)पण्यम् । द्विपाद्यम् । (अर्ध ? अध्यर्ध)-पाद्यम् । अप्राण्यङ्गत्वान्न पदादेशः । द्विमाष्यम् । (अर्ध ? अध्यर्ध)माष्यम् ॥

शताद्वा ॥ २१ ॥

द्विगोरध्यर्धपूर्वाच्च शतान्तात् प्रातिपदिकादार्हीयेष्वर्थेषु यत्प्रत्ययो वा भवति । द्विशत्यं—द्विशतम् । अध्यर्धशत्यम्— अध्यर्धशतम् । कनो लुक् ॥

शाणात् ॥ २२ ॥

द्विगोरध्यर्धपूर्वाच्च शाणान्तात् प्रातिपदिकादार्हीयेष्वर्थेषु यत्प्रत्ययो वा भवति । द्विशाण्यं—द्विशाणम् । अध्यर्धशाण्यम्—अध्यर्धशाणम् ॥

द्वित्र्यादेरण् च[2] ॥ २३ ॥

द्वित्र्यादेः शाणान्तात् प्रातिपदिकात् आर्हीयेष्वर्थेष्वण्प्रत्ययश्चकाराद् यच्च वा भवति । द्वैशाणं—द्विशाण्यं—द्विशाणम् । त्रैशाणं—त्रिशाण्यं—त्रिशाणम् ॥

तेन क्रीतं मूल्यात् ॥ २४ ॥

इतः प्रभृति प्रा(ग्वि ? ग्व)तीनां ठञादीनां समर्थविभक्तयः (प्रत्ययार्थो)श्च निर्दिश्यन्ते । तेनेति तृतीयान्तात् मूल्यवाचिनः क्रीतमित्येतस्मिन्नर्थे यथाविधि ठञादयो भवन्ति । प्रस्थेन क्रीतं प्रास्थिकम् । साप्ततिकम् । नैष्किकम् । पाणिकम् । कांसिकम् । कार्षापणिकम् । शत्यम् । शतिकम् । मूल्यादिति किम् । देवदत्तेन क्रीतं पाणिनिना क्रीतम् । वृत्तौ संख्याविशेषानवगमात् प्रस्थाभ्यां क्रीतं प्रस्थैर्वा क्रीतमिति न भवति । तदवगमे तु भवत्येव । द्वाभ्यां क्रीतं द्विकम् । पञ्चभिर्मुद्गैः क्रीतं मौद्गिकम् । माषिकम् । न ह्येकेन मुद्गेन माषेण वा क्रयः सम्भवति ॥

१. 'द्वा । शिवाभ्याम् । शाणात्' २. 'च वा । तेन' ख. ग. पाठः.

तस्य वापः ॥ २५ ॥

तस्येति षष्ठीसमर्थात् वाप इत्येतास्मिन्नर्थे यथाविधि ठञादयो भवन्ति । उप्यतेऽस्मिन्निति वापः क्षेत्रम् । प्रस्थस्य वापः प्रास्थिकम् । द्रौणिकम् । मौद्गिकम् । खारीकम् ॥

पात्रात् ष्ठन् ॥ २६ ॥

पात्रशब्दात् तस्य वाप इत्यर्थे ष्ठन्प्रत्ययो भवति । ठञोऽपवादः । पात्रस्य वापः पात्रिकः । पात्रिकी । षकारो ङीषर्थः ॥

वातपित्तश्लेष्मसन्निपातेभ्यः शमनकोपनयोः ॥ २७ ॥

वातादिभ्यः षष्ठ्यन्तेभ्यः शमने कोपने वार्थे ठक्प्रत्ययो भवति । वातस्य शमनं कोपनं वा वातिकम् । पैत्तिकम् । श्लैष्मिकम् । पथ्यमपथ्यद्रव्याद्यभिधीयते ॥

तस्य निमित्तं संयोगोत्पातौ ॥ २८ ॥

तस्येति षष्ठ्यन्तान्निमित्तमित्यस्मिन्नर्थे यथाविधि ठञादयो भवन्ति । यत्तन्निमित्तं संयोग उत्पातो वा यदि स भवति । सम्बन्धः संयोगः । प्राणिनां शुभाशुभसूचको महाभूतपरिणाम उत्पातः । सङ्ग्रामस्य निमित्तं संयोग उत्पातो वा साङ्ग्रामिकः । श(क्यः ? त्यः) । श(कितः ? तिकः) । साहस्रः । संयोगोत्पाताविति किम् । शतस्य निमित्तं देवदत्तः ॥

द्व्यचोऽसङ्ख्यापरिमाण*श्वगणवसूर्णोमाभङ्गावर्षाश्मनो यत् ॥ २९ ॥

द्व्यचः प्रातिपदिकात् षष्ठ्यन्तात् सङ्ख्यादिवर्जितान्निमित्तं संयोगोत्पातावित्यस्मिन्नर्थे यत्प्रत्ययो भवति । ठञादीनामपवादः । धनस्य निमित्तं संयोग उत्पातो वा धन्यः । स्वर्ग्यः । यशस्यः । आयुष्यः । असङ्ख्यादेरिति किम् । पञ्चानां निमित्तं संयोग उत्पातो वा पञ्चकः । अष्टकः । प्रास्थिकः । खारीकः । श्वागणिकः । वासिकः । औ(ण ? र्णि)कः । औमिकः ।

१. 'ठ', २. 'स्व', ३. 'ग', ४. 'म' ख. ग. पाठः.

* 'ब्राह्मे'ति काशिका ।

भाङ्गिकः । वार्षिकः । आश्मिकः । अच इति किम् । विजयस्य निमित्तं संयोग उत्पातो वा वैजयिकः ॥

ब्रह्मवर्चसात् ॥ ३० ॥

ब्रह्मवर्चसशब्दात्तस्य निमित्तं संयोग उत्पातो वेत्यस्मिन्नर्थे यत्प्रत्ययो भवति । अजर्थं च वचनम् । ब्रह्मवर्चसस्य निमित्तं संयोग उत्पातो वा ब्रह्मवर्चस्यः । कथं गोर्निमित्तं संयोग उत्पातो वा (गु ? ग)व्यः । 'गोरचि यद्' इति भविष्यति ॥

पुत्राच्छ, च ॥ ३१ ॥

पुत्रशब्दात् तस्य निमित्तं संयोग उत्पातो वेत्यर्थे छप्रत्ययो भवति चकाराद्यच्च । पुत्रस्य निमित्तं संयोग उत्पातो वा पुत्रीयः । पुत्र्यः ॥

पृथिवीसर्वभूमिभ्यामञणौ ॥ ३२ ॥

आभ्यां तस्य निमित्तं संयोग उत्पातो वेत्यस्मिन्नर्थे यथासङ्ख्यमञणौ प्रत्ययौ भवतः । पृथिव्या निमित्तं संयोग उत्पातो वा पार्थिवः । सार्वभौमः । 'सर्वाद् भूमिपुरुषयोश्च' इत्युभयपदवृद्धिः ॥

ईश्वरः[1] ॥ ३३ ॥

तस्येति षष्ठीसमर्थाभ्यां पृथिवीसर्वभूमिभ्यामीश्वर इत्यस्मिन्नर्थे यथासङ्ख्यमञणौ प्रत्ययौ भवतः । पृथिव्या ईश्वरः पार्थिवः । सर्वभूमेः सार्वभौमः ॥

तत्र विदितः[2] ॥ ३४ ॥

तत्रेति सप्तम्यन्ताभ्यां पृथिवीसर्वभूमिभ्यां तत्र विदित इत्यस्मिन्नर्थे यथासङ्ख्यम(णञौ ? ञणौ) प्रत्ययौ भवतः । पृथिव्यां विदितः पार्थिवः । सर्वभूमौ सार्वभौमः ॥

लोकसर्वलोकाभ्यां ठञ्[3] ॥ ३५ ॥

लोकसर्वलोकशब्दाभ्यां तत्र विदित इत्यस्मिन्नर्थे ठञ्प्रत्ययो भवति । ठकोऽपवादः । लोके विदितः लौकिकः । सर्वलोके विदितः सार्वलौकिकः । 'सर्वाद् भूमिपुरुषयोश्च' इति चकारादुभयपदवृद्धिः ॥

---

१. 'रे', २. 'ते' ख. ग. पाठः. ३ 'ञ् । स तत्रास्यै वृ' क. पाठः

## तदत्रास्मै वृद्ध्यायलाभशुल्कोपदं दीयते ॥ ३६ ॥

तदिति प्रथमान्तादत्रास्मै इत्येतयोरर्थयोर्यथाविधि ठञादयो भवन्ति । यत्तत्प्रथमान्तं तद्वृद्ध्यादीनामन्यतमं दीयत इति चेद् भवति । अधमर्णेनोत्तमर्णाय गृहीतधनातिरिक्तं देयं वृद्धिः । ग्रामादिषु स्वामिग्राह्यो भाग आयः । पण्यादेर्मूल्यातिरिक्तद्रव्यं लाभः । रक्षानिर्वेशो राजभागः शुल्कम् । उत्कोच उपदा । प्रस्थोऽस्मिन्नस्मै वा वृद्धिरायो लाभः शुल्कम् उपदा वा दीयते प्रास्थिकम् । द्रौणिकम् । (कं? कां)सिकम् । कार्षापणिकम् । शत्यं शतिकं पञ्चकं दशकमिति । वृद्ध्यादय इति किम् । पञ्चमूल्यम(स्मै त? स्मिन्न)स्मै वा दीयते ॥

## पूरणार्धाट्ठन् ॥ ३७ ॥

पूरणप्रत्ययान्तादर्धशब्दाच्च प्रथमान्तादस्मिन्नस्मै वा दीयत इत्यनयोरर्थयोष्ठन्प्रत्ययो भवति । यत्तत् प्रथमान्तं वृद्ध्यादि चेत् तद् भवति । पञ्चमोऽस्मिन्नस्मै वा वृद्ध्यादि दीयते पञ्चमिकः[१] अर्धिकः ॥

## भागाद्यच्च ॥ ३८ ॥

भागशब्दादस्मिन्नस्मै वा वृद्ध्यादीनामन्यतमं दीयत इत्यर्थे यत्प्रत्ययश्चकारात् ठंश्च भवति । भागोऽस्मिन्नस्मै वा वृद्ध्यादीनामन्यतमो दीयते भाग्यः । भागिकः ॥

## तदस्य परिमाणम् ॥ ३९ ॥

तदिति प्रथमान्तादस्येति षष्ठ्यर्थे यथाविधि ठञादयो भवन्ति । यत्तत् प्रथमान्तं परिमाणं चेद् भवति । प्रस्थः परिमाणमस्य प्रास्थिकः व्रीहिः । द्रौणिकः । खारीकः * खारशतिकः । खारसहस्रिकः । तदिति वर्तमाने पुनस्तद्ग्रहणं पुनर्विधानार्थम् । तेनोत्तरसूत्रे 'द्विगोर्लुगद्विरि'ति न लुग् भवति । द्वे षष्ठी जीवितपरिमाणमस्य द्विषाष्टिकः । द्विसाप्ततिकः ॥

---

१. 'पा' ख. ग. पाठः.

---

* 'तदस्य परिमाणमि'त्यत्र योगविभागः कर्तव्य इति दर्शयितुं 'अन्येभ्योऽपि दृश्यते खारशताद्यर्थमि'ति वार्त्तिककारवचनात् खारशब्दोऽकारान्तोऽस्तीति विज्ञायते ॥

जीवितस्य च ॥ ४० ॥

जीवितस्य च यत् परिमाणं ततः प्रथमान्तादस्येति षष्ठ्यर्थे सर्वे यथाविधि ठञादयो भवन्ति । षष्टिर्जीवितपरिमाणमस्य षाष्टिकः । वार्ष-सप्ततिकः इति । कथं पुनः षष्ट्यादयो जीवितपरिमाणं भवन्ति । वृत्तौ वर्षशब्दलोपात् । यथा 'शतायुर्वै पुरुषः' 'शतायुषा हविषेमं पुनर्दुरि'ति । एवन्तर्हि तदस्य परिमाणमित्यनेनैव सिद्धम् । न सिद्ध्यति । प्रास्थिक इत्यादौ व्रीह्यादय एव परिमेयास्त एव प्रत्ययार्थाः । अत्र तु जीवितं परिमेयं पुरुषस्तु प्रत्ययार्थ इति ॥

सङ्ख्यायाः सङ्घसूत्राध्ययनेषु ॥ ४१ ॥

सङ्ख्याशब्देभ्यस्तदस्य परिमाणमित्यस्मिन्नर्थे यथाविधि ठञादयो भवन्ति । यत्तदस्येति निर्दिष्टं सङ्घसूत्राध्ययनानि चेत् तानि भवन्ति । पञ्च परिमाणमस्य सङ्घस्य पञ्चकः । सप्तकः । अष्टावध्यायाः परिमाणमस्य अष्टकं, पाणिनीयं सूत्रम् । त्रिकं काशकृत्स्नम् । दशकं वैयाघ्रपद्यम् । शतकं निदानम् । पञ्चकः पाठोऽधीतः । सप्तकः । दशकः । त्रिक इति स्वार्थ एवात्र प्रत्ययो भवति । नन्वध्यायानां समूहः सूत्रं तत्र सङ्घान्न भिद्यते । नैवम् । प्राणिनां समूहे सङ्घशब्दो रूढः । अध्ययनात् तर्हि न भिद्यते । तदपि नास्ति । अधीतिरध्ययनं पाठस्तच्च सूत्रं न भवति ॥

संज्ञायां च ॥ ४२ ॥[1]

संज्ञायां च विषये सङ्ख्याशब्देभ्यस्तदस्य परिमाणमित्यस्मिन्नर्थे यथाविधि ठञादयो भवन्ति । पञ्च सङ्ख्या परिमाणमेषां पञ्चकाः शकुनयः । त्रिकाः शालङ्काय(नः ? नाः) । सप्तको ब्रह्मवृक्षः । अष्टको राजर्षिः । योग-विभागकरणात् संज्ञायां पञ्चैव पञ्चकाः । त्रय एव त्रिका इति स्वार्थ एवात्र प्रत्ययो भवति ॥

पङ्क्तिः[2] ॥ ४३ ॥

पञ्चन्शब्दात् तदस्य परिमाणमित्यर्थे संज्ञायां तिप्रत्ययष्टिलोपश्च

१. 'पु ॥ संज्ञायां च' ख. ग. पाठः. २. 'ङ्क्तिर्विंशति' ख. ग. पाठः.

नपात्यते । पञ्च पादाः परिमाणमस्याः पङ्क्तिः छन्दः । कथं ब्राह्मणपङ्क्तिः पिपीलिकापङ्क्तिरिति । पचि विस्तार इत्यस्मात् क्तिनेव भविष्यति ॥

विंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीति-नवतिशतम् ॥ ४४ ॥

विंशत्यादयः शब्दाः संज्ञायां विषये तदस्य परिमाणमित्यस्मिन्नर्थे साधवो भवन्ति । द्वेर्दशदर्थे विन्भावः शतिश्च प्रत्ययः । द्वौ दश(त् ? तौ) परिमाणमेषां सङ्ख्येयानामस्य वा सङ्ख्यानस्य विंशतिः । त्रेस्त्रि(न्)भावः शच्च प्रत्ययः । त्रयः दशतः परिमाणमेषां सङ्ख्येयानामस्य वा सङ्ख्यानस्य त्रिंशत् । चतुरश्चत्वारिन्भावः शच्च प्रत्ययः । चत्वारो दशतः परिमाणमेषां सङ्ख्येयानामस्य वा सङ्ख्यानस्य चत्वारिंशत् । पञ्चन आत्वं च । पञ्च दशतः परिमाणमेषां सङ्ख्येयानामस्य वा सङ्ख्यानस्य पञ्चाशत् । षषस्तिः षश्च । षड् दशतः परिमाणमेषां सङ्ख्येयानामस्य वा सङ्ख्यानस्य षष्टिः । सप्तनस्तिः । सप्त दशतः परिमाणमेषां सङ्ख्येयानामस्य वा सङ्ख्यानस्य सप्ततिः । अष्टनोऽ(शि ? शी)च । अष्टौ दशतः परिमाणमेषां सङ्ख्येयानामस्य वा सङ्ख्यानस्याशीतिः । नवम्यस्तिः । नव दशतः परिमाणमेषां सङ्ख्येयानामस्य वा सङ्ख्यानस्य नवतिः । दशानां शभावस्तश्च । दश दशतः परिमाणमेषां सङ्ख्येयानामस्य वा सङ्ख्यानस्य शतम् ॥

सहस्रायुतनियुतप्रयुतार्बुदन्यर्बुदादयश्च ॥ ४५ ॥

सहस्रादयः शब्दास्तदस्य परिमाणमित्यर्थे संज्ञायां साधवो भवन्ति । दश शतानि परिमाणमेषां सङ्ख्येयानामस्य वा सङ्ख्यानस्य सहस्रम् । एवं दशसहस्राणि अयुतम् । दशायुतानि नियुतम् । दश नियुतानि प्रयुतम् । दश प्रयुतानि अर्बुदम् । दशार्बुदानि न्यर्बुदमिति । आदिग्रहणाल्लक्षकोटि-खर्वनिखर्वमित्यादयो भवन्ति । यदत्र लक्षणेनानुपपन्नं तत्सर्वं निपातनात् सिद्धम् । लिङ्गसङ्ख्यानियमश्च विंशत्यादीनां निपातनादेव भवन्ति ॥

पञ्च(द्)दशतौ वर्गे वा ॥ ४६॥

पञ्च(द्)दशदित्येतौ शब्दौ तदस्य परिमाणमित्यस्मिन् विषये वर्गेऽभिधेये वा निपात्येते । 'सङ्ख्यायाः' इति कनि प्राप्तेऽ(न्? त्)-प्रत्ययो वा निपात्यते । पञ्च परिमाणमस्य वर्गस्य पञ्चद्वर्गः । पञ्चकः । दश परिमाणमस्य वर्गस्य दशत् । दशकः ॥

स्तोमे डट् ॥ ४७ ॥

संख्यावाचिनः प्रातिपदिकात् तदस्य परिमाणमित्यस्मिन्नर्थे डट्-प्रत्ययो भवति । ऋगादीनां समूहः स्तोमः । पञ्चदश ऋचः परिमाणमस्य पञ्चदशस्तोमः । पञ्चदशी पङ्क्तिः । डकारष्टिलोपार्थः । टकारो ङीबर्थः ॥

त्रिंशच्चत्वारिंशद्भ्यां ब्राह्मणाख्यायां डण् ॥ ४८ ॥

आभ्यां तदस्य परिमाणमित्यस्मिन्नर्थे डण्प्रत्ययो भवति । प्रत्ययान्तश्चेद् ब्राह्मणानामाख्या भवति । त्रिंशदध्यायाः परिमाणमेषां त्रैंशानि ब्राह्मणानि । चत्वारिंशानि । कानिचिदेवोच्यन्ते । आख्याग्रहणं किम् । त्रिंशत्कानि चत्वारिंशत्कानि ॥

भृतिवस्नांशाः ॥ ४९ ॥

सङ्ख्याया इति वर्तते । तद्वाचिनः प्रथमान्तादस्येति षष्ठ्यर्थे यथाविधि ठञादयो भवन्ति । यत्तत् प्रथमान्तं भृत्यादीनामन्यतमं चेद् भवति । भृतिर्वेतनम् । वस्नो नियतकालक्रयमूल्यम् । अंशो भागः । पञ्चास्य भृतिर्वा वस्नो वा अंशो वा पञ्चकः । सप्तकः । अष्टकः । शत्यः । शतिकः । (स? सा)हस्रः ॥

तत् पचति द्रोणादण् च ॥ ५० ॥

तदिति द्वितीयान्ताद् द्रोणशब्दात् पचतीत्यस्मिन्नर्थेऽण् चकाराद् यथाविहितं च ठञ्प्रत्ययो भवति । द्रोणं पचति द्रौणी ब्राह्मणी । द्रौणिकी ॥

सम्भवत्यवहरति च ॥ ५१ ॥

तदिति द्वितीयान्तात् प्रातिपदिकात् सम्भवत्यवहरति चकारात्

पचतीति चार्थे यथाविधि ठञादयो भवन्ति। तत्राधेयस्य प्रमाणानतिरेकेण धारणं सम्भवः। अतिरेकेणावहारः। प्रस्थं सम्भवत्यवहरति वा प्रास्थिकी स्थाली। प्रास्थिकः कटाहः। खारिकः। प्रस्थं पचती प्रास्थिकी ब्राह्मणी॥

पात्राचिताढकेभ्यः खो वा॥ ५२॥

पात्रादिभ्यो द्वितीयान्तेभ्यः सम्भवत्यादिष्वर्थेषु खप्रत्ययो वा भवति। पक्षान्तरे तु यथाविधि ठञादयः। पात्रं सम्भवत्यवहरति पचति वा पात्रीणा—पा(त्री? त्रिकी)। आचितीना—आचितिकी। आढकीना—आढ(ति? कि)की॥

द्विगोः ष्ठंश्च॥ ५३॥

पात्राचिताढकान्ताद् द्विगोर्द्वितीयासमर्थात् सम्भवत्यादिष्वर्थेषु (ठ? ष्ठ)न्प्रत्ययश्चकारात् खश्च वा भवति। पक्षान्तरे ठञ्। तस्य च 'द्विगो(रनपत्येऽजादे)र्लुगद्धिः' इति लुक्। द्विपात्रं सम्भवत्यवहरति पचति वा द्विपात्रिकी द्विपात्रीणा—द्विपात्री। द्व्याचितिकी—द्व्याचितीना—द्व्याचि(ती? ता)। द्व्याढकिकी—द्व्याढकीना—द्व्याढकी। षकारो ङीषर्थः। नकारः स्वरार्थः॥

कुलिजाल्लुक् च वा॥ ५४॥

कुलिजान्ताद् द्विगोर्द्वितीयासमर्थात् सम्भवत्यादिष्वर्थेषु (ठं? ष्ठ)न् प्रत्ययः खश्च वा यथाविहितस्य च ठञो लुग्वा भवति। तेन चातूरूप्यं सम्पद्यते। द्वे कुलिजे सम्भवत्यवहरति पचति वा द्विकुलिजिकी — द्विकुलिजीना — द्विकुलिजा — द्वैकुलिजिकी। 'परिमाणस्य शाणाकुलिजस्य संज्ञायाम्' इत्युत्तरपदवृद्ध्यभावः॥

हरतिवहत्यावहति वंशकुटजबल्बजमूलखट्वा-स्थूणाश्लक्ष्णाक्षाश्मेक्षुभ्यो भारात्॥ ५५॥

वंशादिभ्यः परो यो भारशब्दस्तदन्ताद् द्वितीयासमर्थात् हरति वहत्यावहतीत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। वं(शे? श) भारं हरति

१. 'भ' क. पाठः

वहत्यावहति वा वांशभारिकः । कौटजभारिकः । बाल्बजभारिकः । मौलभारिकः । खाट्वाभारिकः । स्थौणाभारिकः । श्लाक्ष्णभारिकः । आक्षभारिकः । आश्मभारिकः । ऐक्षुभारिकः ॥

भारेभ्यश्च वंशादिभ्यः ॥ ५६ ॥

भारभूतेभ्यश्च वंशादिभ्यो द्वितीयान्तेभ्यो हरत्यादिष्वर्थेषु यथाविहितं प्रत्ययो भवति । भारभूतान् वंशान् हरति वहत्यावहति वांशिकः । कौटजिकः । बाल्बजिकः । मौलिकः । खाट्विकः । स्थौणिकः । श्लाक्ष्णिकः । आश्मिकः । ऐक्षवकः । भारेभ्य इति किम् । वंशं वहति ॥

द्रव्यवस्त्राभ्यां कन्ठनौ ॥ ५७ ॥

द्रव्यवस्त्रशब्दाभ्यां द्वितीयान्ताभ्यां हरत्यादिष्वर्थेषु यथासङ्ख्यं कन् ठन् इत्येतौ प्रत्ययौ भवतः । द्रव्यं हरति वहत्यावहति वा द्रव्यकः । वस्त्रिकः ॥

अर्हति ॥ ५८ ॥

तदिति द्वितीयान्तादर्हतीत्यस्मिन्नर्थे यथाविधि ठञादयो भवन्ति । वेशमर्हति वैशिकः । वास्त्रिकः । श्वैतच्छत्रिकः । चामरिकः । शत्यः शतिकः ॥

छेदभेदद्रोहदोहनर्तकर्षसम्प्रयोगविप्रयोगविप्रकर्षप्रेषणसम्प्रश्नेभ्यो नित्यम् ॥ ५९ ॥

छेदादिभ्यो द्वितीयान्तेभ्यो नित्यं सर्वकालमर्हतीत्यस्मिन्नर्थे यथाविधि ठञादयो भवन्ति । नित्यं छेदमर्हति छैदिकः । भैदिकः । द्रौहिकः । दौहिकः । नार्तिकः । कार्षिकः । साम्प्रयोगिकः । वैप्रयोगिकः । वैप्रकर्षिकः । प्रैषणिकः । साम्प्रश्निकः ॥

विरागाद्विरङ्गश्च ॥ ६० ॥

विरागशब्दाद् द्वितीयान्ताज्जित्यमर्हतीत्यर्थे यथाविधि प्रत्ययस्तत्सान्नियोगेन च विरागस्य विरङ्गादेशो भवति । नित्यं विरागमर्हति वैरङ्गिकः ॥

---

१. 'आर्हतभोजनादिभ्यः' ख. ग. पाठः.

शीर्षच्छेदाद्यच्च ॥ ६१ ॥

शीर्षच्छेदशब्दाद् द्वितीयान्तान्नित्यमर्हतीत्यर्थे यत् चकाराद्यथाविहितश्च ठञ्प्रत्ययो भवति । शीर्षच्छेदं नित्यमर्हति शीर्षच्छेद्यः चोरः । शैर्षच्छेदिकः ॥

यज्ञाद् घस्तत्कर्म च ॥ ६२ ॥

यज्ञशब्दाद् यज्ञं यज्ञकर्म चार्हतीत्यर्थे घप्रत्ययो भवति । यज्ञमर्हति यज्ञियः यजमानः । यज्ञकर्मार्हति यज्ञियः ऋत्विक् ॥

पात्राद्यश्च ॥ ६३ ॥

पात्रशब्दाद् द्वितीयान्तादर्हतीत्यर्थे यप्रत्ययः चकाराद् घश्च भवति । पात्रमर्हति पात्रियः । पात्र्यः ॥

दण्डमुसलमेधवधमधुपर्कार्घमेधोदकेभकशायुगेभ्यः ॥ ६४ ॥

दण्डादिभ्यो द्वितीयान्तेभ्योऽर्हतीत्यस्मिन्नर्थे यप्रत्ययो भवति । दण्डमर्हति दण्ड्यः । मुसल्यः । मेध्यः । वध्यः । मधुपर्क्यः । अर्घ्यः । मेध्यः । उदक्यः । इभ्यः । कश्यः । युग्यः ॥

दक्षिणकडङ्करस्थालीबिलेभ्यश्छ च ॥ ६५ ॥

दक्षिणादिभ्यो द्वितीयान्तेभ्योऽर्हतीत्यर्थे छश्चकाराद्यश्च प्रत्ययो भवति । दक्षिणामर्हति दक्षिणीयः ब्राह्मणः दक्षिण्यः । कडङ्करीयः कडङ्कर्यः । स्थालीबिलीयास्तण्डुलाः । स्थालीबिल्याः ॥

आर्त्विज्यं चर्त्विजः खञ् ॥ ६६ ॥

ऋत्विक्छब्दादृत्विजं तत्कर्म चार्हतीत्यर्थे खञ्प्रत्ययो भवति । ऋत्विजमर्हति आर्त्वि(जि ? जी)नो यजमानः । ऋत्विक्कर्मार्हति आर्त्वि(जि ? जी) नो ब्राह्मणः ॥

अधृष्टाकार्ययोः शालीनकौपीने ॥ ६७ ॥

शालीनकौपीन इत्येतौ तदर्हतीत्यर्थे यथासङ्ख्यमधृष्टाकार्ययोराभधेययोर्निपात्येते । शालाः प्रवेष्टुमर्हति शालीनोऽधृष्टः । कूपं प्रवेष्टुमर्हति

१. 'तिंच' ख. ग. पाठः.

कौपीनमकार्यम् । तत्साधर्म्यादन्यदपि गोपनीयं गुह्यादि कौपीनम् । तत्साहचर्यात् तदाच्छादनमपि कौपीनमुच्यते । आर्हीयाणां पूर्णोऽवधिः । अतः परं प्राग्वतेः ठञेव भवति ॥

पारायणतुरायणचान्द्रायणेभ्यो वर्तयति ॥ ६८ ॥

पारायणादिभ्यो द्वितीयान्तेभ्यो वर्तयतीत्यस्मिन्नर्थे ठञ्प्रत्ययो भवति । पारायणमध्ययनविशेषः । तं वर्तयति अधीते पारायणिकः छात्रः । तुरायणं यज्ञविशेषः । तं वर्तयति प्रारभते तौरायणिकः । चान्द्रायणं व्रतविशेषः । तं वर्तयति समापयति चान्द्रायणिकः तपस्वी ॥

संशयादापन्नः ॥ ६९ ॥

संशयशब्दाद् द्वितीयान्तादापन्न इत्यर्थे ठञ्प्रत्ययो भवति । संशयमापन्नः प्राप्तः सांशयिकः ॥

योजनाद् गच्छति ॥ ७० ॥

योजनशब्दाद् द्वितीयान्ताद् गच्छतीत्यर्थे ठञ्प्रत्ययो भवति । योजनं गच्छति यौजनिकः ॥

क्रोशयोजनादेः शतात् ततोऽभिगमनार्हे च ॥ ७१ ॥

क्रोशपूर्वाद्योजनपूर्वाच्च शतशब्दात् तद्गच्छति ततोऽभिगमनमर्हति इति चार्थे ठञ्प्रत्ययो भवति । क्रोशशतं गच्छति क्रोशशतादभिगमनमर्हतीति वा क्रौशशतिकः । एवं यौजनशतिकः ॥

पथः *ष्ठन् ॥ ७२ ॥

पथिन्शब्दात् तद्गच्छतीत्यस्मिन्नर्थे ष्ठन्प्रत्ययो भवति । पन्थानं गच्छति पथिकः । षकारो ङीषर्थः । पथिकी ॥

णः पन्थश्च नित्यम् ॥ ७३ ॥

पथिन्शब्दाद् द्वितीयान्तान्नित्यं गच्छतीत्यर्थे णप्रत्ययः पन्थादेशश्चास्य भवति । नित्यं पन्थानं गच्छति पान्थः । पान्था ॥

---

* 'ष्कन्' इति काशिकावृत्तिपाठः.

अजशङ्कूत्तरवारिजाङ्गलकान्तारादेस्तेनाहृते च ॥ ७४ ॥

अजाद्यादेः पथिन्शब्दात् तृतीयान्ताद् गच्छत्याहृत इत्यनयोर र्थयोः ठञ्प्रत्ययो भवति । अजपथेन गच्छत्याहृतो वा आजपथिकः । शाङ्कुपथिकः । औत्तरपथिकः । वारिपथिकः । जाङ्गलपथिकः । कान्तार-पथिकः ॥

स्थलादेः ॥ ७५ ॥

स्थलादेः पथिन्शब्दात् तृतीयान्तात् गच्छत्याहृत इत्येतयोरर्थयोः ठ(न्?ञ्)प्रत्ययो भवति । स्थलपथेन गच्छत्याहृतो वा स्थालपथिकः । योगविभाग उत्तरार्थः ॥

मधुकमरिचयोरण् ॥ ७६ ॥

स्थलादेः पथिन्शब्दात् तेनाहृते मधुके मरिचे चाणप्रत्ययो भवति । स्थलपथेनाहृतं मधुकं मरिचं वा स्थालपथम् ॥

कालात् ॥ ७७ ॥

अधिकारोऽयम् । 'तस्य महानाम्न्यादिभ्य' इतिवत् कालवाचिनः शब्दाः प्रकृतित्वेनाविक्रियन्ते ॥

तेन निर्वृत्तम् ॥ ७८ ॥

तेनेति तृतीयान्तात् कालवाचिनो निर्वृत्तमित्येतस्मिन्नर्थे ठञ्प्रत्ययो भवति । अह्ना निर्वृत्तमाह्निकम् । मासिकम् । आर्धमासिकम् । सांवत्सरिकम् ॥

तस्मै (हृ?भृ)तोऽधीष्टः ॥ ७९ ॥

कालवाचिनः शब्दाच्चतुर्थ्यन्तात् (हृ?भृ)तोऽ(भी?धी)ष्ट इत्यनयो-रर्थयोः ठञ्प्रत्ययो भवति । मासाय (हृ?भृ)तः मासिकः कर्मकरः । मासा-(द्धि?याधी)ष्टो मासिकः । उपाध्यायः । एवं वार्षिकं सांवत्सरिकम् ॥

तं भूतो भावी ॥ ८० ॥

कालवाचिनो द्वितीयान्ताद् भूतो भावीत्यनयोरर्थयोष्ठ(न्?ञ्)प्रत्ययो भवति । मासं भूतो भावी वा मासिकः । आर्धमासिकः । वार्षिकः । सांवत्सरिकः । अतः परं निर्वृत्तादिषु पञ्चस्वर्थेषु यथासम्भवं प्रत्यया भवन्ति ॥

## मासाद् वयसि यत्खञौ[1] ॥ ८१ ॥

मासशब्दाद् द्वितीयान्ताद् भूत इत्यर्थे वयसि गम्यमाने यत्खञौ प्रत्ययौ भवतः । मासं भूतो दारकः मास्यः मासीनः । वयसीति किम् । मासिकः सम्भोगः । ञकारः 'तद्धितावृद्धिहेतुररक्तविकारयोः' इति पुंवद्भावप्रतिषेधार्थः । मासीना दुहितास्य मासीनादुहितृकः ॥

## द्विगोर्यप् ॥ ८२ ॥

मासान्ताद् द्विगोस्तं भूत इत्यर्थे वयसि गम्यमाने यप्प्रत्ययो भवति । द्वौ मासौ भूतः द्विमास्यः दारकः । पकारः स्वरार्थः ॥

## षण्मासाण्ण्यच्च वा ॥ ८३ ॥

षण्मासशब्दात् तं भूत इत्यर्थे वयसि गम्यमाने ण्यच्चकाराद् यप्-प्रत्ययश्च वा भवति । षण्मासान् भूतः षाण्मास्यः । षण्मास्यः । षाण्मासिकः ॥

## अवयसि ठंश्च[2] ॥ ८४ ॥

षण्मासशब्दाद् वयसोऽन्यत्र निर्वृत्तादिष्वर्थेषु ठन् चकारा(द्य ? ण्य)-च्च प्रत्ययो भवति । षड्भिर्मासैर्निर्वृत्तः षड्भ्यो मासेभ्यो भृतोऽधीष्टो वा षण्मासान् भूतो भावी वा षण्मासिकः । (ष ? षा)ण्मास्यः ॥

## समायाः खः ॥ ८५ ॥

समाशब्दात् कालवाचिनो निर्वृत्तादिष्वर्थेषु खप्रत्ययो भवति समया निर्वृत्तः समायै भृतोऽधीष्टो वा समं भूतो भावी वा समीनः ॥

## द्विगोर्वा ॥ ८६ ॥

समाशब्दान्ताद् द्विगोर्निर्वृत्तादिष्वर्थेषु खप्रत्ययः खञो लुक् च वा भवति । द्वाभ्यां समाभ्यां निर्वृत्तो भृतोऽधीष्टो वा द्वे समे भूतो भावी वा द्विसमीनः — द्वैसमीनः ॥

---

१. 'ञौ । खञौ द्वि', २. 'ठ' ख ग पाठः.

## राज्यहस्संवत्सराच्च ॥ ८७ ॥

राज्याद्यन्ताद् द्विगोर्निर्वृत्तादिष्वर्थेषु खप्रत्ययो भवति । द्वाभ्यां रात्रिभ्यां निर्वृत्तो भूतोऽधीष्टो वा द्वे रात्री भूतो भावी वा द्विरात्रीणः—द्वैरात्रिकः । द्व्यहीनः । द्वैयह्निकः । द्विसंवत्सरीणः । द्विसांवत्सरिकः । 'सङ्ख्यायाः संवत्सरसङ्ख्ययोः' इत्युत्तरपदवृद्धिः ॥

## वर्षाल्लुक् च ॥ ८८ ॥

वर्षशब्दान्ताद् द्विगोर्निर्वृत्तादिष्वर्थेषूत्पन्नस्य प्रत्ययस्य ....
... .... ... ... ॥

## चित्तवति नित्यम् ॥ ८९ ॥

... .... .... ....
प्राणिन्यभिधेये नित्यं लुग् भवति । द्विवर्षो दारकः । चित्तवतीति किम् । द्विव(र्ष ! र्षी)णः सरथः ॥

## तेन पच्यन्ते षष्टिरात्रात् कन् रात्रलोपश्च संज्ञायाम् ॥ ९० ॥

षष्टिरात्रशब्दात् तृतीयान्तात् पच्यन्त इत्यस्मिन्नर्थे संज्ञायां कन्प्रत्ययो रात्रशब्दलोपश्च भवति । षष्टिरात्रेण पच्यन्ते षष्टिकाः शालयः । संज्ञाग्रहणान्मुद्गादिष्वतिप्रसङ्गो न भवति । बहुवचनमतन्त्रम् । एकयोरपि भवति ॥

## परिजय्यलभ्यकार्यसुकराणि ॥ ९१ ॥

तेनेति तृतीयान्तात् कालवाचिनः परिजय्यादिष्वर्थेषु ठञ्प्रत्ययो भवति । मासेन परिजय्यो लभ्यः कार्यः सुकरो वा मासिकः । सांवत्सरिकः ॥

## तदस्य ब्रह्मचर्यम् ॥ ९२ ॥

तदिति द्वितीयान्तात् कालवाचिनः शब्दादस्येति षष्ठ्यर्थे ठञ्प्रत्ययो भवति । ब्रह्मचर्यं चेत् प्रकृत्यर्थस्य व्याप्तं प्रत्ययार्थस्य च द्योत्येन सम्बान्धि भवति । मासं ब्रह्मचर्यमस्य मासिको ब्रह्मचारी । आर्धमासिकः । सांवत्सरिकः ॥

---

१. 'र्या' ख. ग. पाठः.

सोऽस्य ब्रह्मचर्ये ॥ ९३ ॥

स इति प्रथमान्तात् कालवाचिनः शब्दात् अस्येति षष्ठ्यर्थे ब्रह्मचर्ये अभिधेये ठञ्प्रत्ययो भवति । मासोऽस्य ब्रह्मचर्यस्य मासिकं ब्रह्मचर्यम् । आर्धमासिकम् । सांवत्सरिकम् ॥

तस्य महानाम्न्यादित्यव्रतगोदानादिभ्यः ॥ ९४ ॥

तस्येति षष्ठीसमर्थेभ्यो महानाम्न्यादिभ्यो ब्रह्मचर्येऽभिधेये ठञ् प्रत्ययो भवति । महानाम्न्यो नाम ऋचः तासां सम्बन्धि ब्रह्मचर्यं माहानाम्निकम् । आदित्यमादित्यव्रतिकम् । गौदानिकम् । आदिग्रहणाद्यथादर्शनमन्येभ्योऽपि भवन्ति ॥

तच्चरतीति चैतेभ्यो व्रतवृत्तिभ्यः ॥ ९५ ॥

महानाम्न्यादिभ्यः शब्देभ्यः साहचर्याद् व्रतवृत्तिभ्यस्तदिति द्वितीयान्तेभ्यश्चरतीत्यर्थे ठञ्प्रत्ययो भवति । महानाम्नीश्चरति माहानाम्निकः । आदित्यव्रतानि चरति आदित्यव्रतिकः । गौदानिकः ॥

देवव्रततिलव्रतावान्तरदीक्षादिभ्यो डिनिः ॥ ९६ ॥

(देवव्रतादिभ्यो) द्वितीयान्तेभ्यश्चरतीत्यर्थे डिनिप्रत्ययो भवति । देवव्रतानि चरति देवव्रती । तिलव्रती । अवान्तरदीक्षी । आदिग्रहणान्महाव्रती इत्यादयो भवन्ति । डित्करणमुत्तरत्र टिलोपार्थम् ॥

ड्वुंश्चाष्टाचत्वारिंशतो वर्षाणाम् ॥ ९७ ॥

वर्षाणां सम्बन्धिनोऽष्टाचत्वारिंशतो वर्षशब्दाद् व्रतवृत्तेर्द्वितीयान्ताच्चरतीत्यर्थे ड्वुन् चकाराद् डिनिश्च प्रत्ययो भवति । अष्टाचत्वारिंशद्वर्षसहचरितं व्रतमष्टाचत्वारिंशत् तच्चरति अष्टाचत्वारिंशकः । अष्टाचत्वारिंशी ॥

चातुर्मास्येभ्यो यलोपश्च ॥ ९८ ॥

चातुर्मास्यशब्दाद् बहुवचनान्ताद् व्रतवृत्तेस्तच्चरतीत्यर्थे ड्वुन् डिनिश्च प्रत्ययो यलोपश्च भवति । चातुर्मास्या नाम यज्ञाः । तत्सहचरितानि व्रतानि चातुर्मास्यानि तानि चरति चातुर्मासकः चातुर्मासी ॥

---

१. 'ड्' ख. ग. पाठः.

तस्य दक्षिणा यज्ञेभ्यः ॥ ९९ ॥

यज्ञवाचिभ्यस्तस्येति षष्ठयर्थे दक्षिणेत्येतस्मिन्नर्थे ठञ्प्रत्ययो भवति। अग्निष्टोमस्य दक्षिणा आग्निष्टोमिकी। वाजपेयिकी। राजसूयिकी। ऐकाहिकी। द्वादशाहिकी॥

तत्र दीयते ॥ १०० ॥

तत्रेति सप्तम्यन्तेभ्यो यज्ञवाचिभ्यो दीयत इत्यर्थे ठञ्प्रत्ययो भवति। अग्निष्टोमे दीयते आग्निष्टोमिकम्। वाजपेयिकम्। राजसूयिकम्॥

कालात् कार्ये च भववत् ॥ १०१ ॥

कालवाचिनः सप्तम्यन्तात् कार्यं दीयत इति चानयोरर्थयोर्भव इव प्रत्ययविधिर्भवति। यथा मासे भवं मासिकं सांवत्सरिकं वासन्तिकं प्रावृषेण्यं वार्षिकं हैमनं सायन्तनमिति ह भवति, एवं मासे दीयते कार्यं वा मासिकम्। वासन्तिकम्। प्रावृषेण्यम्। वार्षिकम्। हैमनमिति भवति॥

व्युष्टनित्यनिष्क्रमणप्रवेशनतीर्थसङ्ग्रामसङ्घाताग्निपदपीलुमूलादिभ्योऽण् ॥ १०२ ॥

व्युष्टादिभ्यः सप्तम्यन्तेभ्यः कार्यं दीयत इत्यनयोरर्थयोरण्प्रत्ययो भवति। व्युष्टे दीयते कार्यं वा वैयुष्टम्। नैत्यम्। नैष्क्रमणम्। प्रावेशनम्। तैर्थम्। साङ्ग्रामम्। साङ्घातम्। आग्निपदम्। पैलुमूलम्। आदिग्रहणात् प्रावासम्। औपवासमित्यादयो भवन्ति॥

यथाकथाचाण्णः ॥ १०३ ॥

यथाकथाचशब्दोऽव्ययसमुदायोऽनादरे वर्तते। तस्माद् दीयते कार्यमित्यनयोरर्थयोः णप्रत्ययो भवति। यथाकथाच दीयते कार्यं वा याथाकथाचा दक्षिणा॥

तेन हस्ताद्यत् ॥ १०४ ॥

तेनेति तृतीयान्ताद्धस्ताद् दीयते कार्यमित्यनयोरर्थयोर्यत्प्रत्ययो भवति। हस्तेन दीयते कार्यं वा हस्त्यम्॥

1. 'र्था' ख, ग. पाठः.

शोभते ॥ १०५ ॥

तेनेति तृतीयान्तात् शोभत इत्यस्मिन्नर्थे ठञ्प्रत्ययो भवति । कर्णवेष्टकाभ्यां शोभते कार्णवेष्टकिकं मुखम् । वास्त्रयुगिकं शरीरम् । असमर्थनञ्समासश्चास्मिन् विषये भवति । कर्णवेष्टकाभ्यां न शोभते अकार्णवेष्टकिकम् । अवास्त्रयुगिकम् ॥

कर्मवेशाभ्यां यत् ॥ १०६ ॥

आभ्यां तृतीया(न्ता)भ्यां शोभते इत्यर्थे यत्प्रत्ययो भवति । कर्मणा शोभते कर्मण्यः । वेशेन शोभते वेश्या । असमर्थनञ्समासश्च भवति । अकर्मण्यः । अवेश्या ॥

तस्मै प्रभवति समस्तापनाहग्रामयोगवेशपेषघातपरायमोदनेभ्यः ॥ १०७ ॥

समः परे ये तापादयस्तदन्तेभ्यः प्रातिपदिकेभ्यश्चतुर्थ्यन्तेभ्यः प्रभवतीत्यर्थे ठञ्प्रत्ययो भवति । सन्तापाय प्रभवति सान्तापिकः । सान्नाहिकः । साङ्ग्रामिकः । सांयोगिकः । सांवेशिकः । साम्पेषिकः । साङ्घातिकः । साम्परायिकः । साम्मोदनिकः । 'सर्वत्र पर्याप्त्यर्थैः' इति चतुर्थी ॥

निरः पेषघोषाभ्याम् ॥ १०८ ॥

निरः परौ यौ पेषघोषौ तदन्ताभ्यां प्रातिपदिकाभ्यां तस्मै प्रभवतीत्यर्थे ठञ्प्रत्ययो भवति । निष्पेषाय प्रभवति नैष्पेषिकः । नैर्घोषिकः ॥

निव्युपेभ्यः सर्गात् ॥ १०९ ॥

निव्युपेभ्यः परो यः सर्गशब्दस्तदन्तात् प्रातिपदिकात् तस्मै प्रभवतीत्यर्थे ठञ्प्रत्ययो भवति। निसर्गाय प्रभवति नैसर्गिकः । वैसर्गिकः । औपसर्गिकः ॥

प्रोपाभ्यां वासात् ॥ ११० ॥

प्रोपाभ्यां परो यो वासशब्दस्तदन्तात् प्रातिपदिकात् तस्मै प्रभवतीत्यर्थे ठञ्प्रत्ययो भवति। प्रवासाय प्रभवति प्रावासिकम् । औपवासिकम् ॥

सक्तुमांसौदनमांसौदनेभ्यश्च ॥ १११ ॥

सक्त्वादिभ्यश्च तस्मै प्रभवतीत्यस्मिन्नर्थे ठञ्प्रत्ययो भवति । सक्तुभ्यः प्रभवति साक्तुकम् । मांसिकम् । औदनिकम् । मांसौदनिकम् ॥

योगाद्यच्च ॥ ११२ ॥

योगशब्दात् तस्मै प्रभवतीत्यर्थे यत्प्रत्ययो भवति चकारात् ठञ्च । योगाय प्रभवति योग्यः । यौगिकः ॥

कर्मण उकञ् ॥ ११३ ॥

कर्मन्शब्दात् तस्मै प्रभवतीत्यर्थे उकञ्प्रत्ययो भवति । कर्मणे प्रभवति कार्मुकम् ॥

सोऽस्य प्राप्तः समयात् ॥ ११४ ॥

समयशब्दात् प्रथमान्तात् अस्येति षष्ठ्यर्थे ठञ्प्रत्ययो भवति । योऽसौ प्रथमासमर्थः प्राप्तश्चेत् स भवति । समयः प्राप्तोऽस्य सामयिकः ॥

ऋतूपवस्तृप्राशित्रादिभ्योऽण् ॥ ११५ ॥

ऋत्वादिभ्यः प्रातिपदिकेभ्यः सोऽस्य प्राप्त इत्यर्थे अण्प्रत्ययो भवति । ऋतुः प्राप्तोऽस्य आर्तवम् । उपवस्ता प्राप्तोऽस्य औपवस्त्रम् । प्राशिता प्राप्तोऽस्य प्राशित्रम् । आदिग्रहणाद्यथादर्शनमन्येऽपि भवन्ति ॥

कालाद्यत् ॥ ११६ ॥

कालशब्दात् सोऽस्य प्राप्त इत्यर्थे यत्प्रत्ययो भवति । कालः प्राप्तोऽस्य काल्यम् ॥

प्रकृष्टठञ् ॥ ११७ ॥

कालशब्दात् प्रथमान्तादस्येति षष्ठ्यर्थे ठञ्प्रत्ययो भवति । योऽसौ प्रथमान्तः प्रकृष्टश्चेत् स भवति । प्रकृष्टः कालोऽस्य कालिकमृणम् । कालिकं वैरम् ॥

प्रयोजनम् ॥ ११८ ॥

स इति प्रथमान्तादस्येति षष्ठ्यर्थे ठञ् प्रत्ययो भवति । यत् तत्

प्रथमान्तं प्रयोजनं चेत् तद् भवति। इन्द्रमहः प्रयोजनमस्य ऐन्द्रमहिकम्। दैवोत्सविकम्॥

एकागाराच्चौरे ॥ ११९ ॥

एकागारशब्दात् तस्य प्रयोजनमित्यर्थे चौरेऽभिधेये ठञ्प्रत्ययो भवति। एकागारं प्रयोजनमस्य ऐकागारिकश्चौरः। ऐकागारिकी॥

आकालात् ठंश्च ॥ १२० ॥

आकालशब्दात् तदस्य प्रयोजनमित्यर्थे ठन्प्रत्ययश्चकारात् (ठंश्च? ठञ्च) भवति। आकालं प्रयोजनमस्य आकालिको नाम अध्यायः। आकालिकी विद्युत्। आकालिका। य एतयोरुत्पत्तिकालस्तमेव यावद् भवत इत्यर्थः॥

चूडाश्रद्धादिभ्योऽण् ॥ १२१ ॥

चूडादिभ्यस्तदस्य प्रयोजनमित्यर्थेऽण्प्रत्ययो भवति। चूडा प्रयोजनमस्य चौडम्। श्राद्धम्। आदिग्रहणाद्यथादर्शनमन्येऽपि भवन्ति॥

विशाखाषाढाभ्यां मन्थदण्डयोः ॥ १२२ ॥

विशाखाषाढशब्दाभ्यां तदस्य प्रयोजनमित्यर्थे यथासङ्ख्यं मन्थदण्डयोरभिधेययोरण्प्रत्ययो भवति। विशाखा प्रयोजनमस्य वैशाखो मन्थः। आषाढा प्रयोजनमस्य आषाढो दण्डः॥

उदुपाभ्यां स्थापेरनान्ताच्छः ॥ १२३ ॥

उदुपाभ्यां परो यः स्थापिस्तस्मादनान्तात् तदस्य प्रयोजनमित्यर्थे छप्रत्ययो भवति। उत्थापनं प्रयोजनमस्य उत्थापनीयम्। उपस्थापनीयम्॥

अनोर्वचिप्रवचिवासिविशिभ्यः ॥ १२४ ॥

अनोः परे ये वच्यादयस्तेभ्योऽनान्तेभ्यस्तदस्य प्रयोजनमित्यर्थे छप्रत्ययो भवति। अनुवचनं प्रयोजनमस्य अनुवचनीयम्। अनुप्रवचनीयम्। अनुवासनीयम्। अनुवेशनीयम्॥

रुहेः प्राङ्भ्यां च ॥ १२५ ॥

प्राङ्भ्यामनोश्च परो यो रुहिस्तस्मादनान्तात् तदस्य प्रयोजनमित्यर्थे छप्रत्ययो भवति । प्ररोहणीयम् । आरोहणीयम् । अनुरोहणीयम् ॥

समाङो विशिरभिभ्याम् ॥ १२६ ॥

समाङः परौ यौ विशिरभी ताभ्यामनान्ताभ्यां तदस्य प्रयोजनमित्यर्थे छप्रत्ययो भवति। समावेशनं प्रयोजनमस्य समावेशनीयम्। समारम्भणीयम्॥

विशिपूरिपदिरुहिसमापिभ्यः सपूर्वपदेभ्यः ॥ १२७ ॥

विश्यादिभ्योऽनान्तेभ्यः स(पू)र्वपदेभ्यस्तदस्य प्रयोजनमित्यर्थे छप्रत्ययो भवति । गृहप्रवेशनं प्रयोजनमस्य गृहप्रवेशनीयम् । प्रपापूरणीयम् । अश्वप्रपदनीयम् । प्रासादारोहणीयम् । व्याकरणसमापनीयम् ॥

स्वर्गधनायुर्यशःकामेभ्यो यत् ॥ १२८ ॥

स्वर्गादिभ्यस्तदस्य प्रयोजनमित्यर्थे यत्प्रत्ययो भवति । स्वर्गः प्रयोजनमस्य स्वर्ग्यम् । धन्यम् । आयुष्यम् । यशस्यम् । काम्यम् ॥

पुण्याहस्वस्तिशान्तिभ्यो वाचनाल्लुक् ॥ १२९ ॥

पुण्याहादिभ्यः परो यो वाचनशब्दस्तस्मात् तदस्य प्रयोजनमित्यर्थे विहितस्य ठञो लुग् भवति । पुण्याहवाचनं प्रयोजनमस्य पुण्याहवाचनम् । स्वस्तिवाचनम् । शान्तिवाचनम् । प्राग्वतीयानां पूर्णोऽवधिः ॥

तेन तुल्यं क्रिया चेद्वतिः ॥ १३० ॥

तेनेति तृतीयासमर्थात् तुल्यमित्येतस्मिन्नर्थे वतिप्रत्ययो भवति । यत्तत् तुल्यं क्रिया चेत् सा भवति । ब्राह्मणेन तुल्यमधीते ब्राह्मणवदधीते । क्षत्रियेण तुल्यं वर्तते क्षत्रियवद्वर्तते । राज्ञा तुल्यं व्यवहरति राजवद्व्यवहरति । अत्र ब्राह्मणादिशब्दा ब्राह्मणादिसहचरितास्वध्ययनादिक्रियासु वर्तमानाः प्रत्ययमुत्पादयन्ति । न ह्यक्रियया क्रियायास्तुल्यत्वं भवति । क्रियाग्रहणं किम् । गवा तुल्यो गवयः । गिरिणा तुल्यो वलाहकः ॥

तत्र तस्येव ॥ १३१ ॥

तत्रेति सप्तमीसमर्थात् तस्येति षष्ठीसमर्थादिवार्थे वतिप्रत्ययो भवति । मधुरायामिव पाटलीपुत्रे प्रासादः मधुरावत् । सुघ्न इव साकेते परिघा सुघ्नवत् । देवदत्तस्येव यज्ञदत्तस्य गावो देवदत्तवत् । ब्राह्मणस्येव क्षत्रियस्य दन्ताः ब्राह्मणवत् । पूर्वेण क्रियया तुल्यायां क्रियायां प्रत्ययो विधीयते । अनेन तु प्रकृत्यर्थवाह्यनामधेयानां सम्बन्धिना च तुल्यतायामिति । देवदत्तवत् स्थूल इत्यादौ तु भवत्यादिक्रियाध्याहारे प्रत्ययो भवति ॥

तदर्हम् ॥ १३२ ॥

तदिति द्वितीयान्तादर्हमित्येतस्मिन्नर्थे वतिप्रत्ययो भवति । यदर्हं क्रिया चेत् सा भवति । राजानमर्हति वृत्तं राजवत् । ब्राह्मणवत् । क्षत्रियवत् । क्रिया चेदिति किम् । राजानमर्हति छत्रम् । अत्र द्वितीयान्तादार्हणस्य कर्तुः क्रियायां चेति विधीयते न सादृश्ये । तेन पूर्वसूत्रेण न सिध्यतीति वचनम् ॥

तस्य भावस्त्वतलौ ॥ १३३ ॥

तस्येति षष्ठीसमर्थाद् भाव इत्यस्मिन्नर्थे त्वतलौ प्रत्ययौ भवतः । कः पुनर्भावः । भवतोऽस्मादभिधानप्रत्यया(वि)ति भावः । शब्दस्य प्रवृत्तिनिमित्तम् । द्रव्यसंसर्गभेदको गुणः । यदाह—"यस्य गुणस्य हि भावाद् द्रव्ये शब्दनिवेशः तदभिधाने त्वतलावि"ति । तत्र जातिगुणाज्जाति(ग? गु)-णे समासकृत्तद्धितात् सम्बन्धे डित्थादेः स्वरूपे त्वतलादीनां विधिर्भवति । तत्र जातिवचनेभ्यो जातौ गोशब्दस्य भावो गोत्वं गोतेति गोशब्दजातिः । गोरर्थस्य भावो गोत्वं गोतेति गवार्थजातिः । शुक्लस्य गुणस्य भा(वे ? वः) शुक्लत्वं शुक्लतेति शुक्लगुणजातिः रूपस्य रसस्य वा भावः रूपत्वं रसत्वमिति रूपादिगुणजातिः षत्वं (णु?) णत्वमिति भिन्नवर्णव्यक्तिसमवेता जातिः । कुत्वं चुत्वमिति ककार ··· वर्गव्यक्तिसमवेता जातिसंहतिः । गुणशब्देभ्यो गुणे, शुक्लस्य गुणस्य भावः शुक्लत्वं शुक्लतेति मतुपो गुण एव । शुक्लतरत्वं शुक्लतमतेति स एव प्रकृष्टः । अणुत्वं गुरुत्वमिति परिमाणादि-

लक्षणो गुणः। एकत्वं द्वित्वमिति संख्यालक्षणः। पृथक्त्वं नानात्वमिति भेद-लक्षणः। उच्चैस्त्वं नीचैस्त्वमिति उच्छ्रायादिलक्षणः। समासात् सम्बन्धे राजपुरुषत्वं चित्रगुत्वमिति स्वस्वामिसम्बन्धः। कृतः सम्बन्धे। पाचकत्वं पक्तृत्वम् (इति)। क्रियाकारकसम्बन्धः। तद्धितात् सम्बन्धे दण्डित्वं विषाणित्वमिति दण्डादिसम्बन्धः। डित्थादेः स्वरूपे डित्थत्वं डित्थतेति डित्थाद्यर्थस्वरूपम्। एवं गोजातेर्भावः गोत्वं गोतेति गोशब्दस्वरूपम्। शुक्लजातेः स्वरूपं शुक्लत्वं शुक्लतेति शुक्लशब्दस्वरूपम्। गवादयो यदा जातिमात्रवाचिनस्तदा तेषां स्वरूपमेव प्रवृत्तिनिमित्तम्। तथाह्यर्थगतो शब्दस्वरूपमध्यवस्यते यो गोशब्दः स एवार्थ इति। एवं देवदत्तत्वं चन्द्रत्वं सूर्यत्वं दिक्त्वम् आकाशत्वमभावत्वमिति शब्दस्वरूपमेवोच्यते। अन्ये तु—डित्थत्वं देवदत्तत्वमिति वयोवस्थाभेदभिन्नव्यक्तिसमवेतं सामान्यं चन्द्रत्वं सूर्यत्वमिति कालावस्थाभेदभिन्नव्यक्तिसमवेतं सामान्यं, दिक्त्वमाकाशत्वमिति उपचरितभेदव्यक्तिसमवेतं सामान्यं प्रत्ययार्थं वदन्तोऽत्रापि जातिमेव त्वतलादिप्रत्ययाभिधेयां वर्णयन्ति। अनु च समासकृत्तद्धितेभ्योऽपि भावप्रत्ययेन जात्यभिधाने दृश्यते गौरखरत्वं लोहितशालित्वं सप्तपर्णत्वं धवखदिरत्वमिति। अत्र शुक्लत्वमधुरत्वादयो मतुब्लुकि विज्ञायमाने यद्यपि तद्धितान्तास्तथापि गुणगुणिनोर्जातितद्वतोरिव सोऽयमित्यभिसम्बन्धेन लोकनिरूढेन भेदसम्बन्ध(रूप?)स्य न्यग्भावाद....... वगुणभाव एव प्रत्ययो भवति नतु सम्बन्धे। एवं गर्गाः पञ्चाला इत्यादावपि गर्गादयः शब्दा य (ञा?ञो) लुकि यद्यपि तद्धितान्तास्तथापि मूलप्रकृत्या सहविवक्षायामभिन्नरूपत्वाद्वाक्कि.................. मण्डुलमक (?) इत्यादिवत् प्रत्ययोत्पत्तिहेतुः। सम्बन्धोऽन्यत इत्यपि भिन्नशब्दाभिधेयेनैव भावप्रत्ययात् प्रतीयते। अन्वाख्यानप्रक्रियाश्रयणे चैतदुच्यते। परमार्थतस्त्वेते शब्दाः परस्परसम्बन्धानपेक्षा एव गुणजात्यादेर्निमित्तात् प्रकृतिप्रत्ययार्थेषु वर्तन्ते। यथामलकादयः फले वृक्षे च लुग्विधानद्वारेण चैतेषां भेदाश्रया(त्) प्रत्ययोत्पत्तिः कदाचिदपि मा भूदित्याख्यायते। अथ पञ्चालादिशब्दा युगपदपत्यजनपदवाचिनो भावप्रत्ययेन किमभिधीयते।

प्रवृत्तिनिमित्तसङ्घातः । यथा कुत्वं धवखदिरत्वमिति जातिसंहतिः । एते-नाक्षत्वं माषत्वं पादत्वमित्यादीन्यपि व्याख्यातानि भवन्ति । अव्यभिचरितसम्बन्धाः प्रायः कृत्स्वेव भवन्ति । सतो भावः सत्त्वं सत्ता विद्यमानत्वं विद्यमानतेति । अत्रापि जातावेव भावप्रत्ययः । नहि सद्वस्तु सत्तासम्बन्धं व्यभिचरति इति सत्तासम्बन्धानपेक्षाणां सम्बन्धे (न प्रत्ययः) । पाचक इत्यादौ तु सम्बन्ध(स्य) कादाचित्कत्वात् तदपेक्षाः पाचकादिशब्दाः स्वार्थमभिदधत इति ततः सम्बन्धे प्रयोगो युक्तः । तस्मात् सत्स्वेव विद्यमानेषु पदार्थेषु नित्यसमवायिनी शब्दप्रवृत्तिहेतुः (तत्रै ? सत्तै)व भावप्रत्ययवाच्या, नतु (त ? स)त्सत्तयोः सम्बन्धः । स●एवा....... ख्यमिति भावे वेति वचनात् । स्त्रीपुंसाभ्यां पक्षे नञ्स्नञावपि भवतः । स्त्रीत्वं स्त्रीता स्त्रैणं पुंस्त्वं पुंस्ता पौंस्नम् इति । लकारः स्वरार्थः ॥

## नञादेस्तत्पुरुषात् ॥ १३४ ॥

नञादेस्तत्पुरुषात् तस्य भाव इत्यर्थे त्वतलावेव भवतः । न वक्ष्यमाणा यगादयः । वक्ष्यति—(यत्तदेते?पत्यन्ते)भ्यो यक् । न पतिः अपतिः अस्य भावः अपतित्वम् अपतिता । 'इको लघुपूर्वादकवेरि'(ति चे ?)त्यण् । न मृदुः (अमृदुः) तस्य भावः अमृदुत्वम् अमृदुता । 'योपधाद् गुरूपोत्तमादसुप्रख्याद्वुञ्' । न रमणीयः अरमणीयः, तस्य भावः अरमणीयत्वम् अरमणीयता । नञादेरिति किम् । सैनापत्यं बार्हस्पत्यम् । तत्पुरुषादिति किम् । नास्या मृदवः सन्ति अमृदुः तस्या भाव आमृदवम् ॥

## चतुरसङ्गतलवणबडबुधकतरसलसेभ्यो वा ॥ १३५ ॥

चतुराद्यन्तेभ्यो नञादिभ्यस्तत्पुरुषेभ्यस्तस्य भाव इत्यर्थे त्वतलौ प्रत्ययौ (वा) भवतः । पक्षे गुणवच(न)त्वात् ष्यञ् । अचतुरत्वम् अचतुरता आचतुर्यम् । असङ्गतत्वम् असङ्गतता आसङ्गत्यम् । अलवणत्वम् अलवणता आलवण्यम् । अबडत्वम् अबडता आबड्यम् । अबुधत्वम् अबुधता आबुध्यम् । अकतत्वम् अकतता आकत्यम् । अरसत्वम् अरसता आरस्यम् । अलसत्वम् अलसता आलस्यम् ॥

**पृथुमृदुपटुपाण्डुखण्डचण्डस्वादुसाधुबहुमहदणु-तनूरुगुरुलघुभ्य इमनिच् ॥ १३६ ॥**

पृथ्वादिभ्यस्तस्य भाव इत्यस्मिन्नर्थे इमनिच्प्रत्ययो वा भवति । पृथोर्भावः प्रथिमा पृथुत्वं पृथुता पार्थवम् । म्रदिमा मृदुत्वं मृदुता मार्दवम् । पटिमा पटुत्वं पटुता पाटवम् । पाण्डिमा पाण्डुत्वं पाण्डुता पाण्डवम् । खण्डिमा खण्डत्वं खण्डता खा(ण्डं? ण्ड्यम्।) चण्डिमा चण्डत्वं चण्डता (च? चा)ण्ड्यम् । स्वादिमा स्वादुत्वं स्वादुता । साधिमा साधुत्वं साधुता । भूमा बहुत्वं बहुता । महिमा महत्त्वं महत्ता । अणिमा अणुत्वं अणुता (आणवम् ।) तनिमा तनुत्वं तनुता तानवम् । उरिमा उरुत्वं उरुता (औरवम्) । गरिमा गुरुत्वं गुरुता गौरवम् । लघिमा लघुत्वं लघुता लाघवम् ॥ इति ॥

**ह्रोडवत्सपाकाकिञ्चनर्जुचार्वाशुवक्रवृद्धकालतृप्रक्षिप्र-क्षुद्रह्रस्वप्रियेभ्यश्च ॥ १३७ ॥**

ह्रोडादिभ्यस्तस्य भाव इत्यर्थे इमनिच्प्रत्ययो वा भवति । ह्रोडिमा ह्रोडत्वं ह्रोडता । वत्सिमा वत्सत्वं वत्सता । पाकिमा पाकत्वं पाकता । अकिञ्चनिमा अकिञ्चनत्वम् अकिञ्चनता । ऋजिमा ऋजुत्वं ऋजुता आर्जवम् । चारिमा चारुत्वं चारुता । आशिमा आशुत्वम् आशुता । वक्रिमा वक्रत्वं वक्रता । व(द्धि? र्षि)मा * वृद्धत्वं वृद्धता । कालिमा कालत्वं कालता । त्रपिमा तृप्रत्वं तृप्रता । क्षेपिमा क्षिप्रत्वं क्षिप्रता । क्षोदिमा क्षुद्रत्वं क्षुद्रता । ह्रसिमा ह्रस्वत्वं ह्रस्वता । प्रेमा प्रियत्वं प्रियता । प्रीणातेरौणादिके मनिनि प्रेमशब्दो नपुंसकलिङ्गोऽप्यस्ति ॥

**वर्णदृढपरिवृढकृशभृशाम्लचुक्रलवणमधुरशीतोष्णजडेभ्यः ष्यञ्च ॥ १३८ ॥**

---

* वृद्धशब्दस्य पृथ्वादिषु पाठो न वृत्तिकारस्य सम[illegible] । अत एव प्रियादिसूत्रे (६-४-१५७) वृत्तौ वृद्धशब्दस्य वर्षिष्ठः वर्षीयान् इति पदद्वयं प्रदर्श्य "प्रियोरुबहुलदीर्घाः पृथ्वादिषु पठ्यन्ते तेनान्येषामिमनिज् न भवतीति नोदाह्रियते" इत्युक्तवान् ॥

वर्णविशेषवाचिभ्यो दृढादिभ्यश्च तस्य भाव इत्यस्मिन्नर्थे ष्यञ् चकारादिमनिच्प्रत्ययौ वा भवति । शुक्लस्य भावः शौक्ल्यं शुक्लिमा शुक्लत्वं शुक्लता । कार्ष्ण्यं कृष्णिमा कृष्णत्वं कृष्णता । दार्ढ्यं द्रढिमा दृढत्वं दृढता । परिवृढ्यं परि(वृ? व्र)ढिमा परिवृढत्वं परिवृढता । कार्श्यं (कृ? क्र)शिमा कृशत्वं कृशता । भार्श्यं (भृ? भ्र)शिमा भृशत्वं भृशता । आम्ल्यं अम्लिमा अम्लत्वं अम्लता । चौक्र्यं चुक्रिमा चुक्रत्वं चुक्रता । लावण्यं लवणिमा लवणत्वं लवणता । माधुर्यं मधुरिमा मधुरत्वं मधुरता । शैत्यं शीतिमा शीतत्वं शीतता । औष्ण्यम् उष्णिमा उष्णत्वम् उष्णता । जाड्यं जडिमा जडत्वं जडता । षकारो ङीषर्थः । शौक्ली लौहिती ॥

बालतरुणमन्दमूकमूलकालमूर्खपण्डितस्थिर[1]बहुलबधिरदीर्घेभ्यश्च ॥ १३९ ॥

बालादिभ्यश्च प्रातिपदिकेभ्यस्तस्य भाव इत्यस्मिन्नर्थे ष्यञ् चकारादिमनिच्प्रत्ययौ वा भवति । बालस्य भावः बाल्यं बालिमा बाल(य? त्वम्) बालता । तारुण्यं तरुणिमा तरुणत्वं तरुणता । मान्द्यं मन्दिमा मन्दत्वं मन्दता । मौक्यं मूकिमा मूकत्वं मूकता । मौल्यं मौलिमा मूलत्वं मूलता । काल्यं कालिमा कालत्वं कालता । मौर्ख्यं मूर्खिमा मूर्खत्वं मूर्खता । पाण्डित्यं पण्डितिमा पण्डितत्वं पण्डितता । स्थैर्यं स्थेमा स्थिरत्वं स्थिरता । बाहुल्यं (बह्रि? बंहि)मा बहुलत्वं बहुलता । बाधिर्यं बधिरिमा बधिरत्वं बधिरता । दैर्घ्यं (दीर्घि? द्राघि)मा दीर्घत्वं दीर्घता ॥

वेर्यातलातशारदेभ्यः[2] ॥ १४० ॥

वेः परे ये यातादयस्तदन्तात् प्रातिपदिकात् तस्य भाव इत्येतस्मिन्नर्थे ष्यञ् चकारादिमनिच्प्रत्ययौ वा भवति । वैयात्यं वियातिमा वियातत्वं वियातता । वैलात्यं विलातिमा विलातत्वं विलातता । वैशारद्यं विशारदिमा विशारदत्वं विशारदता ॥

---

१. 'स्थविर' क पाठः. २. 'लाभे'ति मुद्रितवृत्तिपाठः ।

समश्च मतिमनोभ्याम् ॥ १४१ ॥

वेः समश्च परौ यौ मतिमनश्शब्दौ तदन्तात् प्रातिपदिकात् तस्य भाव इत्यस्मिन्नर्थे ष्यञ् चकारादिमनिच् वा प्रत्ययो भवति । वैमत्यं विमतिमा विमतित्वं विमतिता । वैमनस्यं विमनिमा विमनस्त्वं विमनस्ता । साम्मत्यं सम्मतिमा सम्मतित्वं सम्मतिता । साम्मनस्यं सम्मनिमा सम्मनस्त्वं सम्मनस्ता ॥

गुणवचनेभ्योऽसमासकृत्ताद्धिताव्ययसर्वनामसं(ख्या ? ख्ये)भ्यः कर्मणि च ॥ १४२ ॥

गुणवचना विशेषणशब्दास्तेभ्यः समासादिवर्जितेभ्यः षष्ठीसमर्थेभ्यः कर्मणि चकाराद् भावे चार्थे ष्यञ्प्रत्ययो (वा) भवति । जडस्य भावः कर्म वा जाड्यं मौढ्यं दाक्ष्यं प्रागल्भ्यं शौर्यम् औदार्यम् । वावचनात् पक्षे त्वतलावपि भावे भवतः । जडत्वं जडता । मूढत्वं मूढतेति । केचित्त्वा च त्वादिति वदन्तः कर्मण्यपि त्वतलाविच्छन्ति । पृथ्वादिभ्यः पृथग्वचनात् अगुणवचनत्वेऽपि ष्यञ् न भवति । वर्णदृढादिभ्यस्तु विशेषविधानात् कर्मणि न भवति । कथं तर्हि क्षुद्रस्य भावः कर्म वा क्षौद्र्यं क्षौद्री क्षुद्रस्य (ज ? जा)ड्यमिति । ह्रस्वोष्णशब्दसाहचर्यादल्पपरिमाणस्पर्शविशेषवाचिनोः क्षुद्रजडशब्दयोस्तत्र ग्रहणम् । इह तु दुराशयाप्राज्ञवाचिनोरिति । गुणवचनेभ्य इति किम् । गोत्वं वृक्षत्वं डित्थत्वं चन्द्रत्वमिति । असमास इति किम् । चित्रगुत्वं वीरपुरुषत्वम् । असमा(सा)दिभ्य इति किम् । पाचकत्वं कर्तृत्वम् । औपगवत्वं दण्डित्वम् उच्चैस्त्वं पृथक्त्वं सर्वत्वं द्वित्वं बहुत्वम् । कथमैक्यमिति । नायं संख्यावचनो नापि सर्वनाम । किन्तर्ह्यभिन्नपर्यायो सहायपर्यायो वान्य एवैकशब्दस्ततो गुणवचनात् ष्यञ् भविष्यति ॥

ब्राह्मणमाणवबाडवधूर्त्तचोरचपलकुशलनिपुणसुहितपिशुनबालिशाल(स्ये ? से)भ्यः ॥ १४३ ॥

---

'सद्भ्यः' ख, ग पाठः.

ब्राह्मणादिभ्यः षष्ठीसमर्थेभ्यो भावे कर्मणि चार्थे ष्यञ्प्रत्ययो (वा) भवति । ब्राह्मणबालिशशब्दौ प्राणिजातिवयोर्थौ ताभ्यामञ्बाधनार्थं, माणवबाडवशब्दौ चरणवचनौ ताभ्यां वुञ्बाधनार्थं, चोरधूर्तशब्दौ मनोज्ञादी ताभ्यां वुञ्समावेशार्थं, चपलकुशल*लनिपुणा युवादयस्तेभ्योऽण्समावेशार्थम् , अलससुहितौ समासौ ताभ्यामप्राप्तप्रापणार्थं वचनम् । ब्राह्मणस्य भावः कर्म वा ब्राह्मण्यम् । माणव्यम् । बाडव्यम् । धौर्त्यम् । चौर्यम् । चापल्यम् । कौशल्यम् । नैपुण्यम् । सौहित्यम् । पैशुन्यम् । बालिश्यम् । आलस्यम् । पक्षे ब्राह्मणतेत्याद्यपि भवति ॥

गडुलदीनदायादविदग्धोचितसमग्रशीलतत्परेदम्परयथातथयथापुरपुनःपुनरभीक्ष्णतरतमप्रकामयथाकामेभ्यश्च ॥ १४४ ॥

गडुलादिभ्यः षष्ठीसमर्थेभ्यो भावे कर्मणि चार्थे ष्यञ्प्रत्ययो वा भवति । गडुलशब्दस्तद्धितः, दीनोचितौ कृदन्तौ, दायादविदग्धसमग्र तत्परेदंपराः समासाः, यथातथं यथापुरं पुनःपुनः अभीक्ष्णं प्रकामं यथाकाममित्यव्ययानि । तरतमे(त्यादि ? त्यति)शब्दितप्रत्ययार्थोपलक्षणं, शीलशब्दस्तु विशेषणत्वात् अगुणवचन इत्येतेभ्योऽप्राप्तः ष्यञ् विधीयते । गडुलस्य भावः कर्म वा गाडुल्यम् । दैन्यम् । दायाद्यम् । वैदग्ध्यम् । वैदग्धी । औचित्यम् औचिती । सामग्र्यं सामग्री । शीलस्य भावः शैली । तत्परस्य भावस्तात्पर्यम् । इदम्परस्यैदम्पर्यम् । यथातथमित्यस्य भावः याथातथ्यं याथापुर्यम् । पुनःपुनरित्यस्य भावः पौनःपुन्यम् । अभीक्ष्णमित्यस्य भावः आभीक्ष्ण्यम् । तरतमेत्यस्य तारतम्यम् † यथाकाममित्यस्य याथाकाम्यम् । याथाकामी । पक्षे गडुलत्वं गडुलतेत्याद्यपि भवति ॥

एकद्वित्रिस्वान्येभ्यो भावात् ॥ १४५ ॥

---

* पिशुनशब्दोऽपि युवादिषु पठ्यते । तेन 'कुशलपिशुननिपुणा' इति । अत्र पिशुनशब्दोपसृष्टः पाठः कल्प्यः.

† इत उत्तरं सूत्रपाठानुरोधेन 'प्रकाममित्यस्य भावः प्राकाम्यम्' इत्यपि वक्तव्यम् ।

एकादिभ्यः परो यो भावशब्दस्तदन्तात् प्रातिपदिकाद् भावे कर्मणि चार्थे ष्यञ्प्रत्ययो (वा) भवति । समासत्वादप्राप्ते वचनम् । एकभावस्य भावः ऐकभाव्यम् । द्वैभाव्यम् । त्रैभाव्यम् । अन्यभाव्यम् । पक्षे एक-भावत्वमेकभावतेत्याद्यपि भवति ॥

तत्[1]स्वसमविषमपरममध्येभ्यः स्थात् ॥ १४६ ॥

तदादिभ्यः परो यः स्थशब्दस्तदन्तात्प्रातिपदिकाद् भावे कर्मणि चार्थे ष्यञ्प्रत्ययो भवति वा । तत्स्थस्य भावस्तात्स्थ्यम् । स्वास्थ्यम् । सामस्थ्यम् । वैषमस्थ्यम् । पारमस्थ्यम् । माध्यस्थ्यम् । समासत्वादप्राप्ते वचनम् । नञर्थे च आस्वस्थ्यम् । आसमस्थ्यम् इति । पक्षे तत्स्थत्वं तत्स्थतेत्याद्यपि भवति ॥

निर्दु(भ्यां ? भ्यां) [2]कुलात् ॥ १४७ ॥

निर्दु(भ्यां ? भ्यां) परो यः (कू ? कु)लशब्दस्तदन्ताद् भावे कर्मणि चार्थे ष्यञ्प्रत्ययो भवति । नैष्कुल्यम् । दौष्कुल्यम् । समासत्वादप्राप्ते वचनम् । पक्षे नि(ष्कू ? ष्कु)लत्वं नि(ष्कू ? ष्कु)लतेत्याद्यपि भवति ॥

दुष्काराजभ्यः पुरुषात् ॥ १४८ ॥

दुष्प्रभृतिभ्यः परो यः पुरुषशब्दस्तदन्तात् प्रातिपदिकात् भावे कर्मणि चार्थे ष्यञ्प्रत्ययो भवति । दौष्पुरुष्यम् । कापुरुष्यम् । राजपौरुष्यम् । 'ष्यञ् राजपुरुष' इत्यादिनोत्तरपदवृद्धिः । समासत्वादप्राप्ते वचनम् । पक्षे दुष्पुरुषत्वं दुष्पुरुषतेत्याद्यपि भवति ॥

[3]व्याङुपेभ्यो रावयात् ॥ १४८ ॥

(व्युजु ? व्याङु)पेभ्यः परो यो रावयशब्दस्तदन्तात् षष्ठीसमासाद् भावे कर्मणि चार्थे ष्यञ्प्रत्ययो वा भवति । विरावयस्य भावः कर्म वा वैरा-

---

१. 'तु स', २. 'कू' क. पाठः. ३. 'व्याङुपेभ्यो' ख. ग. पाठः.

वध्यम् । विरावयादयो जनपदसमाननामानः क्षत्रियाः । अस्मादेव निपातनात् अ(ञ ?)ञो लुग् भवति । तेभ्योऽपत्यार्थे विहितस्याञः 'कम्बोजादिभ्यो लुग्' इति लुक् । ततो गोत्रलक्षणस्य वुञो बाधकः ष्यञ् भवति । पक्षे विराव्य(व ?)त्वं विराव्य(व ?)तेत्याद्यपि भवति ॥

गणाधिभ्यां पत्युः ॥ १५० ॥

गणाधिभ्यां परो यः पतिशब्दस्तदन्ताद् भावे कर्मणि चार्थे ष्यञ्प्रत्ययो वा भवति । गणपतेर्भावः कर्म वा गाणपत्यम् । आधिपत्यम् । आभ्यां पत्यन्तलक्षणो यक् न भवति । पक्षे गणपतित्वं गणपतितेत्याद्यपि भवति ॥

वेः शायशस्तिभ्याम् ॥ १५१ ॥

वेः परौ यौ शायशस्तिशब्दौ तदन्तात् प्रातिपदिकात् तस्य भावः कर्म वेत्यस्मिन्नर्थे ष्यञ्प्रत्ययो वा भवति । विशायस्य भावः कर्म वा वैशाय्यम् । वैशस्त्यम् । अनयोरपि विशेषणत्वेनागुणवचनत्वादप्राप्ते वचनम् । त्वतलौ त्वनभिधानान्न भवतः ॥

स्वधिस्वर्जनमहद्युवभ्यो राज्ञः ॥ १५२ ॥

स्वादिभ्यः परो यो राजन्शब्दस्तदन्तात् प्रातिपदिकात् षष्ठीसमर्थाद् भावे कर्मणि चार्थे ष्यञ्प्रत्ययो वा भवति । सुराज्ञो भावः कर्म वा सौराज्यम् । आधिराज्यम् । स्वाराज्यम् । जानराज्यम् । माहाराज्यम् । यौवराज्यम् । समासत्वादप्राप्ते वचनम् । केवलात् तु राज्ञो भावः कर्म वा राज्यमिति पुरोहितादिपाठाद्यग् भवति । पक्षे अधिराजत्वम् अधिराजतेत्याद्यपि भवति ॥

सम्राजः ॥ १५३ ॥

सम्राट्शब्दात् तस्य भावः कर्म वेत्यस्मिन्नर्थे ष्यञ्प्रत्ययो वा भवति । सम्राजो भावः कर्म वा साम्राज्यम् । कृत्त्वादप्राप्ते वचनम् । पक्षे सम्राट्त्वं सम्राट्तेति ॥

अर्हतो नुम् च ॥ १५४ ॥

---

१. 'सा' ख. ग. पाठः.

अर्हच्छब्दात् तस्य भावः कर्म वेत्यस्मिन्नर्थे ष्यञ्प्रत्ययो (वा) भवति। तत्सन्नियोगेन च नु(गा ? मा)गमः। अर्हतो भावः कर्म वा आर्हन्त्यम्। कृत्त्वादप्राप्ते वचनं नुमर्थं च। पक्षे अर्हत्त्वम् अर्हत्तेत्यपि भवति॥

समो वदिविशिभ्यां णिनः ॥ १५५ ॥

समः परौ यौ वदिविशी ताभ्यां णि(ल ? न)न्ताभ्यां तस्य भावः कर्म वेत्यस्मिन्नर्थे ष्यञ्प्रत्ययो वा भवति। संवादिनो भावः कर्म वा सांवाद्यम्। सांवेश्यम्। कृत्त्वादप्राप्ते वचनम्। पक्षे संवादित्वं संवादितेत्याद्यपि भवति॥

बहोश्च भाषः ॥ १५६ ॥

बहोः समश्च परो यो भाषशब्दस्ततो णिनन्तात् तस्य भावः कर्म वेत्यस्मिन्नर्थे ष्यञ्प्रत्ययो वा भवति। बहुभाषिणो भावः कर्म वा बाहुभाष्यम्। सांभाष्यम्। कृत्त्वादप्राप्ते वचनम्। पक्षे बहुभाषित्वं बहुभाषितेत्याद्यपि भवति॥

शीर्षनिविभ्यो हनः ॥ १५७ ॥

शीर्षनिविभ्यः परो यो हन्तिस्ततो णिनन्तात् तस्य भावः कर्म वेत्यस्मिन्नर्थे ष्यञ्प्रत्ययो वा भवति। शीर्षघातिनो भावः कर्म वा शैर्षघात्यम्। नैघात्यम्। वैघात्यम्। कृत्त्वादप्राप्ते वचनम्। पक्षे शीर्षघातित्वं शीर्षघातितेत्याद्यपि भवति॥

नञः क्षेत्रज्ञेश्वरविदूरपिशुननृशंसयथातथयथापुरेभ्यः ॥ १५८ ॥

नञः परे ये क्षेत्रज्ञादयस्तेभ्यस्तस्य भावः कर्म वेत्यस्मिन्नर्थे ष्यञ्प्रत्ययो वा भवति। आक्षैत्रज्ञ्यम् अक्षैत्रज्ञ्यम्। आनैश्वर्यम् अनैश्वर्यम्। 'नञः शुचीश्वरक्षेत्रज्ञ' इत्यादिनोत्तरपदवृद्धिः पूर्वस्य वा। आविदूर्यम्। आपिशुन्यम्। आनृशंस्यम्। आयथातथ्यम् (अयाथातथ्यम्।) आयथापुर्यम्। अ(य ? या)थापुर्यम्। 'यथातथयथापुरयोः पर्यायेण' इति वृद्धिः। *'नञस्तत्पुरुषादि'ति नियमादप्राप्ते वचनम्। पक्षे अक्षेत्रज्ञत्वम् अक्षेत्रज्ञतेत्याद्यपि भवति॥

* 'नञादेस्तत्पुरुषाद्' इति सूत्रस्वरूपं पूर्वं दृष्टम्।

सधर्मानुकूलपरिमण्डलविश्वरूपर्त्विगुदासीनेश्वरप्रतिभूसाक्षिमानुषास्तिकनास्तिकेतिहयुगपत्पूर्वापरोत्तराधरादिभ्यश्च ॥ १५९ ॥

सधर्मादिभ्यो यथादर्शनमन्येभ्यश्च* समासकृत्तद्धिताव्ययसर्वनाम्भ्यस्तस्य भावः कर्म वेत्यस्मिन्नर्थे ष्यञ्प्रत्ययो वा भवति । साधर्म्यम् । आनुकूल्यम् । पारिमण्डल्यम् । वैश्वरूप्यम् । आर्त्विज्यम् । औदासीन्यम् । ऐश्वर्यम् । प्रातिभाव्यम् । साक्ष्यम् । मानुष्यम् । आस्तिक्यम् । नास्तिक्यम् । ऐतिह्यम् । यौगपद्यम् । पौर्वापर्यम् । औत्तराधर्यम् । आदिग्रहणाद् वैधर्म्यं प्रातिकूल्यं पारिशेष्यम् आभिरूप्यं पारिखाद्यम् आभिजात्यं सौकर्यं सादृश्यं ज्यैष्ठ्यं श्रैष्ठ्यं प्राकट्यं नैकट्यं पारम्पर्यम् आनुपूर्व्यं (य?या)थातथ्यमित्यादयो यथादर्शनमन्येऽपि भवन्ति । पक्षे सधर्मत्वं सधर्मतेत्याद्यपि भवति ॥

चातुर्वर्ण्यचातुराश्रम्यचातुर्वैद्यत्रैलोक्यत्रैसन्ध्यत्रैकाल्यत्रैशब्द्यत्रैस्वर्यषाड्गुण्यसैन्यसान्निध्यसामीप्यौपम्यसौख्यसार्ववैद्यादीनां स्वार्थे ॥ १६० ॥

चातुर्वर्ण्यादीनां सम्बन्धी ष्यञ् स्वार्थे भवति । चत्वार एव वर्णाश्चातुर्वर्ण्यम् । चातुराश्रम्यम् । चतस्र एव विद्याश्चातुर्वैद्यम् । व(ध्या? ध्यो)गादित्वादुभयपदवृद्धिः । त्रयो लोकास्त्रैलोक्यम् । त्रैसन्ध्यम् । त्रैकाल्यम् । त्रैशब्द्यम् । त्रैस्वर्यम् । षडेव गुणाः षाड्गुण्यम् । सेनैव सैन्यम् । सन्निधिरेव सान्निध्यम् । समीपमेव सामीप्यम् । उपमैवौपम्यम् । सुखमेव सौख्यम् । सर्ववेदा एव सार्ववैद्यम् । 'राजपुरुष'—इत्यादिनोभयपदवृद्धिः । आदिग्रहणान्मणिक एव माणिक्यमित्यादयो भवन्ति ॥

---

१. 'धर्मा', क. ख. ग. पाठः.

---

* नेदमादिग्रहणसाध्यम् । यतः पूर्वं 'गडुलदीनदायाद—' इत्यादिसूत्रेऽस्य परिगणनेनैव रूपं सिध्यति ।

पत्यन्तपुरोहितवर्षिकग्रामिकचर्मिकधर्मिकसिलिकसूचिकसूचकखण्डिकदण्डिकाजानिकाञ्जलिकप्रचिकच्छत्रक-राजन्सरत्कसारथिभ्यो य(त् ? क्) ॥ १६१ ॥

पत्यन्तेभ्यः पुरोहितादिभ्यश्च षष्ठीसमर्थेभ्यो भावे कर्मणि चार्थे य(त् ? क्)प्रत्ययो वा भवति । सेनापतेर्भावः कर्म वा सैनापत्यम् । बार्हस्पत्यम् । प्राजापत्यम् । गार्हपत्यम् । पौरोहित्यम् । वार्षिक्यम् । ग्रामिक्यम् । चार्मिक्यम् । धार्मिक्यम् । सैलिक्यम् । (सौचिक्यम् ।) सौचक्यम् । खाण्डिक्यम् । दाण्डिक्यम् । आजनिक्यम् । आञ्जलिक्यम् । प्राचिक्यम् । *छात्रिक्यम् । राज्यम् । सा(म ? र)त्क्यम् । सारथ्यम् । पक्षे सेनापतित्वं सेनापतितेत्याद्यपि भवति । ककारो वृद्धिस्वरार्थः ॥

सखिदूतवणिग्भ्यो यः ॥ १६२ ॥

सख्यादिभ्यः षष्ठीसमर्थेभ्यो भावे कर्मणि चार्थे यप्रत्ययो वा भवति । सख्युर्भावः कर्म वा सख्यम् । दूत्यम् । वणिज्यम् । पक्षे सखित्वं सखितेत्याद्यपि भवति ॥

स्तेनाद् यन्नलोपश्च ॥ १६३ ॥

स्तेनशब्दात् तस्य भावः कर्म वेत्यस्मिन्नर्थे य(त्)प्रत्ययो वा भवति । तत्सन्नियोगेन च न्लोपः । स्तेनस्य भावः कर्म वा स्तेयम् । पक्षे स्तेनत्वं स्तेनतेत्याद्यपि भवति ॥

दूतादिभ्यः ष्यञ्च ॥ १६४ ॥

दूतवणिक्स्तेनेभ्यस्तस्य भावः कर्म वेत्यस्मिन्नर्थे ष्यञ् चकाराद्य-(श ? च) भवति । दूतस्य भावः कर्म वा दौत्यम् । वाणिज्यम् । स्तैन्यम् । पक्षे दूत्यं दूतत्वं दूततेत्यादि यथोदाहृतमेव भव(न्ति ? ति) ॥

१. 'पर्विक' ख. ग. पाठः. २. 'वर्मक' ख, 'वर्मिक' ग. पाठः. ३. 'कख', ४. 'काजनिकाञ्ज' ख. ग. पाठः. ५. 'कचकिकरा' ख, 'कचतिकारा' ग. पाठः. ६. 'रसा' ख. ग. पाठः. ७. 'नाम्न' क. पाठः.

* सूत्रपाठानुरोधेन तु 'छात्रक्यम्' इति स्यात् ।

कपिज्ञातिभ्यां ढक् ॥ १६५ ॥

कपिज्ञातिभ्यां तस्य भावः कर्म वेत्यस्मिन्नर्थे ढक्प्रत्ययो वा भवति । कपेर्भावः कर्म वा कापेयम् । ज्ञातेयम् । पक्षे कपित्वं कपितेत्याद्यपि भवति ॥

प्राणिजातिवयोर्थोद्गात्रुन्नेतृप्रतिहर्तृकर्तृहोतृप्रशास्त्रध्वर्युवधूसुष्ठुदुष्ठुरथगणकपत्तिगणकेभ्योऽञ् ॥ १६६ ॥

प्राणिजातिवाचिभ्यो वयोवाचिभ्य उद्गात्रादिभ्यश्च तस्य भावः कर्म वेत्यस्मिन्नर्थे अञ्प्रत्ययो वा भवति । अश्वस्य भावः कर्म वा आश्वम् । औष्ट्रम् । कौमारम् । कैशोरम् । औद्गात्रम् । औन्नेत्रम् । प्रातिहर्त्रम् । कार्त्रम् । हौत्रम् । प्राशास्त्रम् । आध्वर्यवम् । (बान्ध ? वाध)वम् । सौष्ठवम् । दौष्ठवम् । राथगणकम् । पात्तिगणकम् । पक्षे अश्वत्वमश्वतेत्याद्यपि भवति ॥

हायनान्तयुवस्थविरभ्रातृयजमानमिथुनपिशुननिपुणकुशलचपलकुलीनानृशंसेभ्योऽण् ॥ १६७ ॥

हायनान्तेभ्यो युवादिभ्यश्च षष्ठीसमर्थेभ्यो भावे कर्मणि चार्थे अण्प्रत्ययो वा भवति । द्विहायनस्य भावः कर्म वा द्वैहायनम् । त्रैहायणम् । यौवनम् । स्थाविरम् । भ्रात्रम् । याजमानम् । मैथुनम् । पैशुनम् । नैपुणम् । कौशलम् । चापलम् । कौलीनम् । आनृशंसम् । पक्षे द्विहायनत्वं द्विहायनतेत्याद्यपि भवति । ब्राह्मणादिपाठात् पिशुननिपुणकुशलचपलानृशंसेभ्यः ष्यञपि भवति ॥

सह(ः)श्रवणकुतुककुतूहलवृषलकण्डुककमण्डलुकितवपोतुक्षेत्रज्ञपरिव्राजकसब्रह्मचारिभ्यश्च ॥ १६८ ॥

सहःप्रभृतिभ्यश्च तस्य भावः कर्म वेत्यस्मिन्नर्थेऽण्प्रत्ययो वा भवति । सहसो भावः कर्म वा साहसम् । श्रावणम् । कौतुकम् । कौतूहलम् । वार्षलम् । काण्डुकम् । कामण्डलवम् । कैतवम् । पौतवम् । क्षैत्रज्ञम् । पारिव्राजकम् । साब्रह्मचारम् । 'कलाप्यादि'(त्यादि ? त्वात् टि)-लोपः । पक्षे सहस्त्वं सहस्तेत्याद्यपि भवति ॥

---

१. 'तृद्धोतृ', २. 'णडुलकु' ख. ग. पाठः.

सुदुर्भ्यां हृदः ॥ १६९ ॥

सुदुर्भ्यां परो यो हृच्छब्दस्तदन्तात् तस्य भावः कर्म वेत्यस्मिन्नर्थे-ऽण्प्रत्ययो भवति। सुहृदो भावः कर्म वा सौहार्दम्। दौर्हृदम्। 'सुदुर्हृदो-मित्रामित्रपर्याययो'रुत्तरपदवृद्धिर्न भवति। सौहृदम्। दौर्हृदम्। पक्षे सुहृत्त्वं सुहृत्तेत्याद्यपि भवति ॥

भ्रातुश्च ॥ १७० ॥

सुदुर्भ्यां परो यो भ्रातृशब्दस्तदन्ताच्च तस्य भावः कर्म वेत्यस्मिन्नर्थे अण्प्रत्ययो वा भवति। सौभ्रात्रम्। दौर्भ्रात्रम्। पक्षे सुभ्रातृत्वं सुभ्रातृतेत्याद्यपि भवति ॥

कोश्च स्त्रियाः ॥ १७१ ॥

सुदुर्भ्यां कोश्च परो यः स्त्रीशब्दस्तदन्तात् तस्य भावः कर्म वेत्यस्मिन्नर्थे अण्प्रत्ययो वा भवति। कुस्त्रिया भावः कर्म वा कौस्त्रम्। सौस्त्रम्। दौस्त्रम्। पक्षे कुस्त्रीत्वं कुस्त्रीतेत्याद्यपि भवति ॥

पुरुषहृदयाभ्यामसमासे ॥ १७२ ॥

पुरुषहृदयशब्दाभ्यामसमासविषये प्रयोगे तस्य भावः कर्म वेत्यस्मिन्नर्थे अण्प्रत्ययो वा भवति। पुरुषस्य भावः कर्म वा पौरुषम्। हार्दं 'हृदयस्य हृद्यदण्लासेषु' इति हृदादेशः। पक्षे पुरुषत्वं पुरुषतेत्याद्यपि भवति। असमास इति किम्। सत्पुरुषः सौहृदय्यं सौहार्द्यम्। 'ष्यञ्शोकरोगमूलमत्यादिषु वा' इति हृदयस्य वा हृदादेशः ॥

श्रोत्रियाद् यलोपश्च ॥ १७३ ॥

श्रोत्रियशब्दात् तस्य भावः कर्म वेत्यर्थे अण्प्रत्ययो वा भवति, तत्सन्नियोगेनास्य यलोपश्च। श्रोत्रियस्य भावः कर्म वा श्रौत्रम्। पक्षे श्रोत्रियत्वं श्रोत्रियतेत्याद्यपि भवति। मनोज्ञादिपाठाद् (वि ? वु)ञ्। श्रौत्रियकम् ॥

इको लघुपूर्वादकवेः ॥ १७४ ॥

लघुपूर्वो य इक् तदन्तात् कविशब्दवर्जितात् तस्य भावः कर्म वे-त्यस्मिन्नर्थे अण्प्रत्ययो वा भवति। शुचेर्भावः कर्म वा शौचम्। मौनम्।

पाटवम्। लाघवम्। पक्षे शुचित्वं शुचितेत्याद्यपि भवति। इक इति किम्। रसत्वम्। घटत्वम्। लघुपूर्वादिति किम्। पाण्डुत्वम्। अकवेरिति किम्। कवेर्भावः कर्म वा काव्यम्। गुणवचनत्वात् ष्यञ्॥

योपधाद्गुरूपोत्तमादसुप्रख्याद् वुञ् ॥ १७५ ॥

यकारोपधाद् गुरूपोत्तमात् सुप्रख्यवर्जितात् प्रातिपदिकात् तस्य भावः कर्म वेत्यस्मिन्नर्थे वुञ्प्रत्ययो वा भवति। रमणीयस्य भावः कर्म वा रामणीयकम्। दार्शनीयकम्। योपधादिति किम्। विमानत्वम्। गुरूपोत्तमादिति किम्। क्षत्रियत्वम्। असुप्रख्यादिति किम्। सुप्रख्यत्वम्। (सु? स)धर्मादिषु दर्शनात् ष्यञ्। सौसुख्यम्। पक्षे रमणीयत्वं रमणीयतेत्याद्यपि भवति॥

सहायात् ष्यञ्च ॥ १७६ ॥

सहायशब्दात् तस्य भावः कर्म वेत्यस्मिन्नर्थे वुञ्प्रत्ययः ष्यञ्च वा भवति। सहायस्य भावः कर्म वा साहायकम्। साहाय्यम्। पक्षे सहायत्वं सहायतेत्याद्यपि भवति[1]॥

द्वन्द्वमनोज्ञप्रिय*रूपकल्याणाढ्यमेधाविछात्रच्छान्दसश्रोत्रियचोरधूर्तविश्वदेवयुववृद्धामुष्यकुलावश्यबहुलेभ्यः ॥

द्वन्द्वसंज्ञकेभ्यो मनोज्ञादिभ्यश्च तस्य भावः कर्म वेत्यस्मिन्नर्थे वुञ्प्रत्ययो वा भवति। शिष्योपाध्याययोर्भावः कर्म वा (शि? शै)ष्योपाध्यायिका। गौपालपशुपालिका। मनोज्ञस्य भावः कर्म वा मानोज्ञकम्। वैरूपकम्। काल्याणकम्। आढ्यकम्। मैधाविकम्। छात्रकम्। छान्दसकम्। श्रौत्रियकम्। चौरिका। धौर्तकम्। चौर्यं धौर्त्यमिति ब्राह्मणादिपाठात् ष्यञपि भवति। वैश्वदेवकम्। यौव(नि? न)कम्। 'अके राजन्यमनुष्ययूनाम्' इति प्रकृतिभावः। वार्द्धकम्। आमुष्यकुलिका। आवश्यकम्। 'अव्ययस्यानगि'ति टिलोपः। बाहुलकम्। दृढादिपाठात् ष्यञ् इमनिच्च। बाहुल्यं (बह्वि? बंहि)मा। पक्षे शिष्योपाध्यायत्वं शिष्योपाध्यायतेत्याद्यपि भवति॥

---

१. 'श्य' ख. ग. पाठः.

---

* प्रदर्शयिष्यमाणोदाहरणानुरोधात्तु इह विरूपशब्दः स्यात्।

कुलामुष्यसरसेभ्यः पुत्रात् ॥ १७८ ॥

कुलादिभ्यः परो यः पुत्रशब्दस्तदन्तात् तस्य भावः कर्म वेत्यस्मिन्नर्थे वुञ्प्रत्ययो वा भवति । कुलपुत्रस्य भावः कर्म वा कौलपुत्रकम् । आमुष्यपुत्रिका । सारसपुत्रकम् । पक्षे कुलपुत्रत्वं कुलपुत्रतेत्याद्यपि भवति ॥

ग्रामात् कुमारषण्डाभ्यां च ॥ १७९ ॥

ग्रामशब्दात् परौ यौ कुमारषण्डशब्दौ ताभ्यां तस्य भावः कर्म वेत्यस्मिन्नर्थे वुञ्प्रत्ययो वा भवति । ग्रामकुमारस्य भावः कर्म वा ग्रामकुमारकम् । ग्रामषण्डकम् । ग्रामपुत्रकम् । पक्षे ग्रामकुमारत्वं ग्रामकुमारतेत्याद्यपि भवति ॥

गोत्रचरणाच्छ्लाघात्याकारप्राप्त्यवगमेषु ॥ १८० ॥

गोत्रवाचिनश्चरणवाचिनश्च प्रातिपदिकात् षष्ठीसमर्थाद् भावे कर्मणि चार्थे श्लाघादिषु विषयभूतेषु वुञ्प्रत्ययो वा भवति । (गार्गिकया) गर्गस्य भावेन कर्मणा वा श्लाघते । काठिक(पाठिक?)या विकत्थते । गार्गिकयात्याकुरुते । काठिकया विक्षिपति । गार्गिकां प्राप्तवान् । काठिकामधिगतवान् । गार्गिकामवगतवान् । काठिकां विज्ञातवान् । पक्षे गार्ग्यत्वेन श्लाघते इत्याद्यपि भवति । श्लाघादिष्विति किम् । गर्गत्वम् । कठत्वम् ॥

मैत्रावरुणाग्नीध्राच्छावाकनेष्टृपोतृब्राह्मणाच्छंसिभ्यश्छः ॥ १८१ ॥

मैत्रावरुणादिभ्यस्तस्य भावः कर्म वेत्यस्मिन्नर्थे छप्रत्ययो भवति वा । मैत्रावरुणस्य भावः कर्म वा मैत्रावरुणीयम् । अग्नीध्रीयम् । अच्छावाकीयम् । नेष्ट्रीयम् । पोत्रीयम् । ब्राह्मणाच्छंसीयम् । पक्षे मैत्रावरुणत्वं मैत्रावरुणतेत्याद्यपि भवति ॥

---

१. 'भ्याम्' क. पाठः.

ब्रह्मणस्त्वः ॥ १८२ ॥

ब्रह्मन्शब्दान्मैत्रावरुणादिप्रस्तावाद्दत्विग्विशेषवाचिनस्तस्य भावः कर्म वेत्यस्मिन्नर्थे त्वप्रत्ययो भवति । ब्रह्मणो भावः कर्म वा ब्रह्मत्वम् । ब्राह्मणादिपर्यायाद् ब्रह्मतेत्यपि भवति ॥

इति श्रीदण्डनाथनारायणभट्टसमुद्धृतायां सरस्वतीकण्ठाभरणस्य
व्याकरणस्य लघुवृत्तौ हृदयहारिण्यां
पञ्चमस्याध्यायस्य प्रथमः पादः ॥

## अथ द्वितीयः पादः ।

धान्येभ्यो भवने क्षेत्रे खञ् ॥ १ ॥

तस्येत्यनुवर्तते । भवन्त्यस्मिन्निति भवनम् । धान्यविशेषवाचिभ्यः प्रातिपदिकेभ्यः षष्ठीसमर्थेभ्यो भवनेऽभिधेये खञ्प्रत्ययो भवति । यत् तद् भवनं क्षेत्रं चेत्तद् भवति । कुलुत्थानां भवनं क्षेत्रं कौलुत्थीनम् । मौद्गीनम् । कौद्रवीणम् । गौधूमीनम् । धान्येभ्य इति किम् । तृणानां भवनं क्षेत्रम् । क्षेत्र इति किम् । मुद्गानां भवनं कुसूलम् ॥

व्रीहिशालिभ्यां ढक् ॥ २ ॥

व्रीहिशालिशब्दाभ्यां तस्य भवने क्षेत्रेऽभिधेये ढक्प्रत्ययो भवति । खञोऽपवादः । व्रीहीणां (भ)वनं क्षेत्रं व्रैहेयम् । शालेयम् ॥

यवयवकषष्टिकेभ्यो यत् ॥ ३ ॥

यवादिभ्यस्तस्य भवने क्षेत्रेऽभिधेये (खः?) यत्प्रत्ययो (यः?) भवति । यवानां भवनं क्षेत्रं यव्यम् । यवक्यम् । षष्टिक्यम् ॥

तिलमाषोमाभङ्गाणुभ्यो वा ॥ ४ ॥

तिलादिभ्यस्तस्य भवने क्षेत्रेऽभिधेये यत्प्रत्ययो वा भवति । तिलानां

भवनं क्षेत्रं तिल्यं तैलीनम् । माष्यं माषीणम् । उम्यम् औमीनम् । भङ्ग्यं भाङ्गीनम् । अणव्यम् आणवीनम् । उमाभङ्गयोरपि धान्यत्वाश्रयणात् खञ् भवति ॥

अश्वादेकाहगमे खञ् ॥ ५ ॥

अश्वशब्दात् षष्ठीसमर्थादेकाहगमेऽर्थे खञ्प्रत्ययो भवति । गम्यत इति गमः । एकाहस्य गमः आश्वीनोऽध्वा ॥

गोष्ठाद् भूतपूर्वे ॥ ६ ॥

(गोष्ठशब्दाद् भूतपूर्वे)ऽर्थे वर्तमानात् खञ्प्रत्ययो भवति । स चानिर्दिष्टार्थत्वात् स्वार्थे भवति । भूतपूर्वो गोष्ठः गौष्ठीनः ॥

सप्तपदात् तेनावाप्यं सख्ये ॥ ७ ॥

सप्तपदशब्दात् तेनेति तृतीयासमर्थादवाप्यमित्यस्मिन्नर्थे खञ्प्रत्ययो भवति । सख्येऽभिधीयमाने गम्यमाने वा । सप्तभिः पदैरवाप्यते साप्तपदीनं सख्यम् । साप्तपदीनः सखा ॥

सर्वचर्मणः कृतः खश्च ॥ ८ ॥

सर्वचर्मन्शब्दात् तृतीयासमर्थात् कृत इत्यस्मिन्नर्थे खः, चकारात् खञ् च प्रत्ययो भवति । असमर्थसमासोऽयम् । सर्वैश्चर्मणा कृतः सर्वचर्मीणः रथः । सार्वचर्मीणः ॥

यथामुखसम्मुखाभ्यां तद् दृश्यतेऽस्मिन् ॥ ९ ॥

यथामुखसम्मुखशब्दाभ्यां तदिति प्रथमासमर्थाभ्यामस्मिन्निति सप्तम्यर्थे खप्रत्ययो भवति । यत्तत् प्रथमासमर्थं दृश्यं चेत् तद् भवति । यथामुखं दृश्यतेऽस्मिन् यथामुखीनः । आदर्शनादिः । समं सम्यग् वा मुखं दृश्यतेऽस्मिन् सम्मुखीनः । यथामुखमिति निपातनादव्ययीभावः ॥

सर्वादिपथ्यङ्गकर्मपत्रपात्रं व्याप्नोति ॥ १० ॥

पथ्यादिभ्यः सर्वपूर्वेभ्यो निर्देशादेव द्वितीयासमर्थेभ्यो व्याप्नोतीत्यस्मिन्नर्थे खप्रत्ययो भवति । सर्वप(थ्यं ? थं) व्याप्नोति सर्वपथीनो रथः ।

सर्वाङ्गीण आकल्पः । सर्वकर्मीणः पुरुषः । सर्वपत्रीणो योद्धा । सर्वपात्रीण ओदनः ॥

आप्रपदं प्राप्नोति ॥ ११ ॥

प्रपदमिति पदस्याग्रम् । आङ्मर्यादायामभिविधौ वा । तयोरव्ययीभावः । आप्रपदशब्दान्निर्देशादेव द्वितीयासमर्थात् प्राप्नोतीत्यस्मिन्नर्थे खप्रत्ययो भवति । आप्रपदं प्राप्नोति आप्रपदीनः पटः ॥

अनुपदं बद्धा ॥ १२ ॥

अनुपदशब्दाद् द्वितीयासमर्थाद् बद्धा इत्येतस्मिन्नर्थे खप्रत्ययो भवति । अनुपदं बद्धा अनुपदीना उपानत् । पदप्रमाणेत्यर्थः ॥

अयानयं नेयः ॥ १३ ॥

अयानयशब्दाद् द्वितीयासमर्थान्नेय इत्यस्मिन्नर्थे खप्रत्ययो भवति । अयः प्रदक्षिणम् । अनयः प्रसव्यम् । तदुभयं नेयः अयानयीनः शारः । फलकशिरसि स्थित उच्यते ॥

सर्वान्नमत्ति ॥ १४ ॥

सर्वान्नशब्दाद् द्वितीयासमर्थादत्तीत्यस्मिन्नर्थे खप्रत्ययो भवति । सर्वशब्दः प्रकारकार्त्स्न्ये । सर्वप्रकारमन्नं सर्वान्नं, तदश्नाति सर्वान्नीनः । भिक्षुः ॥

परोवरपरम्परपुत्रपौत्रमनुभवति ॥ १५ ॥

परोवरादिभ्यो निर्देशादेव द्वितीयान्तेभ्योऽनुभवतीत्यस्मिन्नर्थे खप्रत्ययो भवति । परं चावरं च परोवरम् । निपातनादुत्वम् । तदनुभवति परोवरीणः । परं च परतरं च परम्परम् । निपातनात् पूर्वपदस्याम्भावस्तरलोपश्च । तदनुभवति परम्परीणः । पुत्रश्च पौत्रश्च पुत्रपौत्रम् । तदनुभवति पुत्रपौत्रीणः ॥

अत्यन्तानुकामं गामी ॥ १६ ॥

---

1. 'नं ने' क. पाठः.

अत्यन्तानुकामशब्दाभ्यां द्वितीयान्ताभ्यां गामीत्येतस्मिन्नर्थे ख-प्रत्ययो भवति । अत्यन्तं गामी अत्यन्तीनः । अनुकामीनः ॥

पारावारं व्यस्तविपर्यस्तं च ॥ १७ ॥

पारावारशब्दाद् व्यस्तविपर्यस्ताच्च द्वितीयासमर्थाद् गामीत्येतस्मिन्नर्थे खप्रत्ययो भवति । पारावारं गामी पारावारीणः । पारीणः । अवारीणः । अवारपारीणः ॥

अनुग्वलम् ॥ १८ ॥

अनुगुशब्दाद् द्वितीयान्तादलं गामीत्यस्मिन्नर्थे खप्रत्ययो भवति । गवां पश्चादनुगु । तदलं गामी अनुगवीनो गोपालकः ॥

अध्वानं यञ्च ॥ १९ ॥

अध्वन्शब्दाद् द्वितीयान्तादलं गामीत्यस्मिन्नर्थे यत् चकारात्, खश्च प्रत्ययो भवति । अध्वानमलं गामी अध्वनीनोऽध्वन्यः । '[illegible]र्मणोरनो ये' आत्माध्वनोः ख' इति च प्रकृतिभावः ॥

अभ्यमित्राच्छ च ॥ २० ॥

अभ्यमित्रशब्दादाभिमुख्याव्ययीभावाद् द्वितीयासमर्थादलं गामीत्यस्मिन्नर्थे छप्रत्ययो भवति । चकाराद्यत्खौ च । अभ्यमित्रमलंगामी अभ्यमित्रीयः अभ्यमित्र्यः अभ्यमित्रीणः । अमित्राभिमुखं सुष्ठु गच्छतीत्यर्थः ॥

समां समां समायां समायां विजायते पूर्वपदाल्लुग्यलोपौ च ॥ २१ ॥

समां समामित्यस्मात् समायां समायामित्यस्माच्च वाक्याद् विजायत इत्यस्मिन्नर्थे खप्रत्ययो भवति तत्सन्नियोगेन च यथासङ्ख्यं पूर्वपदाल्लुग् यलोपश्च भवति । समां समां विजायते समांसमीना गौः । गर्भधारणवचनो विजनिः, तेन च समा व्याप्यत इत्यत्यन्तसंयोगे द्वितीया । समायां समायां विजायते समांसमीना बडवा । अत्र गर्भधारणविमोचनवचनो विजनिरित्यत्यन्तसंयोगाभावादधिकरणे सप्तमी । अत्र पूर्वपदे य(द?)लोपवचनादवशिष्टस्याल्लुग् भवति ॥

**अद्यश्वो भवति च ॥ २२ ॥**

अद्यश्वशब्दाद् भवतीत्यस्मिन्नर्थे चकाराद्विजायत इति (चार्थं) खप्रत्ययो भवति । अद्य वा श्वो वा भवति अद्यश्वीनो भावः । अद्यश्वीना वडवा ॥

**आगोः कर्मकारिणि ॥ २३ ॥**

गोशब्दादाङ्पूर्वात् कर्मकारिण्यर्थे खप्रत्ययो भवति । तत्र सामर्थ्याद् गोः प्राप्तिः प्र(धा?दा)नं वा आवित्वेन प्रतीयते । आ गोः प्राप्तेः प्रदानाद्वा अवश्यं कर्म करिष्यति आगवीनः ॥

**अषडक्षाशितङ्ग्वलङ्कर्मालंपुरुषाध्युत्तरपदाद्भ्यः ॥ २४॥**

अषडक्षादिभ्यः प्रातिपदिकेभ्योऽध्युत्तरपदाच्च स्वार्थे खप्रत्ययो भवति । अविद्यमानानि षडक्षीणि अस्य अषडक्षीणो मन्त्रः । सक्थ्यक्ष्णः स्वाङ्गादि'ति षजन्तात् खः । आशिता गावो अस्मिन्निति आशितङ्गु । अस्मादेव निपातनात् पूर्वपदस्य मुम् । ततः खः । आशितङ्गवीनमरण्यम् । अलं कर्मणे अलं पुरुषाय इति 'पर्यादयो ग्लानाद्यर्थे चतुर्थ्ये'ति समासः । ततः खः । अलंकर्मीणः । अलंपुरुषीणः । राजन्यधि ब्राह्मणेष्वधि इति अधिशब्दस्य शौण्डादिपाठात् समासः । ततः खः । राजाधीनः । ब्राह्मणाधीनः । अधिष्ठितोऽधीन आयत्त इत्यर्थः ॥

**अदिश्यञ्चो वा ॥ २५ ॥**

अञ्चत्यन्तात् प्रातिपदिकात् अदिशिवर्तमानात् स्वार्थे खप्रत्ययो भवति । प्राक्, प्राचीनम् । प्रत्यक्, प्रतीचीनम् । उदक्, उदीचीनम् । अवाक्, अवाचीनम् । प्राचीना ब्राह्मणी । अवाचीना शिखा । अदिशीति किम् । प्राची दिक् ॥

**तस्य पाकः पीलुकर्कन्धुशमीकरीरकुवलबदराश्वत्थखदिरेभ्यः कुणप् ॥ २६ ॥**

तस्येति षष्ठीसमर्थेभ्यः पील्वादिभ्यः पाक इत्यस्मिन्नर्थे कुणप् प्रत्ययो भवति । पीलूनां पाकः पीलुकुणः । कर्कन्धुकुणः । शमीकुणः । करीरकुणः । कुवलकुणः । बदरकुणः । अश्वत्थकुणः । खदिरकुणः ॥

कर्णाक्षिनखमुखकेशपादगुल्फभ्रूशृङ्गदन्तोष्ठपुष्पेभ्यो मूले जाहच् ॥ २७ ॥

कर्णादिभ्यः प्रातिपदिकेभ्यस्तस्येति षष्ठ्यन्तेभ्यो मूलेऽर्थे जाहच् प्रत्ययो भवति। कर्णस्य मूलं कर्णजाहम्। अक्षिजाहम्। नखजाहम्। मुखजाहम्। केशजाहम्। पादजाहम्। गुल्फजाहम्। भ्रूजाहम्। शृङ्गजाहम्। दन्तजाहम्। ओष्ठजाहम्। पुष्पजाहम्।

पक्षात् तिः ॥ २८ ॥

पक्षशब्दात् षष्ठीसमर्थान्मूलेऽर्थे तिप्रत्ययो भवति। पक्षस्य मूलं पक्षतिः ॥

तेन वित्तश्चुञ्चुप्चणपौ ॥ २९ ॥

तेनेति तृतीयासमर्थाद् प्रातिपदिकात् वित्त इत्यस्मिन्नर्थे चुञ्चुप्चणपौ प्रत्ययौ भवतः। वित्तः प्रतीतः ज्ञात उच्यते। विद्यया वित्तः विद्याचुञ्चुः। विद्याचणः। केशचुञ्चुः। केशचणः ॥

विनञ्भ्यां नानाञौ नसह ॥ ३० ॥

विनञित्येताभ्यां नसहार्थे पृथग्भावे वर्तमानाभ्यां यथासंख्यं नानाञित्येतौ प्रत्ययौ भवतः। विना नाना ॥

वेर्विस्तृते शालच्छङ्कटचौ ॥ ३१ ॥

विशब्दाद्विस्तृतेऽर्थे वर्तमानात् शालच्छङ्कटचौ प्रत्ययौ भवतः। विशालः। विशङ्कटः। विस्तृत इत्यर्थः ॥

कटच्च ॥ ३२ ॥

विशब्दाद्विस्तृतेऽर्थे वर्तमानात् कटच् प्रत्ययो भवति। विकटः ॥

समः सङ्कीर्णे ॥ ३३ ॥

संशब्दात् सङ्कीर्णेऽर्थे वर्तमानात् स्वार्थे कटच्प्रत्ययो भवति। सङ्कटः ॥

प्रात् प्रकाशे ॥ ३४ ॥

प्रशब्दात् प्रकाशेऽर्थे वर्तमानात् स्वार्थे कटच्प्रत्ययो भवति। प्रकटः ॥

उदोऽधिके ॥ ३५ ॥

उच्छब्दादधिकेऽर्थे वर्तमानात् स्वार्थे कटच्प्रत्ययो भवति । उत्कटः ॥

नेः समीपे ॥ ३६ ॥

*उत्कटात्(?) समीपेऽर्थे वर्तमानात् स्वार्थे कटच्प्रत्ययो भवति । निकटः ॥

अवात् कुटारच्चावनते ॥ ३७ ॥

अवशब्दादवनतेऽर्थे वर्तमानात् स्वार्थे कुटारच् । चकारात् कटच् प्रत्ययो भवति । अवकुटारः । अवकटः ॥

नासानतौ टीटञ्नाटज्भ्रटचः ॥ ३८ ॥

अवशब्दान्नासिकानतौ वाच्यायां टीटच् नाटच् भ्रटच् इत्येते प्रत्यया भवन्ति । अवटीटम् । अवनाटम् । अवभ्रटम् ॥

तद्वति च ॥ ३९ ॥

नासिकानतिर्यस्मिन् स तद्वान् नासिकापुरुषोऽवकृष्टस्वार्थः तस्मिन् वाच्ये अवशब्दात् टीटञ्नाटज्भ्रटचः प्रत्यया भवन्ति । अवटीटा नासिका अवनाटा, अवभ्रटः । अवटीटं ब्रह्मदेयम् । अवनाटम् अवभ्रटम् । अपकृष्टमपि वस्तु दृष्ट्वा लोको नासिकां नामयति ॥

नेर्बिडज्बिरीसचौ नीरन्ध्रे ॥ ४० ॥

निशब्दान्नीरन्ध्रेऽर्थे बिडच् बिरीसच् इत्येतौ प्रत्ययौ भवतः । निबिडः । निबिरीसः । घनः पदार्थ उच्यते ॥

इनच्पिटच्काश्चिकचिचिकश्चास्य स्थपुटे[1] ॥ ४१ ॥

निशब्दात् स्थपुटेऽर्थे इनच् पिटच् क इत्येते प्रत्यया भवन्ति । तत्सन्नियोगेन चास्य यथासंख्यं चिक चि चिक् इत्येते आदेशा भवन्ति । (चिकिनः) । चिपिटः । चिक्कः ॥

---

१. 'श्चिकचिचकश्चास्य' ख. ग. पाठः.

---

* 'निशब्दाद्' इति स्यात् ।

क्लिन्नाल्लश्चिल्पिल् चुलश्चास्य चक्षुषि ॥ ४२॥

क्लिन्नशब्दाच्चक्षुषि वाच्ये लप्रत्ययो भवति। तत्सन्नियोगेन च क्लिन्नशब्दस्य चिल पिल् चुल् इत्येते आदेशा भवन्ति। चिल्लं चक्षुः। पिल्लम्। चुल्लम्। तद्योगात् पुरुषोऽपि चिल्लः पिल्लः चुल्ल इति भवति ॥

पर्वतासन्नारूढभुवोरुपाधिभ्यां त्यकन् ॥ ४३ ॥

उपाधिशब्दाभ्यां पर्वतासन्नायामारूढायां भुवि त्यकन्प्रत्ययो भवति। उपत्यका। अधित्यका। 'मयन्तत्यकानामि'तीत्वप्रतिषेधः ॥

अलाबूतिलोमाभङ्गाभ्यो रजसि कटच् ॥ ४४ ॥

अलाबूप्रभृतिभ्यः सामर्थ्यादेव षष्ठ्यन्तेभ्यो रजस्यभिधेये कटच्प्रत्ययो भवति। अलाबूनां रजः अलाबूकटम्। तिलकटम्। उमाकटम्। भङ्गाकटम् ॥

अवेः सङ्घाते ॥ ४५ ॥

अविशब्दात् सङ्घातेऽर्थे कटच्प्रत्ययो भवति। अवीनां सङ्घातः अविकटः ॥

विस्तारे पटच् ॥ ४६ ॥

अविशब्दाद्विस्तारेऽर्थे पटच्प्रत्ययो भवति। अवीनां विस्तारः अविपटः ॥

पशुनामभ्यः स्थाने गोष्ठच् ॥ ४७ ॥

पशुनामभ्यः षष्ठीसमर्थेभ्यः स्थानेऽर्थे गोष्ठच्प्रत्ययो भवति। गवां स्थानं (गो)गोष्ठम् ॥

द्वित्वे गोयुगच् ॥ ४८ ॥

पशुनामभ्यः षष्ठीसमर्थेभ्यो द्वित्वे गम्यमाने गोयुगच्प्रत्ययो भवति। गोगोयुगम्। उष्ट्रगोयुगम् ॥

षट्त्वे षड्गवच् ॥ ४९ ॥

पशुनामभ्यः षष्ठीसमर्थेभ्यः षट्त्वे गम्यमाने षड्गवच्प्रत्ययो भवति । उष्ट्रषड्गवम् ॥

तिलादिभ्यः स्नेहे तैलच् ॥ ५० ॥

तिलादिभ्यः प्रातिपदिकेभ्यः सामर्थ्यादेव षष्ठीसमर्थेभ्यः स्नेहेऽभिधेये तैलच्प्रत्ययो भवति । तिलतैलम् । सर्षपतैलम् । इङ्गुदीतैलम् । एरण्डतैलम् ॥

इक्षुमूलकादिभ्यः क्षेत्रे शाकटशाकिनौ ॥ ५१ ॥

इक्ष्वादिभ्यो मूलकादिभ्यश्च षष्ठीसमर्थेभ्यः क्षेत्रेऽभिधेये यथासङ्ख्यं शाकटशाकिनौ प्रत्ययौ भवतः । इक्षुशाकटम् । जीरकशाकटम् । मूलशाकिनम् । वास्तुकशाकिनम् ॥

तत्र घटते कर्मणोऽठच् ॥ ५२ ॥

कर्मन्शब्दात् सप्तमीसमर्थाद् घटत इत्यस्मिन्नर्थेऽठच्प्रत्ययो भवति । कर्मणि घटते कर्मठः । अकार इकादेशाभावार्थः ॥

तदस्य सञ्जातं तारकापुष्पमञ्जरीमुकुळकुड्मळकुसुमकोरकाङ्कुरहस्तकरस्तबकपल्लवकिसलयेभ्य इतच् ॥ ५३ ॥

तदिति प्रथमासमर्थेभ्यस्तारकादिभ्यः शब्देभ्योऽस्येति षष्ठ्यर्थे इतच्प्रत्ययो भवति । यत्तत् प्रथमासमर्थं सञ्जातं चेत् तद् भवति । तारकाः सञ्जाता अस्य तारकितं नभः । पुष्पितो वृक्षः । मञ्जरितः । मुकुळितः । कुड्मलितः । कुसुमितः । कोरकितः । अङ्कुरितः । हस्तकितः । स्तबकितः । पल्लवितः । किसलयितः ॥

कण्टकपुलकरोमाञ्चहर्षोत्कर्षगर्वोत्कण्ठाकल्लोलतरङ्गाङ्गारकशृङ्गारान्धकारेभ्यः ॥ ५४ ॥

कण्टकादिभ्यस्तदस्य सञ्जातमित्यर्थे इतच्प्रत्ययो भवति । कण्टकितः । पुलकितः । रोमाञ्चितः । हर्षितः । उत्कर्षितः । गर्वितः । उत्कण्ठितः । कल्लोलितः । तरङ्गितः । अङ्गारकितः । शृङ्गारितः । अन्धकारितः ॥

कन्दलशैवलकुवलयकुतूहलकलङ्ककज्जलकर्दम-सीमन्ताभ्ररागवेगर्जीषेभ्यः ॥ ५५ ॥

कन्दलादिभ्यस्तदस्य सञ्जातमित्यर्थे इतच्प्रत्ययो भवति । कन्दलानि सञ्जातान्यस्य कन्दलितः । शैवलितः । कुवलयितः । कुतूहलितः । कलङ्कितः । कज्जलितः । कर्दमितः । सीमन्तितः । अभ्रितः । रागितः । वेगितः । ऋजीषितः ॥

क्षुत्तृड्बुभुक्षापिपासानिद्रातन्द्राज्वरगरव्याधि-व्रणसुखदुःखेभ्यः ॥ ५६ ॥

क्षुधादिभ्यः शब्देभ्यस्तदस्य सञ्जातमित्यर्थे इतच्प्रत्ययो भवति । क्षुज्जातास्य क्षुधितः । तृषितः । बुभुक्षितः । पिपासितः । निद्रितः । तन्द्रितः । ज्वरितः । गरितः । व्याधितः । व्रणितः । सुखितः । दुःखितः ॥

मूत्रपुरीषद्रोहदोहशास्त्रपण्डामुकुरमुद्रागर्वफलति-लकचन्द्रकादिभ्यश्च ॥ ५७ ॥

मूत्रादिभ्यः शब्देभ्यस्तदस्य सञ्जातमित्यर्थे इतच्प्रत्ययो भवति । मूत्रं सञ्जातमस्य मूत्रितः । पुरीषितः । द्रोहितः । दोहितः । शास्त्रितः । पण्डितः । मुकुरितः । मुद्रितः । गर्वितः । फलितः । तिलकितः । चन्द्रकितः । आदिग्रहणाद् यथादर्शनमन्येऽपि भवन्ति ॥

गर्भादप्राणिनि ॥ ५८ ॥

गर्भशब्दात् तदस्य सञ्जातमित्यर्थे इतच्प्रत्ययो भवति । न चेत् प्राणी प्रत्ययार्थो भवति । गर्भितो व्रीहिः । अप्राणिनीति किम् । गर्भः सञ्जातोऽस्या दास्या इति वाक्यमेव भवति ॥

मानान्मात्रट् ॥ ५९ ॥

मीयतेऽनेनेति मानं प्रमाणं परिमाणमुन्मानं सङ्ख्या च । तद्वाचिनः प्रातिपदिकात् प्रथमासमर्थादस्येति षष्ठ्यर्थे मात्रट्प्रत्ययो भवति । हस्तः

१. 'जिगवेभ्यः', २. 'न्ध', ३. 'प्रम्' ख.ग. पाठः.

प्रमाणमस्य हस्तमात्रम्। प्रस्थः परिमाणमस्य प्रस्थमात्रम्। पलमुन्मानमस्य पलमात्रम्। शतं मानमस्य शतमात्रम्। टित्करणं ङीबर्थम्। प्रादेशमात्री सामित् ॥

लुक् चास्य वा ॥ ६० ॥

योऽयं माने मात्रट्प्रत्ययो विहितस्तस्य लुक् च वा भवति। हस्तः काष्ठं हस्तमात्रम्। प्रस्थो व्रीहिः प्रस्थमात्रम्। पलं सुवर्णं पलमात्रम्। शतं गावः शतमात्रम् ॥

न संशये ॥ ६१ ॥

मानाद्विहितस्य मात्रटः संशये गम्यमाने लुङ् न भवति। हस्तमात्रं वितास्तिमात्रं वा खातम्। प्रस्थमात्रं कुडुपमात्रं वा धान्यम्। पलमात्रं धरणमात्रं वा स्वर्णम्। शतमात्रमशीतिमात्रं वा गा(लाः ? वः) ॥

ऊर्ध्वं दघ्नट्[1] द्वयसट्[2] च ॥ ६२ ॥

तदिति प्रथमान्तादूर्ध्वमानवाचिनः प्रातिपदिकाद् अस्येति षष्ठ्यर्थे दघ्नट् द्वयसट् मात्रट् चै प्रत्यया भवन्ति। ऊरुदघ्नम्। ऊरुद्वयसम्। ऊरुमात्रम्। जानुदघ्नी। जानुद्वयसी। जानुमात्री ॥

हस्तिपुरुषाभ्यामण् च ॥ ६३ ॥

हस्तिपुरुषशब्दाभ्यामूर्ध्वमानवृत्तिभ्यां तदिति प्रथमासमर्थाभ्या मस्येति षष्ठ्यर्थेऽण् चकारान्मात्रडादयश्च प्रत्यया भवन्ति। हस्ती प्रमाणमस्य हास्तिनम्। 'इनोऽनपत्ये च' इति प्रकृतिभावः। हस्तिदघ्नम्। हस्तिमात्रम्। हस्तिद्वयसम्। पौरुषम्। पुरुषमात्रम्। पुरुषदघ्नम्। पुरुषद्वयसम् ॥

द्विगोर्लुक् ॥ ६४ ॥

द्विगोर्मानादुत्पन्नस्य मात्रडादेः प्रत्ययस्य लुग् भवति। द्विहस्तम्। द्विप्रस्थम्। द्विपलम्। द्विशतम्। द्विह(स्त ? स्ति)। द्विपुरुषम्। द्विप्रस्थी। द्विकाण्डी। द्विपुरुषी परिखा। द्विपुरुषी सौधभित्तिः ॥

---

१,२. 'च्' ख. ग. पाठः.

## शन्शच्छतिभ्या डिनिर्वा ॥ ६५ ॥

शनन्ताच्छदन्ताच्छत्यन्ताच्च मानवाचिनः प्रातिपदिकात् प्रथमासमर्थादस्येति षष्ठ्यर्थे डिनिप्रत्ययो वा भवति। पञ्चदश दिनानि परिमाणमेषां पञ्चदशिनोऽर्धमासाः। त्रिंशिनो मासाः। विंशिनोऽङ्गिरसः। पक्षे पञ्चदशमात्राः। त्रिंशन्मात्राः। (विंशतिमात्राः)। डकारष्टिलोपार्थः। इकारो हल्परित्राणार्थः॥

## यत्तदेतेभ्यो वतुप् ॥ ६६ ॥

यदादिभ्यस्तदस्य परिमाणमित्यस्मिन्नर्थे वतुप्प्रत्ययो भवति वा। (यावदेव यावन्मात्रं यावद्द्वयसम्। तावन्मात्रम्। ? ) यत् परिमाणमस्य यावान्। तावान्। एतावान्। 'आ सर्वनाम्न' इत्यात्वम्। पक्षे यन्मात्रम्। तन्मात्रम्। एतन्मात्रम्। ऊर्ध्वमाने यद्दघ्नं यद्द्वयसं इत्याद्यपि भवति॥

## किमिदंभ्यांवो घः॥ ६७ ॥

किमिदंभ्यामुत्तरस्य वतुपो वकारस्य घकारादेशो भवति। इयान्। कियान्। एतदेवादेशवचनं ज्ञापकं किमिदंभ्यां वतुबस्तीति॥

## वतोः स्वार्थे मात्रड्द्वयसटौ वा ॥ ६८ ॥

वत्वन्तात् प्रातिपदिकात् स्वार्थे मात्रड्द्वयसटौ प्रत्ययौ वा भवतः। यावदेव यावन्मात्रम्। यावद्द्वयसम्। तावन्मात्रं तावद्द्वयसम्। एतावन्मात्रम् एतावद्द्वयसम्। कियन्मात्रं कियद्द्वयसम्॥

## किमः सङ्ख्याप्रश्ने डति च ॥ ६९ ॥

किमः सङ्ख्याप्रश्ने वर्तमानात् प्रथमासमर्थादस्येति षष्ठ्यर्थे डतिप्रत्ययः चकाराद्वतुप् च भवति। का सङ्ख्या एषां ब्राह्मणानां कत्येते ब्राह्मणाः। कियन्त एते ब्राह्मणाः। प्रश्न इति किमर्थम्। ज्ञाने मा भूत्। केयमेषां सङ्ख्या दशानामिति॥

## अंशे सङ्ख्यायास्तयट् ॥ ७० ॥

१. 'तद्व्यो व', २. 'च्', ३. 'चौ' ख, ग, पाठः. ४. 'ङि' क, पाठः.

सङ्ख्याशब्देभ्योऽवयववृत्तिभ्यस्तदिति प्रथमासमर्थेभ्योऽस्येति षष्ठ्यर्थे तयट्प्रत्ययो भवति । अवयवस्यावयविना सम्बन्ध इति सामर्थ्यादवयवी प्रत्ययार्थो गृह्यते । पञ्चावयवा अस्य सङ्घस्य पञ्चतयः सङ्घः । दशतयः । पञ्चतयी माला । चतुष्टयी शब्दप्रवृत्तिः ॥

द्वित्रिभ्यामयङ् वा ॥ ७१ ॥

द्वित्रिभ्यामवयववृत्तिभ्यां प्रथमासमर्थाभ्यामस्येति षष्ठ्यर्थे अयट्प्रत्ययो वा भवति । द्वाववयवावस्य द्वयं.द्वितयम् । त्रयं त्रितयम् । द्वयी त्रयी ॥

उभान्नित्यम् ॥ ७२ ॥

उभशब्दादवयववर्त्तिनः प्रथमासमर्थादस्येति षष्ठ्यर्थे नित्यमयट्प्रत्ययो भवति । उभाववयवावस्योभयो मणिः । उभये देवमनुष्याः । उभ(यी) स्थितिः ॥

निमाननिमेययोर्मयट् ॥ ७३ ॥

निमाननिमेययोरंशे वर्तमानायाः सङ्ख्यायाः प्रथमासमर्थाया अस्येति षष्ठ्यर्थे मयट्प्रत्ययो भवति । द्वौ यवांशौ निमानमस्योदश्वितः द्विमयमुदश्विद्यवानाम् । त्रिमयं चतुर्मयम् । द्वावुदश्विदंशौ निमेयमेषां यवानां द्विमया यवा उदश्वितः । त्रिमयाः । चतुर्मयाः । निमाननिमेयसम्बन्धे षष्ठी । इह कस्मान्न भवति द्वौ यवांशौ निमानमेषामुदश्विदंशानामिति । समुदितानां यवांशसङ्ख्यासम्बन्धाभावात् । प्रत्येकं सम्बन्धे तु भवितव्यमेवम् । तदा द्वावुदश्विदंशौ निमेयमेषां यवांशानामिति । एको यवो निमानमस्योदश्वित इति न भवति । एकस्यांशांशिकल्पनाभावात् । सामर्थ्यात् तदावगम्येत । अंश इत्येव । द्वौ व्रीहियवौ निमानमस्योदश्वितः । सङ्ख्याया इत्येव । अंशो निमानमस्योदश्वितः ॥

तदस्मिन्नधिकं समानजातीयमिति शतिशदशान्तायाः शतसहस्रे व्यस्तसमस्ते डः ॥ ७४ ॥

तदिति प्रथमासमर्थायाः शतिशदशान्तायाः सङ्ख्याया अस्मिन्निति सप्तम्यर्थे डप्रत्ययो भवति । यत्तत् प्रथमासमर्थं समानजातीयमधिकं चेत्

तद् भवति। यत्तदस्मिन्निति निर्दिष्टं तच्चेच्छतं सहस्रं शतसहस्रं वा भवति। विंशतिरधिका अस्मिन् शते विंशं शतम्। त्रिंशम्। षोडशम्। एवं विंशं शतसहस्रं त्रिंशं षोडशमिति। शद्ग्रहणेन दशग्रहणं केवलनिवृत्त्यर्थम्। शतिशदन्तात् केवलाच्च भवति। एकविंशं शतम्। एकत्रिंशं सहस्रमिति। शतिशद्दशान्ताया इति किम्। षडधिका अस्मिन् शते। अधिकमिति किम्। पञ्चदश हीना अस्मिन् शते। समानजातीयमिति किम्। एकादश पणा अधिका अस्मिन् कार्षापणशते। अस्मिन्नितीति किम्। विंशतिरधिका अस्माच्छतात्। शतसहस्रमिति किम्। एकादशाधिका अस्यां विंशतौ॥

तस्य पूरणे डट्॥ ७५॥

तस्येति षष्ठीसमर्थायाः सङ्ख्यायाः पूरणेऽर्थे डट्प्रत्ययो भवति। सङ्ख्या पूर्यते येन स पूरणः एकादशानां पूरणमेकादशम्। द्वादशः। सङ्ख्यापूरणग्रहणादिह न भवति। एकादशानामुष्ट्रकाणां पूरणो घटः॥

विंशत्यादिभ्यस्तमड् वा॥ ७६॥

विंशत्या *

(नित्यं शतादिमासार्धमाससंवत्सरेभ्यः॥ ७७॥

षष्ठ्यादेरसङ्ख्यादेः॥ ७८॥

नो मट्॥ ७९॥

षट्कति(कति)पयेभ्यस्थट्॥ ८०॥

चतुरो यच्छौ चलोपश्च॥ ८१॥

द्वेस्तीयः॥ ८२॥

त्रेस्तृ च॥ ८३॥

बहुपूगगणसङ्घेभ्यस्तिथट्॥ ८४॥

वतोरिथट्॥ ८५॥

भागेऽष्टमादञ्ञौ वा॥ ८६॥

* इत उत्तरं कतिपयांशा गलिताः प्रतिभान्ति। धनूरेखाङ्कितानि च सूत्राणि सूत्रपाठादुद्धृत्य लिखितानि।

षष्ठात् ॥ ८७ ॥

माने कंश्च ॥ ८८ ॥

तेन ग्रन्थं गृह्णातीति ॥ ८९ ॥

पूरणाल्लुक् चास्य वा ॥ ९० ॥

ग्रहणे वा ॥ ९१ ॥

एकादाकिनिच्चासहाये ॥ ९२ ॥

तत्र कुशलमित्याकर्षात् ॥ ९३ ॥

त्सरुपिशाचपिचण्डनिचयाश्माशनिशकुनिजपतपल्लादह्लादपादेभ्यः कन् ॥ ९४ ॥

पथः पथ च ॥ ९५ ॥

धनहिरण्याभ्यां कामे ॥ ९६ ॥

स्वाङ्गेभ्यः सक्ते ॥ ९७ ॥)

दन्तकः नखकः । केशादिरचनायामभिनिविष्ट इत्यर्थः । बहुवचननिर्देशात् स्वाङ्गसमुदायादपि भवति । दन्तोष्ठकः । केशनखकः ॥

उदराट्ठगाद्यूने ॥ ९८ ॥

उदरशब्दात् तत्रेति सप्तमीसमर्थात् सक्त इत्यस्मिन्नर्थे ठक्प्रत्ययो भवति । योऽसौ सक्त आद्यूनः अविजिगीषुश्चेत् स भवति । उदरे सक्तः औदरिकः । आद्यून इति किम् । उदरकः ॥

सस्येन परिजातः ॥ ९९ ॥

सस्यशब्दान्निर्देशादेव तृतीयासमर्थात् परिजात इत्यस्मिन्नर्थे कन् प्रत्ययो भवति । सस्येन परिजातः सस्यकः खड्गः । सस्यको मणिः । सर्वतः सारेण सम्बद्ध इत्यर्थः ॥

अंशं हारी ॥ १०० ॥

---

१. 'शमवरयं हा' ख. ग. पाठः.

अशशब्दान्निर्देशादेव द्वितीयासमर्थादवश्यं हारिण्यर्थे कन्प्रत्ययो भवति। अंशमवश्यं हरति अंशको दायादः॥

## तन्त्रादचिरोद्धृते॥ १०१॥

तन्त्रशब्दान्निर्देशादेव पञ्चमीसमर्थात् अचिरोद्धृत इत्यस्मिन्नर्थे कन्प्रत्ययो भवति। तन्त्रात् पटवानोपकरणात् तदानीमेवोद्धृतः तन्त्रकः पटः। प्रत्यग्र उच्यते॥

## ब्राह्मणात् संज्ञायाम्॥ १०२॥

ब्राह्मणशब्दात् पञ्चमीसमर्थादचिरोद्धृत इत्यस्मिन्नर्थे संज्ञायां विषये (यत्? कन्)प्रत्ययो भवति। सदाचारब्राह्मणेभ्यस्तदानीमेवोद्धृत्य पृथक् कृतः ब्राह्मणको नाम देशः। यत्रायुधजीविनः काण्डस्पृष्टा नाम ब्राह्मणा भवन्ति॥

## उष्णात्॥ १०३॥

उष्णशब्दात् पञ्चमीसमर्थादचिरोद्धृत इत्यस्मिन्नर्थे संज्ञायां विषये कन्प्रत्ययो भवति। उष्णाद्–अग्नेरचिरोद्धृता उष्णिका यवागूः। अल्पा-(र्था? न्ना) पेया विलेपिकेति यावत्। उष्णकु(ण्डः? ण्डात्) निस्सृता नदीति केचित्॥

## शीताच्च कारिणि॥ १०४॥

शीतादुष्णाच्च द्वितीयासमर्थात् कारिण्यर्थे कन्प्रत्ययो भवति। शीतं मन्दं करोति शीतकः। अलसः। उष्णमग्नि(वत् क्षि)प्रं करोति उष्णकः दक्षः। संज्ञाग्रहणानुवृत्तेः शीतोष्णशब्दाविह मान्द्यशैघ्र्यवचनौ गृह्येते। न स्पर्शवचनौ। क्रियाविशेषणत्वात् कर्मत्वम्। कारीत्यवश्यं कारिणि॥

## अधेरारूढे॥ १०५॥

अधिशब्दादारूढेऽर्थे वर्तमानात् स्वार्थे कन्प्रत्ययो भवति। आरूढ-शब्दश्च कर्तरि कर्मणि च क्तप्रत्यये सिद्धः। तत्र यदा कर्तरि तदा

---

1. 'शमवश्यं हा' ख. ग. पाठः.

अधिको द्रोणः खार्याः । अधिको द्रोणः खार्यामिति च भवति । यदा कर्मणि तदा अधिका खारी द्रोणेन इति ॥

अनोः कमितरि ॥ १०६ ॥

अनुशब्दात् कन्प्रत्ययो भवति समुदायेन चेत् संज्ञ(क)मितरि गम्यते । अनुकामयते अनुकः ॥

अभेर्दीर्घश्च[1] वा ॥ १०७ ॥

अभिशब्दात् कन्प्रत्ययो दीर्घश्च वा भवति । समुदायेन चेत् संज्ञा गम्यते । अभीकः अभिकः ॥

पार्श्वेनान्विच्छति ॥ १०८ ॥

पार्श्वशब्दान्निर्देशादेव तृतीयासमर्थाद् अन्विच्छतीत्यस्मिन्नर्थे कन्प्रत्ययो भवति । पार्श्वेनानृजुनोपायेनोत्कोचादिकेन योऽर्थमन्विच्छति स एवमुच्यते । अयं चार्थविशेषः संज्ञाप्रस्तावाल्लभ्यते * ॥

अयःशूलदण्डाजिनाभ्यां ठक् ॥ १०९ ॥

अयःशूलदण्डाजिनशब्दाभ्यां निर्देशादेव तृतीयासमर्थाभ्यामन्विच्छतीत्यस्मिन्नर्थे ठक्प्रत्ययो भवति । तीक्ष्ण उपायोऽयःशूलम् तेनान्विच्छति आयःशूलिकः साहसिकः । दम्भो दण्डाजिनं तेनान्विच्छति दाण्डाजिनिकः दाम्भिकः । संज्ञाप्रस्तावादयमर्थविशेषो लभ्यते । तेन शिवभागवतादौ न भवति ॥

सोऽस्य ग्रामणीः ॥ ११० ॥

दृष्टानुवृत्तिसामर्थ्यात् कनेवानुवर्तते । तेन (न) ठक् । स इति प्रथमासमर्थाद् अस्येति षष्ठ्यर्थे कन्प्रत्ययो भवति । यत्तत् प्रथमासमर्थं ग्रामणीश्चेत् स भवति । देवदत्तो ग्रामणीरेषां त इमे देवदत्तकाः । ग्रामणीरिति किम् । देवदत्तः शक्त एषाम् ॥

---

१. 'श्चास्य वा' ख. ग. पाठः.

---

* अस्योदाहरणं मातृकायां न दृश्यते ।

श्रृङ्खलाद् बन्धनं करभे ॥ १११ ॥

श्रृङ्खलशब्दात् प्रथमासमर्थादस्येति षष्ठ्यर्थे कन्प्रत्ययो भवति। यत्तत् प्रथमासमर्थं बन्धनं चेत् तद् भवति। यत्तदस्येति निर्दिष्टं करभश्चेत् स भवति। श्रृङ्खलं बन्धनमस्य श्रृङ्खलकः करभः। (करभ इति किम्।) श्रृङ्खलं बन्धनमस्य गोः॥

उत्क उन्मनाः ॥ ११२ ॥

उत्क इति निपात्यते उन्मनाश्चेद् भवति। * उच्छब्दात्त ........ .... .... .... धा(?)नमिति क्रियावचनात् स्वार्थे प्रत्ययः। उत्कण्ठत इत्युत्कः। उन्मना इत्यर्थः॥

कालहेतुफलेभ्यो रोगे ॥ ११३ ॥

कालविशेषवाचिभ्यो हेतुवाचिभ्यः फलवाचिभ्यश्च प्रथमासमर्थेभ्यो-ऽस्येति षष्ठ्यर्थे कन्प्रत्ययो भवति। यत्तदस्येति निर्दिष्टं रोगश्चेद् भवति तृतीयावहोऽस्याविर्भावाय तृतीयको ज्वरः। चतुर्थकः। विषपुष्पं हेतु-रस्य विषपुष्पकः। काशपुष्पकः। शीतं फलं कार्यमस्य शीतकः। उष्णकः। रोग इति किम्। द्वितीयमहोऽस्य जातस्य बालक(स्या ?स्य)॥

प्रायोऽन्नमस्मिन् संज्ञायाम् ॥ ११४ ॥

स इति प्रथमासमर्थेभ्योऽ(स्येति षष्ठ्यर्थे ? स्मिन्निति सप्तम्यर्थे) कन्-प्रत्ययो भवति। यत्तत् प्रथमासमर्थमन्नं चेत् तत्(प्रत्ययो ? प्राय)विषयं भवति। (प्रायो वा?)। गुडापूपाः प्रायेणान्नमस्यां पौर्णमास्यां गुडापूपिका। कृसरिका। त्रिपुटिका। संज्ञायामिति किम्। सक्तवः प्रायेणान्नमस्मि-न्निति॥

कुल्माषादञ् ॥ ११५ ॥

कुल्माषशब्दात् प्रथमासमर्थात् प्रायोऽन्नमस्मिन् संज्ञायामित्य-स्मिन्नर्थे अञ्प्रत्ययो भवति। कुल्माषाः प्रायेणान्नमस्यां पौर्णमास्यां कौल्माषी॥

---

१. 'लं व', २. 'प्रयोजनमस्मिन्' क. पाठः.

---

* 'उच्छब्दात् संसाधनक्रियावचनात् तद्धति कन्प्रत्यय' इति वृत्तिः।

वटकादिनिः ॥ ११६ ॥

वट(कान्ता ? कशब्दा)त् प्रथमासमर्थादस्त्यस्मिन् संज्ञायामित्यस्मिन्नर्थे इनिप्रत्ययो भवति । वटकानि अस्येमान्यस्यां पौर्णमास्यां वटकिनी ।

साक्षाद् द्र(ष्टा ? ष्टरि) ॥ ११७ ॥

साक्षाच्छब्दाद् द्रष्टेत्यस्मिन्नर्थे संज्ञायां विषये इनिप्रत्ययो भवति । साक्षाद्द्रष्टा साक्षी साक्षिणौ साक्षिणः । 'अव्ययस्यानगच्छत्स्वसती'ति टिलोपः । संज्ञायां किम् । साक्षाद् द्रष्टा ॥

श्राद्धमनेनाद्य भुक्तं ठंश्च ॥ ११८ ॥

श्राद्धशब्दात् प्रथमासमर्थादनेनेति तृतीयार्थे ठन् चकारादिनिश्च प्रत्ययो भवति । यत्तत् प्रथमासमर्थमद्य भुक्तं चेत् तद् भवति । श्राद्धमनेनाद्य भुक्तं श्राद्धी श्राद्धिकः । अद्यग्रहणादद्य भुक्त एव । (श्रामनेनाद्यद्धे?) श्वः श्राद्धी श्राद्धिक इति इन् न भवति ॥

पूर्वादिनिः ॥ ११९ ॥

पूर्वशब्दादनेनेति तृतीयार्थे कर्तरि इनिप्रत्ययो भवति । पूर्वमनेन कृतं भुक्तं पीतं वा पूर्वी पूर्विणौ पूर्विणः । नाक्रियः कर्तास्तीति सामर्थ्यात् कृतादिक्रिया गृह्यते । पूर्वमिति च तद्विशेषणं भवति । इनिग्रहणं ठनो निवृत्त्यर्थम् ॥

सपूर्वात् ॥ १२० ॥

विद्यमानपूर्वात् पूर्वशब्दादनेनेति तृतीयार्थे इनिप्रत्ययो भवति । सामर्थ्यलभ्ययैव च क्रिययास्य पूर्वत्वमुपपद्यते । कृतं पूर्वमनेन कृतपूर्वी कटम् । यदि वा कृतः पूर्वं कटोऽनेन कृतपूर्वी कटम् । गतपूर्वी ग्रामम् । भुक्तपूर्वी दिनमिति ॥

इष्टपूर्तश्रुतगृहीतोद्गृहीतार्चितपठितानुपठितव्याकुलितनिराकृतोपाकृतोपकृतावधारितावकल्पितावकीर्णेभ्यः [॥ १२१ ॥

---

१. 'ष्टव्या । श्राद्ध' ख. ग. पाठः.

इष्टादिभ्यः प्रातिपदिकेभ्योऽनेनेति तृतीयार्थे इनिप्रत्ययो भवति। इष्टमनेन इष्टी[1] यज्ञे। पूर्ती दाने। श्रुती इतिहासे। गृहीती विद्याभ्यासे। उद्गृहीती उद्योगे। अर्चिती सद्वृत्ते। पठिती वेदे। अनुपठिती मीमांसायाम्। व्याकुलिती प्रजने। निराकृती शत्रौ। उपाकृती पशौ। उपकृती मित्रे। अवधारिती शास्त्रार्थे। अवकल्पिती जल्पे। अवकीर्णी दुर्नये। सर्वत्र 'क्तस्य चेन्विषयकर्मणि' इति कर्मणि सप्तमी॥

**आयुक्तासेविताम्नातपरिगणितानुगणित[2]गणितानिकथितनिषादितोपसादितपरिगदितपरिक(ल्पि ? लि)तपरिरक्षितसङ्क[3]लितसंरक्षितेभ्यश्च॥ १२२॥**

आयुक्तादिभ्यश्च प्रातिपदिकेभ्योऽनेनेति तृतीयार्थे इनिप्रत्ययो भवति। आयुक्तं युद्धमनेन आयुक्ती युद्धे। आसेविती राजनि। आम्नाती छन्दांसि। परिगणिती याज्ञिक्ये। अनुगणिती पदे। अनुगणिती निरुक्ते। गणिती ज्योतिषि। निकथिती कथायाम्। निषादिती मा···के। उपसादिती सदसि। परिगादिती परेषु। परिकलिती कलासु। परिरक्षिती परिजने। सङ्कलिती पदार्थेषु। संरक्षिती प्रजासु। पूर्ववत् सर्वत्र कर्मणि सप्तमी॥

**अनुपद्यन्वेष्टा॥ १२३॥**

अनुपदीति निपात्यते अन्वेष्टा चेद् भवति। अनुपदमेति अनुपदी गवाम्। अनुपदी उष्ट्राणाम्॥

**क्षे[4]त्रियच् परक्षेत्रे चिकित्स्यः[5]॥ १२४॥**

परक्षेत्रे चिकित्स्य इत्यस्मिन्नर्थे क्षेत्रिय इति निपात्यते। परक्षेत्रशब्दात् सप्तम्यन्तात् घच्प्रत्ययः परशब्दलोपश्च। परक्षेत्रे जन्मान्तरशरीरे चिकित्स्यः क्षेत्रियो व्याधिः। परशरीरं सङ्क्रमय्य चिकित्स्यते क्षेत्रियं विषम्। सस्यार्थे परक्षेत्रे जातानि चिकित्स्यानि नाश्यानि क्षेत्रियाणि तृणानि। परक्षेत्रे परकलत्रे चिकित्स्यो निग्राह्यः क्षेत्रियः पारदारिकः। चकारः स्वरार्थः॥

---

१. 'गु', २. 'तनि' ख. ग. पाठः. ३. 'थि' ख. पाठः. ४. 'त्रीच् प' क. पाठः. ५. 'त्स्याः' ख. ग. पाठः.

श्रोत्रियंश्छन्दोऽधीते ॥ १२५ ॥

छन्दोऽधीत इत्यस्मिन्नर्थे श्रोत्रियन्निति निपात्यते । (शब्दो ? छन्दो) वेदस्तमधीत इत्यस्मिन्नर्थे श्रोत्रभावो घन्प्रत्ययः । छन्दोऽधीते श्रोत्रियः। नकारः स्वरार्थः । प्रकरणभेदेन विधानात् छन्दोऽधीते छान्दस इत्यण्प्रत्ययोऽनेन (न) बाध्यते ॥

इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा ॥ १२६ ॥

इन्द्रियमित्यन्तोदात्तः । इन्द्रशब्दात् षष्ठीसमर्थात् लिङ्गमित्यास्मिन्नर्थे घच्प्रत्ययः । इन्द्रस्य लिङ्गमिन्द्रियम् । इन्द्र आत्मा । चक्षुरादिकरणेनानुमीयते नाकर्तृकं करणमस्तीति । इन्द्रेणात्मना दृष्टमिन्द्रियम् । स हि चक्षुरादीनि मनसा दृष्ट्वा मनसा संयोज्य विषये योजयति । इन्द्रेणात्मना सृष्टमिन्द्रियम् । आत्मकृतेन हि शुभाशुभेन कर्मणा तथाविधविषयोपभोगाय यानि चक्षुरादीनि भवन्ति । इन्द्रेणात्मना जुष्टमिन्द्रियम् । आत्मा मनसा संयुज्यते मन इन्द्रियेण इन्द्रियमर्थेनेति , तद्द्वारेणास्य विज्ञानोत्पादात् । इन्द्रेणात्मना विषयेभ्यो यथायथं ग्रहणाय समर्पितमिति इन्द्रियम् । इतिकरणः प्रकारार्थः । सति सम्भव इत्यादिव्युत्पत्तिः कर्तव्या । रूढेष्वनियमादि(ति) । वाशब्दः प्रत्येकमभिसम्बध्यमानो विकल्पानां स्वातन्त्र्यं दर्शयति ॥

तदस्यास्त्यस्मिन्निति मतुप् ॥ १२७ ॥

तदिति प्रथमासमर्थादस्येति षष्ठ्यर्थेऽस्मिन्निति सप्तम्यर्थे च मतुप्प्रत्ययो भवति । यत्तत् प्रथमासमर्थमस्ति चेत् तद् भवति । इतिकरणो विवक्षार्थः । तेन विषयो नियम्यते ॥

तद्यथा —

"भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ।
संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥"

भूम्नि तावद् — गावोऽस्य सन्ति गोमान् देवदत्तः । वृक्षा अस्मिन् सन्ति वृक्षवान् पर्वतः । निन्दायां— ककुदावर्तिनी । प्रशं-

माय— रूपवती कन्या। शीलवती। नित्ययोगे— क्षीरिणो वृक्षाः। कण्टकिनः। अतिशायने— उदरिणी कन्या। बलवान् मल्लः। संसर्गे— दण्डी छत्रीति। प्रायिकं चैतत्। तेन सन्मात्रेऽपि भवति। (गु ? य)व-मतीमि(रद्भि)र्यूपं प्रोक्षति' अस्तिमानयमद्यापि नः प्रतिददातीति। अस्तीति वर्तमानकालोपादानाद्वर्तमानसत्तायां प्रत्ययो भवति। न भूतभविष्यत्स-त्तायाम्। गावोऽस्यासन् गावोऽस्य भवितार इति॥

शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः।
सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते॥

## रसरूपवर्णगन्धस्पर्शशब्दस्नेहेभ्यो गुणेभ्यः॥ १२८॥

रसादिभ्यो गुणवृत्तिभ्यस्तदस्यास्त्यस्मिन्नित्यर्थे मतुप्प्रत्ययो भवति। पुनर्वचनमिनादिनिवृत्त्यर्थम्। रसवान्। रूपवान्। वर्णवान्। गन्धवान्। स्पर्शवान्। शब्दवान्। स्नेहवान्। गुणेभ्य इति किम्। रसी इक्षुः। रसिको नटः। द्रवद्रव्यसम्बन्धो भावयोगश्च प्रतीयते। गन्धी गन्धिक इति सम्बन्धित्वम्। चन्दनानि वार्ता च प्रतीयते॥

## तद्विशेषेभ्यो लुक्॥ १२९॥

रसादिविशेषेभ्यो मधुररक्तस्वादिभ्य(?) उत्पन्नस्य मतुबादेर्लुग् भवति। मधुरो रसोऽस्यास्तीति मधुरः। अम्लः। शुक्लः। कृष्णः। सुरभिः। असुरभिः। शीतः। उष्णः। तारः। मन्द्रः। चिक्किदः। चक्कसः। इति॥

## प्राण्यङ्गादातो लच् वा॥ १३०॥

प्राण्यङ्गवाचिनः शब्दादाकारान्तात्तदस्यास्त्यस्मिन्नित्यर्थे लच्प्रत्ययो भवति वा। चूडालः चूडावान्। शिखालः शिखावान्। प्राणिग्रहणं किम्। शिखावान् प्रदीपः। जङ्घावान् प्रासादः। अङ्गग्रहणं किम्। इच्छावान् वासनावान्। आत इति किम्। हस्तवान् पादवान्। प्रत्ययस्वरेणैव सिद्धे चकारः 'स्वरितो वानुदात्ते पदादौ' इति स्वरितबाधनार्थः॥

## जटाघटाभ्यां क्षेपे॥ १३१॥

---

१. 'घा' क. पाठः.

जटाघंटाशब्दाभ्यां तदस्यास्त्यस्मिन्नित्यर्थे क्षेपे गम्यमाने लच्प्रत्ययो भवति । जटालः । घंटालः । *ऋत्वन्तात् (?) क्षेपस्या(न)वगमात् वि-(कार ? कल्पेऽपि) लजेव ॥

क्षुद्रजन्तूपतापेभ्यश्च ॥ १३२ ॥

क्षुद्रजन्तुवाचिभ्य उपतापवाचिभ्यश्च प्रातिपदिकेभ्यस्तदस्यास्त्यस्मिन्नित्यर्थे लच्प्रत्ययो भवति । यूकालः । विपादिकालः । विचर्चिकालः । मूर्च्छालः । आत इत्येव । मशकवान् । मत्कुणवान् । श्वासवान् । कासवान् ॥

सिध्मगड्डुमणिकर्णपर्णपांसुमांसनाभिपशुप्रज्ञासक्थिहनूदकबीजस्नेहेभ्यः ॥ १३३ ॥

सिध्मादिभ्यः प्रातिपदिकेभ्यस्तदस्यास्त्यास्मिन्नित्यर्थे लच्प्रत्ययो भवति । सिध्मान्यस्य सन्ति सिध्मलः । गड्डुलः । मणिलः । कर्णलः। पर्णलः । पांसुलः । मांसलः । नाभिलः । पशुलः । प्रज्ञालः । सक्थिलः । हनूलः । उदकलः । बीजलः । स्नेहलः । पक्षे सिध्मवानित्याद्यपि भवति ॥

शीतश्यामकृष्णपिङ्गपेशपक्ष्मपृथुमृदुमञ्जुपत्रपुष्कनिष्पावचटुकपिकण्डूभ्यः ॥ १३४ ॥

शीतादिभ्यस्तदस्यास्त्यास्मिन्नित्यर्थे लच्प्रत्ययो भवति । शीतमास्मिन्नस्ति शीतलः । श्यामलः । कृष्णलः । पिङ्गलः । पेशलः । पक्ष्मलः । पृथुलः । मृदुलः । मञ्जुलः । पत्रलः । पुष्कलः । निष्पावलः । चटुलः । कपिलः । कण्डूलः । पक्षे शीतवानित्याद्यपि भवति ॥

पार्ष्णिधमन्योर्दीर्घश्च ॥ १३५ ॥

पार्ष्णिधमनिशब्दाभ्यां तदस्यास्त्यस्मिन्नित्यर्थे लच्प्रत्ययो (वा) भवति तत्सान्नियोगेन च तयोर्दीर्घो भवति । पार्ष्णीलः पार्ष्णिवान् । धमनीलः धमनिवान् ॥

वातदन्तबलगलललाटानामू च ॥ १३६ ॥

---

१, २. 'घा' क. पाठः. ३. 'ण्ड्ड' क. ग. पाठः.

---

* 'मतुबन्ताद्' इति पाठः स्यात् ।

वातादिभ्यः प्रातिपदिकेभ्यस्तदस्यास्त्यस्मिन्नित्यर्थे लच्प्रत्ययो भवति वा, तत्सान्नियोगेन चैषामूकारो भवति । वातूलः । दन्तूलः । बलूलः । गेलूलः । ललाटूलः । पक्षे वातवानित्याद्यपि भवति ॥

वत्सांसाभ्यां स्निग्धबलिनोः ॥ १३७ ॥

वत्सांसशब्दाभ्यां तदस्यास्त्यस्मिन्नित्यर्थे यथासङ्ख्यं स्नेहवति बलवति चाभिधेये लच्प्रत्ययो भवति । वत्सलः स्नेहवान् । अंसलः बलवान् । न चायमर्थो मतुपा प्रतीयत इति विकल्पाधिकारेऽपि लज् भवति ॥

फेनात् ॥ १३८ ॥

फेनशब्दात् तदस्यास्त्यस्मिन्नित्यर्थे लच्प्रत्ययो भवति । फेनलः । फेनवान् ॥

पिच्छोरःपर्णोदर्कधुवकाधूवकाप्रज्ञाभ्यश्चेलच् ॥ १३९ ॥

पिच्छादिभ्यः फेनशब्दाच्च तदस्यास्त्यस्मिन्नित्यर्थे इलच्प्रत्ययो भवति । पिच्छिलः । उरसिलः । पर्णिलः । उदकिलः । धुवकिलः । धूवकिलः । प्रज्ञिलः । (फेनिलः ।) पक्षे पिच्छवान् । फेनलः । फेनवान् । न चायमर्थो मतुपा प्रतीयते इति विकल्पाधिकारेऽपि लजेव भवति ॥

जटाघ[2]टाकालाभ्यः क्षेपे ॥ १४० ॥

जटादिभ्यस्तदस्यास्त्यस्मिन्नित्यर्थे क्षेपे गम्यमाने इलच्प्रत्ययो भवति । जटिलः । घं[3]टिलः । कालिलः । मतुपा क्षेपानवगमाद्विकल्पाधिकारेऽपि क्षेपे इलजेव भवति ॥

तुन्दोदरपिचण्डर्क[4]लापङ्ककाकयववीहि[5]ग्रहगुहाभ्यः ॥१४१॥

---

१. 'कपृथुकाधुवकाप्रज्ञापिण्डेभ्यश्चे' ख, ग. पाठः. २, ३. 'घा' क. ख. पाठः. का' क. पाठः. ५, 'हिशालिग्र' ख. ग. पाठः.

तुन्दादिभ्यस्तदस्यास्त्यस्मिन्नित्यर्थे इलच्प्रत्ययो वा भवति । तुन्दिलः । उदरिलः । पिचण्डिलः । कलिलः । पङ्किलः । काकिलः । यविलः । व्रीहिलः । ग्रहिलः । गुहिलः । पक्षे तुन्दी (कृति? तुन्दि)कस्तुन्दवानित्याद्यपि भवति ॥

स्वाङ्गेभ्यो वृद्धौ ॥ १४२ ॥

वृद्धाविति प्रकृतिविशेषणम् । वृद्धिविशेषवाचिभ्यः स्वाङ्गेभ्यः प्रातिपदिकेभ्यस्तदस्यास्त्यस्मिन्नित्यर्थे इलच्प्रत्ययो वा भवति । वृद्धौ महान्तौ कर्णौ यस्य स्तः (स) कर्णिलः । पा(टि? दि)लः । पक्षे कर्णवान् कर्णी कर्णिकः । इत्याद्यपि भवति ॥

लोमरोम[1]पप्लुबभ्रुहुकुरुरुहरिकपिकर्केभ्यः शः ॥ १४३ ॥

लोमादिभ्यस्तदस्यास्त्यस्मिन्नित्यर्थे शप्रत्ययो वा भवति । लोमशः । रोमशः । पप्लुशः । बभ्रुशः । हुकुशः । रुरुशः । हरिशः । कपिशः । कर्कशः । पक्षे लोमवानित्याद्यपि यथाविधानं भवति ॥

पामवामहेमशामश्लेष्मोष्मदद्रुक्रिमिबलिभ्यो नः ॥ १४४ ॥

पामादिभ्यस्तदस्यास्त्यस्मिन्नित्यर्थे नप्रत्ययो वा भवति । पामनः । वामनः । हेमनः । शामनः । श्लेष्मणः । (ऊष्मणः ।) दद्रुणः । क्रिमिणः । बलिनः । पक्षे पामवानित्याद्यपि यथाविधानं भवति ॥

शाकीपलालीकद्रूणां ह्रस्वश्च ॥ १४५ ॥

शाक्यादिभ्यस्तदस्यास्त्यस्मिन्नित्यर्थे नप्रत्ययो भवति तत्सन्नियोगेन चैषां ह्रस्वो भवति । शाकी अस्मिन्नस्ति शाकिनम् । पलालिनम् । कद्रुणम् । महत् शाकं शाकसमूहो वा शाकी । महत् पलालं क्षोदो वा पलाली । नागमाता गृहगोधा वा कद्रूः ॥

विष्वचोऽकृतसन्धेरुत्तरपदलोपश्च ॥ १४६ ॥

विष्वक्छब्दात् तदस्यास्त्यस्मिन्नित्यर्थे नप्रत्ययो भवति । अञ्चतीति विष्वञ्चयोगेनाकृतसन्धेरुत्तरपदस्य लोपो भवति । विष्व(स्व?)ञ्चतीति विष्वक् तदस्यास्तीति विषुणः । पक्षे विष्वग्वान् ॥

---

१. 'मबभ्रुभ्रुरुकु' ख. ग. पाठः.

अङ्गात् कल्याणे ॥ १४७ ॥

अङ्गशब्दात् कल्याणेऽर्थे वर्तमानात् तदस्यास्त्यस्मिन्नित्यर्थे नप्रत्ययो भवति । कल्याणान्यङ्गान्यस्याः सन्ति अङ्गना । कल्याण इति किम् । अङ्गवती ॥

लक्ष्म्या अच् ॥ १४८ ॥

लक्ष्मीशब्दात् तदस्यास्त्यस्मिन्नित्यर्थे नप्रत्ययो भवति । तत्सान्नियोगेन चाकारोऽस्यान्तादेशो भवति । लक्ष्मीरस्यास्ति लक्ष्मणः । पक्षे लक्ष्मीवान् ॥

प्रज्ञाश्रद्धार्चावृत्तिभ्यो णः॥ १४९ ॥

प्रज्ञादिभ्यस्तदस्यास्त्यस्मिन्नित्यर्थे णप्रत्ययो भवति वा । प्रज्ञास्यास्तीति प्राज्ञः । श्राद्धः । आर्चः । वार्त्तः । पक्षे प्रज्ञावानित्यादि ॥

तपस्सहस्राभ्यामण् ॥ १५० ॥

आभ्यां तदस्यास्त्यस्मिन्नर्थे अण्प्रत्ययो वा भवति । तपोऽस्यास्तीति तापसः । पक्षे तपस्वी । असन्तत्वाद् विनिः । साहस्रः सहस्रवान् सहस्री । अदन्तत्वादिनिः ॥

ज्योत्स्नातमिस्राकुण्डलकुतुपविसर्पविपादिकाभ्यः॥ १५१ ॥

ज्योत्स्नादिभ्यस्तदस्यास्त्यस्मिन्नित्यर्थे अण्प्रत्ययो वा भवति । ज्योत्स्ना अस्यास्ति ज्यौत्स्नः । तामिस्रः । कौण्डलः । कौतुपः । वैसर्पः । वैपादिकः । पक्षे ज्योत्स्नावानित्यादि ॥

सिकताशर्कराभ्याम् ॥ १५२ ॥

आभ्यां तदस्यास्त्यस्मिन्नित्यर्थेऽण्प्रत्ययो भवति वा । सिकता अस्मिन् सन्ति सैकतो घटः । शार्करः । सिकतावान् ॥

देशे लुबिलचौ च ॥ १५३ ॥

सिकताशर्कराभ्यां तदस्यास्त्यस्मिन्नित्यर्थे देशेऽभिधेये लुबिलचौ चकारादण्प्रत्ययश्च वा भवति । सिकता अस्मिन् देशे सन्ति सिकता

१. 'जौ' क. पाठः.

देशः । सैकतः । सिकतावान् । सिकतिलः । शर्करा देशः । शर्करिलः । शार्करः । शर्करावान् । चातुरर्थिकेनैव संज्ञायां वचनम् । संज्ञार्थं तत्र हि तन्नाम्नीत्यनुवर्तते ॥

दन्तादुन्नतादुरच् ॥ १५४ ॥

दन्तशब्दादुन्नतोपाधिकात् तदस्यास्त्यस्मिन्नित्यर्थे उरच्प्रत्ययो भवति । उन्नता दन्ता अस्य दन्तुरः । उन्नतादिति किम् । दन्तवान् ॥

ऊषसुषिमुष्कमधुबन्धुनखमुखपांसुपाण्डुभ्यो रः ॥ १५५ ॥

ऊषादिभ्यस्तदस्यास्त्यस्मिन्नित्यर्थे रप्रत्ययो वा भवति । ऊषरः । सुषिरः । मुष्करः । मधुरः । बन्धुरः । नखरः । मुखरः । पांसुरः । पाण्डुरः । इतिकरणस्य विवक्षार्थत्वाद् ऊषवान् घटः । मधुमान् वृक्ष इति ॥

खनगसिन्धुकुञ्जेभ्यः संज्ञायाम् ॥ १५६ ॥

खादिभ्यः शब्देभ्यस्तदस्यास्त्यस्मिन्नित्यर्थे संज्ञायां विषये रप्रत्ययो भवति । खमस्यास्ति खरः रासभः । नगरं पत्तनम् । सिन्धुरो हस्ती । कुञ्जरः स एव । संज्ञायामिति किम् । खवान् । नगवान् । सिन्धुमान् । कुञ्जवान् ॥

कच्छ्वा ह्रस्वश्च ॥ १५७ ॥

कच्छूशब्दात् तदस्यास्त्यस्मिन्नित्यर्थे रप्रत्ययो वा भवति । तत्सन्नियोगेन ह्रस्वश्चास्य भवति । कच्छुरः । कच्छूमान् ॥

द्युद्रुभ्यां मः ॥ १५८ ॥

द्युद्रुशब्दाभ्यां तदस्यास्त्यस्मिन्नित्यर्थे मप्रत्ययो भवति । द्युमः द्रुमः । विकल्पाधिकारेऽपि रूढिशब्दत्वादनयोर्मतुब् न भवति ॥

केशमणिहिरण्यराजीकुमारेष्टकाबिम्बेभ्यो वः[2] ॥ १५९ ॥

केशादिभ्यस्तदस्यास्त्यस्मिन्नित्यर्थे वप्रत्ययो वा भवति । केशवः । मणिवः । हिरण्यवः । राजीवः । कुमारवः । इष्टकावः । बिम्बवः । पक्षे केशवान् केशी इत्यादि ॥

१. 'शारे', २. 'म्बादिभ्यो' ख. ग. पाठः.

अर्णसो लोपश्च ॥ १६० ॥

अर्णस्शब्दात् तदस्यास्त्यस्मिन्नित्यर्थे वप्रत्ययः लोपश्चास्य भवति । अर्णवः । रूढित्वान्न मतुप् ॥

गाण्ड्यजगाभ्यां संज्ञायाम् ॥ १६१ ॥

गाण्ड्यजगशब्दाभ्यां तदस्यास्त्यस्मिन्नित्यर्थे संज्ञायां विषये वप्रत्ययो भवति । गाण्डीवं धनुः । संहितासाम्याद् ह्रस्वान्तादपि भवति । गाण्डिवम् । अजगवम् । संज्ञायामिति किम् । गाण्डी । गाण्डीवान् । अजगवान् ॥

मेधारथाभ्यामिरः ॥ १६२ ॥

आभ्यां तदस्यास्त्यस्मिन्नित्यर्थे इरः प्रत्ययो वा भवति । मेधिरः मेधावान् मेधावी । रथिरः रथवान् ॥

काण्डाण्डाभ्यामीरच् ॥ १६३ ॥

आभ्यां तदस्यास्त्यस्मिन्नित्यर्थे ईरच्प्रत्ययो वा भवति । काण्डीरः काण्डवान् । अण्डीरः अण्डवान् ॥

कृष्यासुतिरजःपरिषद्भ्रातृपुत्रोत्सङ्गेभ्यो वलच् ॥ १६४ ॥

कृष्यादिभ्यस्तदस्यास्त्यस्मिन्नित्यर्थे वलच्प्रत्ययो वा भवति । कृषीवलः । आसुतीवलः । रजस्वला । परिषद्वलः । भ्रातृवलः । *पुत्रावलः । उत्सङ्गावलः । 'अणन्तानां वले' इति दीर्घत्वम् । पक्षे कृषिमानित्यादि । इतिकरणस्य विवक्षार्थत्वात् क्वचिद्विषये वलच् न भवत्येव । कृषिमत् क्षेत्रं । रजस्वान् वायुः ॥

दन्तशिखाभ्यां संज्ञायाम् ॥ १६५ ॥

दन्तशिखाशब्दाभ्यां तदस्यास्त्यस्मिन्नित्यर्थे संज्ञायां विषये वलच्प्रत्ययो भवति । दन्तावलो †धौम्यो हस्ती च । शिखावलं नगरं मयूरश्च ॥

* 'अणन्तानां वले' इत्यत्र संज्ञाग्रहणानुवृत्तेः संज्ञायामेव दीर्घविधिः प्रवर्तते । असंज्ञायां तु दीर्घाभाव । एतदभिप्रायेणैव काशिकावृत्तौ 'पुत्रवल' इत्युदाहृतम् । एवमुपर्यपि ।

† 'सैन्य' इति वृत्तिः ।

ज्योत्स्नातमिस्रोर्जस्विन्नूर्जस्वलमलीमसाः ॥ १६६ ॥

ज्योत्स्नादयः शब्दास्तदस्यास्त्यस्मिन्नित्यर्थे यथाविषयं निपात्यन्ते । ज्योतिश्शब्दान्नप्रत्यय उपधालोपश्च । ज्योत्स्ना चन्द्रप्रभा । अन्यत्र ज्योती रात्रिः । तमस उपधाया इत्वं रश्च प्रत्ययः । तमिस्रा रात्रिः तामिस्रः पक्षः । ऊर्जशब्दाद्विनिवलच्प्रत्ययोऽसुगागमश्च । ऊर्जस्वी ऊर्जस्वलः । रूढालङ्कारः । अन्यत्र ऊर्ज(वा)न् । मलादीमसच् मलीमसः बहिरन्तश्चाशुद्धः । अन्यत्र मलवान् ॥

नौसभाकुमारिकाक्करणयवखदाभ्यष्ठन्[1] ॥ १६७ ॥

नावादिभ्यस्तदस्यास्त्यस्मिन्नित्यर्थे ठन्प्रत्ययो वा भवति । नाविकः । सभिकः .... ... ... ...
.... ... ... .... ....
... ... ... ... ....
.... ... .... .... ....
यवखादिकः । पक्षे नौमानित्यादि ॥

व्रीहिशालिशीर्षमायाभ्य इनिश्च ॥ १६८ ॥

व्रीह्यादिभ्यः प्रातिपदिकेभ्यस्तदस्यास्त्यस्मिन्नित्यर्थे इनिश्चकारात् ठन्प्रत्ययो वा भवति । व्रीही व्रीहिकः व्रीहिमान् । शाली शालिकः शालिमान् । शीर्षी शीर्षिकः शीर्षवान् । अदन्तत्वादेव सिद्धे वचनं मत्वर्थीयेऽपि शिरसः शीर्षादेशार्थम् । मायी मायिकः मायावान् । मायावी ॥

अतः ॥ १६९ ॥

अदन्तात् प्रातिपदिकात् तदस्यास्त्यस्मिन्नित्यर्थे इनिठंश्च प्रत्ययो वा भवति । दण्डी दण्डिकः दण्डवान् ॥

धनादुत्तमर्णे ॥ १७० ॥

धनशब्दात् तदस्यास्त्यस्मिन्नित्यर्थे उत्तमर्णेऽभिधेये इनिठंश्च प्रत्ययो भवति । धनी धनिकः । उत्तमर्ण इति किम् । धनवान् ॥

१. 'काभ्य' क. पाठः.

न द्रव्यादिभ्यः ॥ १७१ ॥

द्रव्यादिभ्योऽदन्तेभ्यस्तदस्यास्त्यस्मिन्नित्यर्थे इनिठनौ प्रत्ययौ न भवतः। द्रव्यवान्। क्रव्यवान्। सख्यवान् माल्यवान्। धान्यवान्। पुण्यवान्। सत्यवान्। अपत्यवान् ॥

कृद्भ्यश्चाकार्यगृहदात्रपोत्रभोगतरविजयसंयमादिभ्यः ॥

कृदन्तेभ्यश्च कार्यादिवर्जितेभ्यस्तदस्यास्त्यस्मिन्नित्यर्थे इनिठनौ प्रत्ययौ न भवतः। हव्यवान् कृत्यवान् भृत्यवान् गव्यवान् लाव्यवान्। कारकवान् हारकवान् कुम्भकारवान् धान्यमार्यवान् हिंस्रवान् ईश्वरवान् स्नेहवान् शब्दवान् प्रचयवान् स्वनयवान्। हसवान्। अकार्यादिभ्य इति किम्। कार्यी कार्यिकः। गृही गृहिकः। दात्री दात्रिकः। पोत्री पोत्रिकः। भोगी भोगिकः। तरी तरिकः। विजयी विजयिकः। संयमी संयमिकः। आदिग्रहणात् स्थानी स्थानिक इत्यादयो भवन्ति ॥

जातेरतण्डुलादेः ॥ १७३ ॥

जातिवाचिनः शब्दात् तण्डुलादिवर्जितात् तदस्यास्त्यस्मान्नित्यर्थे इनिठनौ न भवतः। व्याघ्रवान्। सिंहवान्। अतण्डुलादेरिति किम्। तण्डुली तण्डुलिकः। आदिग्रहणात् कर्पटी कर्पटिक इत्यादयो भवन्ति ॥

लंजादिविषये चाबीजपर्णपिण्डतुन्दोदरादिभ्यः ॥ १७४ ॥

.... .... .... .... दन्तेभ्यो बीजादिवर्जितेभ्यस्तदस्यास्त्यस्मिन्नित्यर्थे इनिठनौ न भवतः। सिध्मलः सिध्मवान्। फेनिलः फेनवान्। अबीजादिभ्य इति किम्। बीजी बी(ज?जि)कः। पर्णी प(र्ण?र्णि)कः। पिण्डी पिण्डिकः। तुन्दी तुन्दिकः। उदरी उदरिकः। आदिग्रहणात् कर्णी कर्णिक इत्यादयो भवन्ति ॥

एकाचः ॥ १७५ ॥

एकारान्ताद्(?)एकाचस्तदस्यास्त्यस्मिन्नित्यर्थे इनिठनौ न भवतः। स्ववान्। खवान् ॥

१. 'ललजा' क. पाठः.

सप्तम्याम् ॥ १७६ ॥

अदन्तात् सप्तम्यर्थे इनिठनौ न भवतः । दण्ड(वती ?) वीरवान् ग्रामः ॥

एकगोपूर्वादनेकद्रव्यात् ठञ् ॥ १७७ ॥

एकपूर्वाद् गोपूर्वाच्चाकारान्तात् एकद्रव्यवर्जितात् तदस्यास्त्यस्मिन्नित्यर्थे ठञ्प्रत्ययो भवति । ऐकवस्निकः । ऐकशतिकः । (नौ ? गौ) सहस्निकः । अनेकद्रव्यादिति किम् । एकद्रव्यवान् । अत इत्येव । गोविंशतिमान् । कथमैकरात्रिकः । समासान्ते टचि कृते भवति । कथं गौशकटिकः । शकटीपर्यायः शकटशब्दोऽस्ति । ततो भविष्यति ॥

निष्कादेः शतसहस्रात ॥ १७८ ॥

.... .... .... .... न्तात् तदस्यास्त्यस्मिन्नित्यर्थे ठञ् प्रत्ययो भवति । निष्कशतमस्यास्ति नैष्कशतिकः । नैष्कसहस्रिकः ॥

नवयज्ञादिभ्यः ॥ १७९ ॥

(नवयज्ञादिभ्य)स्तदस्यास्त्यस्मिन्नित्यर्थे ठञ्प्रत्ययो भवति । नवयज्ञोऽस्मिन्नस्ति नावयज्ञिकः । पाकयज्ञिकः । वर्तत इति न वक्तव्यं यो हि यत्र वर्तते स तत्रास्त्येवेति ॥

पूर्णमासोऽण् ॥ १८० ॥

पूर्णमाःशब्दात् तदस्यास्त्यस्मिन्नित्यर्थे अण्प्रत्ययो भवति । पूर्णमाश्चन्द्रमा अस्यामस्ति पौर्णमासी । वर्तते इति न वक्तव्यम् । यो हि यत्र वर्तते स तत्रास्त्येवेति ॥

द्वन्द्वोपतापगर्ह्यात् प्राणिस्थादस्वाङ्गादिनिः ॥

द्वन्द्वसंज्ञादुपतापवाचिनो गर्हिताच्च प्रातिपदिकात् प्राणिस्थादस्वाङ्गवाचिन इनिप्रत्ययो भवति तदस्यास्त्यस्मिन्नित्यर्थे । कटकवलयिनी । शङ्खकाङ्कदिनी । कुष्ठी । किलासी । ककुदावर्त्ती । काकतालुकी । प्राणिस्थादिति किम् । पुष्पफलवान् वृक्षः । अस्वाङ्गादिति किम् । स्तनके-

शवती । अत इत्येव । चित्रललाटिकावती । अदन्तत्वादेवेनौ सिद्धे पुनर्वचनं ठनादिबाधनार्थम् ॥

वातातिसारपिशाचानां कुक् च ॥ १८२ ॥

वातादिभ्यस्तदस्यास्त्यस्मिन्नित्यर्थे इनिप्रत्ययः कुक् चागमो भवति । वातातिसारयोरुपतापत्वात् पूर्वेणैव सिद्धे कुगर्थं वचनम् । वातकी । अतिसारकी । पिशाचकी ॥

वयसि पूरणात् ॥ १८३ ॥

पूरणे यो विहितस्तदन्ताद् वयसि गम्यमाने इनिप्रत्ययो भवति । पञ्चमो मासः संवत्सरो वा अस्यास्ति पञ्चमी बालकः । दशमी कलभः ॥

सुखदुःखतृप्रकृच्छ्राश्रकक्षकृपणसोढप्रतीप[1]प्रणयहु[2]लालीकेभ्यः ॥ १८४ ॥

सुखादिभ्यस्तदस्यास्त्यस्मिन्नित्यर्थे इनिप्रत्ययो भवति । सुखी । दुःखी । सुखदुःखी । तृप्री । कृच्छ्री । अश्री । कक्षी । कृपणी । सोढी । प्रतीपी । प्रणयी । हुली । अलीकी ॥

मालायाः क्षेपे ॥ १८५ ॥

मालाशब्दात् तदस्यास्त्यस्मिन्नित्यर्थे क्षेपे गम्यमाने इनिप्रत्ययो भवति । माली । क्षेप इति किम् । मालावान् । मालाशब्दः शिखादिषु पठ्यते । इह तु पाठः पक्षे मतुब् मा भूदिति ॥

बलाद् बाहूरुपूर्वात् ॥ १८६ ॥

बलान्तात् बाहूरुपूर्वात् प्रातिपदिकात् तदस्यास्त्यस्मिन्नित्यर्थे इनिप्रत्ययो भवति । बाहुबली । ऊरुबली ॥

---

१. 'त' क. पाठः. २. 'ह' ग. पाठः

सर्वादेर्धनबीजकेशात[1] ॥ १८७ ॥

सर्वादेर्धनाद्यन्तात् प्रातिपदिकात् तदस्यास्त्यस्मिन्नित्यर्थे इनप्रत्ययो भवति । सर्वधनी वार्धुषिकः । सर्वबीजी कर्षकः । सर्वकेशी नटः ॥

अर्थाद् याञ्चायाम् ॥ १८८ ॥

अर्थशब्दाद् याञ्चायां वर्तमानात् तदस्यास्त्यस्मिन्नित्यर्थे इनिप्रत्ययो भवति । अर्थनमर्थः सोऽस्यास्तीत्य(र्थी । याञ्चायामिति किम् । अ)र्थिकः अर्थवान् ॥

तदन्ताच्च ॥ १८९ ॥

तदन्ताच्च प्रातिपदिकात् तदस्यास्त्यस्मिन्नित्यर्थे इनिप्रत्ययो भवति । धान्यार्थी । विद्यार्थी ॥

धर्मशीलवर्णान्तात् ॥ १९० ॥

धर्माद्यन्तात् प्रातिपदिकात् तदस्यास्त्यस्मिन्नित्यर्थे इनिप्रत्ययो भवति । ब्राह्मणधर्मी । ब्राह्मणशीली । ब्राह्मणवर्णी ॥

हस्तकरदन्तेभ्यो जातौ ॥ १९१ ॥

हस्तादिभ्यस्तदस्यास्त्यस्मिन्नित्यर्थे इनिप्रत्ययो भवति, समुदायेन चेज्जातिरभिधीयते । हस्तोऽस्यास्तीति हस्ती । करी । दन्ती । जाताविति किम् । हस्तवान् पुरुषः । करवान् ॥

वर्णाद् ब्रह्मचारिणि ॥ १९२ ॥

वर्णशब्दात् तदस्यास्त्यस्मिन्नित्यर्थे ब्रह्मचारिण्यभिधेये इनिप्रत्ययो भवति । वर्णी ब्रह्मचारी । त्रैवर्णिको विप्रः । स हि विद्याग्रहणार्थं स्ववर्णाश्रमविहितेन धर्मेण नियमानाचरति । ब्रह्मचारिणीति किम् । वर्णवान् ॥

पुष्करपद्मोत्पलतमालकुमुदकैरवनलिनहिरण्यकर्दमकरीषशिरीषकपित्थतटतरङ्गकल्लोलशालूकेभ्यो देशे ॥ १९३ ॥

---

१. 'को' क. पाठः.

पुष्करादिभ्यस्तदस्यास्त्यस्मिन्नित्यर्थे देशे अभिधेये इनिप्रत्ययो भवति। पुष्कराणि सन्त्यस्यामस्या वा पुष्करिणी। पद्मिनी। उत्पलिनी। तमालिनी। कुमुदिनी। कैरविणी। नलिनी। हिरण्यिनी। कर्दमिनी। करीषिणी। शिरीषिणी। कपित्थिनी। तटिनी। तरङ्गिणी। कल्लोलिनी। शालूकिनी। देश इति किम्। पुष्करवान् हस्ती॥

**कमलसरोरुहसरोजाम्भोजराजीवारविन्दपङ्कजाब्जपुटकनालीकमृणालबिसतामरसयवासमन्मान्तेभ्यो नाम्नि॥ ॥ १९४॥**

कमलादिभ्यो मन्नन्तेभ्यो मान्तेभ्यश्च तदस्यास्त्यस्मिन्नित्यर्थे संज्ञायामिनिप्रत्ययो भवति। कमलिनी। सरोरुहिणी। सरोजिनी। अम्भोजिनी। राजीविनी। अरविन्दिनी। पङ्कजिनी। अब्जिनी। पुटकिनी। नालीकिनी। मृणालिनी। बिसिनी। तामरसिनी। यवासिनी। मन्नन्तेभ्यः— प्र(श? थि)मिनी। महि(मि)नी। सामिनी। मान्तेभ्यः— यामिनी। *(मोहिनी?)। कामिनी। नाम्नीति किम्। कमलवान्। बिसवान्। सामवान्। सोमवान्॥

**शिखाशाखाकेकामालामेखलाबलाकापताकाष्टकाचूडाबडवाघृणावीणाजरागदासंज्ञासूनामनीषादंष्ट्राभ्यो वा॥ ॥ १९५॥**

शिखादिभ्यस्तदस्यास्त्यस्मिन्नित्यर्थे इनिप्रत्ययो वा भवति। शिखी। शाखी। केकी। (का? मा)ली। मेखली। बलाकी। पताकी। अष्टकी। चूडी। बडवी। घृणी। (वीणी।) अजरी। अगदी। संज्ञी। सूनी। मनीषी। दंष्ट्री। पक्षे शिखावानित्याद्यपि भवति॥

**बलकुलोत्साहोदासायासायामप्रयामव्यायामोपयामारोहावरोहपरिणाहेभ्यः॥ १९६॥**

बलादिभ्यस्तदस्यास्त्यस्मिन्नित्यर्थे इनिप्रत्ययो वा भवति। बली। कुली। उत्साही। उदासी। आयासी। आयामी। प्रयामी। व्यायामी।

१. 'या' क. पाठः. २. 'दासोया' ख. ग. पाठः.

* 'महयोर्व्यत्ययेन होमिनी' इति स्यात्।

उपयामी । आरोही । अवरोही । परिणाही । पक्षे बलवानित्यादि । अदन्तत्वात् सिद्धे पुनर्वचनादिनिः ठनं बाधते । वावचनान्मतुप् च भवति ॥

उद्यमस्तबकालफलनिचुलमुकुलमानव्रतकर्मचर्मवर्मधर्मधन्वभ्यश्च ॥ १९७ ॥

उद्यमादिभ्यश्च तदस्यास्त्यस्मिन्नित्यर्थे इनिप्रत्ययो वा भवति । उद्यमी । स्तबकी । अली । फली । निचुली । मुकुली । मानी । व्रती । कर्मी । चर्मी । वर्मी । धर्मी । धन्वी । पक्षे उद्यमवानित्यादि । अत्राप्यदन्तेभ्य इनिः ठनं बाधते । मन्नन्तेभ्यस्त्वसंज्ञार्थं वचनम् । व्यवस्थितविभाषया फलिनी धान्विनीति संज्ञायामिनिर्भवति ॥

रूपादाहतप्रशंसयोर्यप् ॥ १९८ ॥

(रूपशब्दा)दाहतप्रशंसोपाधिकेऽर्थे वर्तमानात् तदस्यास्त्यस्मिन्नित्यर्थे यप्प्रत्ययो भवति । आहतं रूपमस्यास्ति रूप्यः कार्षापणः । प्रशस्तं रूपमस्यास्ति रूप्यो गौः । आहतप्रशंसयोरिति किम् । रूपवान् । व्यवस्थितविभाषया [1]असंज्ञायां रूपवती कन्येति भवति । आहते न भवति ॥

हिमादिभ्यः ॥ १९९ ॥

हिमादिभ्यस्तदस्यास्त्यस्मिन्नित्यर्थे यप्प्रत्ययो वा भवति । हिम्यः हिमवान् । गुण्यः गुणवान् ॥

अस्मायामेधास्रजो विनिः ॥ २०० ॥

असन्तेभ्यो मायादिभ्यश्च तदस्यास्त्यस्मिन्नित्यर्थे विनिप्रत्ययो वा भवति । यशस्वी । तपस्वी । पयस्वी । मायावी । मेधावी । स्रग्वी । पक्षे यशस्वान् । मायावान् । मायी इत्यादि ॥

आमयाद् दीर्घश्च ॥ २०१ ॥

आमयशब्दात् तदस्यास्त्यस्मिन्नित्यर्थे विनिप्रत्ययो दीर्घश्चास्य वा भवति । आमयावी । आमयी । आमयवान् ॥

वृन्दादारकन् ॥ २०२ ॥

---

१. 'एवमादि' ख. ग. पाठः.

वृन्दशब्दात् तदस्यास्त्यस्मिन्नित्यर्थे आरकन्प्रत्ययो भवति । वृन्दारकः । वृन्दवान् ॥

श‍ृङ्गात् ॥ २०३ ॥

श‍ृङ्गशब्दात् तदस्यास्त्यस्मिन्नित्यर्थे आरकन्प्रत्ययो वा भवति । श‍ृङ्गारकः । श‍ृङ्गवान् । श‍ृङ्गी ॥

फलबर्हमलाच्चेनच् ॥ २०४ ॥

फलादिभ्यः श‍ृङ्गाच्च तदस्यास्त्यस्मिन्नित्यर्थे इनच्प्रत्ययो वा भवति । फलिनः । फली । फलवान् । बर्हिणः । बर्ही । बर्हवान् । मलिनः । (मलीमसः?) मलवान् । श‍ृङ्गिणः । श‍ृङ्गवान् ॥

पर्वमरुद्भ्यां तप् ॥ २०५ ॥

पर्वमरुद्भ्यां तदस्यास्त्यस्मिन्नित्यर्थे तप्प्रत्ययो वा भवति । पर्वतः । पर्ववान् । मरुत्तः । मरुत्वान् ॥

स्वामिन्नीशे ॥ २०६ ॥

स्वशब्दादीश इत्यस्मिन्नर्थे आमिनिप्रत्ययो निपात्यते । स्वमस्यास्तीति स्वामी । ईश इति किम् । स्ववान् ॥

गोमिन् पूज्ये ॥ २०७ ॥

गोशब्दात् पूज्येऽभिधेये मत्वर्थे मिनिप्रत्ययो निपात्यते । गावोऽस्य सन्ति गोमी । पूज्य इति किम् । गोमान् ॥

वाचो ग्मिनिः ॥ २०८ ॥

वाक्छब्दान्मत्वर्थे ग्मिनिप्रत्ययो भवति । वाग्ग्मी । पूज्य इत्येव वाग्वान् ॥

आलजाटचौ कुत्सायाम् ॥ २०९ ॥

वाचः कुत्सायां मत्वर्थे आलजाटचौ प्रत्ययौ भवतः । वाचालः । वाचाटः । बहुभाषिणीति वक्तव्ये कुत्सायामिति किमर्थम् । यो हि सम्यग् बहु भाषते स वाग्ग्म्येव भवति ॥

अर्शसुरश्चतुरतुन्दपलिताभ्रजटाघटाम्ललवणादिभ्यो-ऽच् ॥ २१० ॥

अर्शस्प्रभृतिभ्यो मत्वर्थे अच्प्रत्ययो वा भवति । अर्शांस्यस्य सन्ति अर्शसः । उरसः । चतुरः । तुन्दः । पलितः । अभ्राणि सन्त्यस्मिन्नभ्रमाकाशम् । जटनं जटा सा अस्त्यस्मिन् जटा केशविन्यासः । घटनं घटा सा अस्त्यस्मिन् घटा व्यूहविशेषः । अम्लो रसोऽस्यास्ति अम्लः । लवणः । आकृतिगणोऽयम् । तेन यत्राभिन्नरूपेण शब्देन (शब्द ? तद्व)तोऽभिधानं तत् सर्वमिह द्रष्टव्यम् । अभेदोपचारान्मतुब्लोपाच्च गुणवचनेभ्यः सिद्धे स्वरार्थ आरम्भः ॥

स्वाङ्गाद्धीनात् ॥ २११ ॥

हीनस्वाङ्गवाचिनः शब्दान्मत्वर्थे अच्प्रत्ययो भवति । काणं चक्षुरस्यास्तीति काणः । खञ्जः पादोऽस्यास्तीति खञ्जः । कुण्डः पाणिरस्यास्तीति कुण्डः । खल्वाटं शिरोऽस्यास्तीति खल्वाटः ॥

वर्णात्[1] ॥ २१२ ॥

वर्णवाचिनो मत्वर्थे अच्प्रत्ययो भवति । शुक्लः । कृष्णः । कपिलः । कडारः ॥

तुन्दि[2]वलिवटेर्भः ॥ २१३ ॥

तुन्द्या[3]दिभ्यो मत्वर्थे भप्रत्ययो भवति । तुन्दिभः । वलिभः । वटिभः । वानुवृत्तिस्मरणाद् वलिमान् । पा(रा ? मा)दिपाठाद् वलिन इत्यपि भवति ॥

कंशंभ्याम् ॥ २१४ ॥

कं शम् इत्येताभ्यां मत्वर्थे भप्रत्ययो भवति । कम्भः । शम्भः ।

तितुवयस्ताः ॥ २१५ ॥

कंशंभ्यां तितुवयस्ताः प्रत्यया मत्वर्थे भवन्ति । कन्तिः शन्तिः । कन्तुः । शन्तुः । कंवः । शंवः । कंयः । शंयः । (कन्तः शन्तः) । सकारकरणाट्टिलोपो न भवति ॥

---

१. 'त् । तुन्दि' ख. ग. पाठः. २. 'ण्डि', ३. 'ण्ड्या क. पाठः.

युस् ॥ २१६ ॥

कंशंभ्यां मत्वर्थे युस्प्रत्ययो भवति । कंयुः । शंयुः । सकारकरणात् योरनादेशो न भवति ॥

ऊर्णाहंशुभंभ्यः ॥ २१७ ॥

ऊर्णादिभ्यो मत्वर्थे युस्प्रत्ययो भवति । ऊर्णायुः । अहंयुः । शुभंयुः । वानुवृत्तिस्मरणादसंज्ञायामूर्णावानित्यपि भवति ॥

सूक्तसाम्नोश्छः ॥ २१८ ॥

सूक्तसाम्नोरभिधेययोर्मत्वर्थे छप्रत्ययो भवति । अच्छावाकशब्दोऽस्त्रास्ति अच्छावाकीयं सूक्तम् । यज्ञायज्ञीयं साम । कथमस्यवामीयं सूक्तं, कयानश्चित्रीयं सामेति विभक्तिलोपो न भवति । अनुकरणशब्दानां स्वरूपार्थ एवेयं विभक्तिः ॥

अध्यायानुवाकयोर्लुग्वा ॥ २१९ ॥

अध्यायानुवाकयोरभिधेययोर्मत्वर्थे छस्य लुग् वा भवति । गर्दभाण्डोऽध्यायः गर्दभाण्डीयः । दीर्घजीवितः दीर्घजीवितीयः । पलितस्तम्भोऽनुवाकः पलितस्तम्भीयः ॥

विमुक्तदेवासुररक्षोसुरास्यहत्यपरिसारकोपसत्सत्वदिडोर्वशीदशार्णदशार्हेभ्योऽण् ॥ २२० ॥

विमुक्तादिभ्योऽध्यायानुवाकयोरभिधेययोर्मत्वर्थेऽण्प्रत्ययो भवति । विमुक्तशब्दोऽस्त्रास्ति वैमुक्तः । दैवासुरः । राक्षोसुरः । आस्यहत्यः । पारिसारकः । औपसतः । सात्वतः । ऐडः । और्वशः । दाशार्णः । दाशार्हः ॥

वसुमन्तुपत्नीवन्तुबर्हवन्तुवृत्रहन्तृवयःपतत्रिसुपर्णसोमापूषन्हविर्धानाग्नाविष्णुभ्यश्च ॥ २२१ ॥

वसुमन्त्वादिभ्यश्चाध्यायानुवाकयोरभिधेययोर्मत्वर्थेऽण्प्रत्ययो भवति । वासुमन्तः । पात्नीवन्तः । बार्हवन्तः । वार्त्रहन्त्रः । वायसः । पातत्रिणः । सौपर्णः । सौमापौष्णः । हाविर्धानः । आग्नावैष्णवः । 'देवताद्वन्द्वे च'त्युभयपदवृद्धिः ॥

गोषदिषेत्वाकृष्णोस्यादेवीरायदेवस्यत्वा[2]देवीधेयतदेवेभ्यो वुन् ॥ २२२ ॥

गोषदादिभ्योऽध्यायानुवाकयोरभिधेययोर्मत्वर्थे वुन्प्रत्ययो भवति। गोषदकः। इषेत्वकः। कृष्णोस्यकः। देवीरायकः। देवस्यत्वकः। देवीधेयकः। तदेवकः॥

प्रतूर्त्तमातरिश्वन्सहस्रशीर्षे[3]वाचस्पतकृशानुरक्षोहणस्वाहाप्राणेभ्यश्च ॥ २२३ ॥

प्रतूर्त्तादिभ्यश्चाध्यायानुवाकयोरभिधेययोर्मत्वर्थे वुन्प्रत्ययो भवति। प्रतूर्त्तकः। मातरिश्वकः। सहस्रशीर्षकः। वाचस्पतकः। कृशानवकः। रक्षोहणकः। स्वाहाप्राणकः॥

निद्रातन्द्राश्रद्धादयाहृदयेभ्यो वालुच् ॥ २२४ ॥

निद्रादिभ्यो मत्वर्थे आलुच्प्रत्ययो वा भवति। निद्रालुः। तन्द्रालुः। श्रद्धालुः। दयालुः। हृदयालुः। पक्षे निद्रावानित्यादि। ताच्छीलिके नैवालुचा सिद्धे निद्रादिभ्यः पुनर्विधानमर्थभेदात्॥

शीतोष्णतृप्रे[4]भ्यस्तन्न सहते ॥ २२५ ॥

शीतादिभ्यस्तदिति द्वितीयासमर्थेभ्यो न सहत इत्यस्मिन्नर्थे आलुच्प्रत्ययो भवति। शीतं न सहते शीतालुः। उष्णालुः। तृप्रालुः॥

*हिमात् सहते चेलुः ॥ २२६ ॥

हिमशब्दात् द्वितीयासमर्थात् सहत इत्यस्मिन्नर्थे चेलुः प्रत्ययो भवति। हिमं सहते हिमेलुः। चकारः स्वरार्थः॥

---

१. 'प', २. 'दैवींधियमोत', ३. 'र्षाचस्यवा', ४. 'प्रे भूमनिन्दाप्रशंसानित्ययोगेभ्यस्तन्न सहते। भूमनिन्दाप्रशंसानित्ययोगादित्याशयः'। संश्लेषतो बहुलम्। नार्थैक्ये द्विः। नार्थे शैक्षिकञ्चस्तन्न सहते। हिमा' ख. ग. पाठः.

---

* 'तन्न सहत इति हिमाच्चेलुः। हिमं न सहत हिमेलुः' इति वृत्तिकारः।

बलवाताभ्यां चूलः ॥ २२७ ॥

आभ्यां द्वितीयासमर्थाभ्यां सहत इत्यर्थे चूलप्रत्ययो भवति । बलं सहते बलूलः । वातूलः ॥

इति श्रीदण्डनाथनारायणभट्टसमुद्धृतायां सरस्वतीकण्ठाभरणस्य
व्याकरणस्य लघुवृत्तौ हृदयहारिण्यां
पञ्चमस्याध्यायस्य द्वितीयः पादः ॥

अथ तृतीयः पादः ।

षष्ठ्या व्याश्रये तस् ॥ १ ॥

नानापक्षसमाश्रयो व्याश्रयः, तस्मिन् गम्यमाने षष्ठ्यन्तात् प्रातिपदिकात् तस्प्रत्ययो वा भवति । देवा अर्जुनतोऽभवन् । आदित्याः कर्णतोऽभवन् । अर्जुनपक्षे कर्णस्य पक्ष इत्यर्थः । व्याश्रय इति किम् । वृक्षस्य शाखा ॥

रोगात् प्रतीकारे ॥ २ ॥

रोगवाचिनः प्रातिपदिकात् षष्ठ्यन्तात् प्रतीकारे अपनयने गम्यमाने तस्प्रत्ययो भवति । प्रवाहिकातः कुरु । प्रच्छर्दिका(याः ? तः) कुरु । प्रवाहिकायाः प्रच्छर्दिकायाश्च चिकित्सां कुर्वित्यर्थः । प्रतीकार इति किम् । प्रवाहिकायाः प्रकोपः ॥

अतिग्रहाव्यथनक्षेपेष्वकर्तरि तृतीयायाः ॥ ३ ॥

अतिक्रम्यातिशयेन वा ग्रहोऽतिग्रहः । अचलनमव्यथनम् । क्षेपो निन्दा । अकर्तरि या तृतीया तदन्तात् प्रातिपदिकादतिग्रहादिष्वर्थेषु गम्यमानेषु तस्प्रत्ययो वा भवति । वृत्ततोऽतिगृह्यते, वृत्तेनातिगृह्यते ।

अन्यानतिक्रम्यातिशयेन वा गृह्यत इत्यर्थः । (वृत्तेन न व्यथते) वृत्ततो न व्यथते न चलतीत्यर्थः । वृत्तेन क्षिप्तः (वृत्ततः क्षिप्तः) । वृत्तेन निन्दित इत्यर्थः । अकर्तरीति किम् । देवदत्तेनातिगृह्यते ॥

हीयमानपापयुक्तात् ॥ ४ ॥

हीयमानेन पापेन युक्ताद् अकर्तरि तृतीयान्तात् प्रातिपदिकात् तस्-प्रत्ययो (वा) भवति । वृत्ततो हीयते (वृत्तेन हीयते) । वृत्ततः पापः । वृत्तेन पापः । क्षेपस्याविवक्षायां तत्त्वाख्याने च यथा स्यादिति वचनम् । अकर्तरीति किम् । देवदत्तेन हीयते ॥

प्रतिना पञ्चम्याः ॥ ५ ॥

प्रतिना कर्मप्रवचनीयेन युक्ता या पञ्चमी तदन्तात् तस्प्रत्ययो वा भवति । अभिमन्युरर्जुनतः प्रति, अर्जुनात् प्रति । माषानस्मै तिलतः प्रयच्छति ॥

अपादाने चाहीयरुहोः ॥ ६ ॥

अपादाने या पञ्चमी तदन्तात् तस्प्रत्ययो वा भवति । तच्चापादानं हीयरुहोः सम्बन्धि न भवति । ग्रामत आगच्छति ग्रामादागच्छति । चोरतो बिभेति (चोराद् बिभेति) । अहीयरुहोरिति किम् । (सार्थात् सार्थो)-द्धीयते । पर्वतादवरोहति । ककारः किम् । हाङः प्रतिषेधो मा भूत् । भूमेरुज्जिहीते, भूमित उज्जिहीते ॥

सर्वोभयार्थे पर्यभिभ्याम् ॥ ७ ॥

पर्यभिशब्दाभ्यां सङ्ख्यासर्वशब्दार्थे वर्तमानाभ्यां तस्प्रत्ययो भवति । परितः । सर्वत इत्यर्थः । (अभितः । उभयत इत्यर्थः ।) सर्वोभयार्थ इति किम् । वृक्षं परि विद्योतते, वृक्षमभि ॥

तृतीयासप्तमीभ्यां चादिमध्यान्ताग्रपक्षपार्श्वपृष्ठमुखसर्वविश्वोभयान्यपूर्वयत्तदेकेदंप्रमाणादिभ्यः ॥ ८ ॥

यथासम्भवं तृतीयान्तेभ्यः सप्तम्यन्तेभ्यश्चकारात् पञ्चम्यन्तेभ्यश्चाद्यादिभ्यस्तस्प्रत्ययो वा भवति । (आदिना) आदौ आदेर्वा आदितः । एवं

मध्यतः। अन्ततः। अग्रतः। पक्षतः। पार्श्वतः। पृष्ठतः। मुखतः। सर्वतः। विश्वतः। उभयतः। अन्यतः। पूर्वतः। यतः। ततः। एकतः। इतः। प्रमाणेन (प्रमाणे) प्रमाणाद्वा प्रमाणतः। आदिग्रहणाद्यथादर्शनमन्येभ्योऽपि भव(न्तीति) ॥

अद्व्यादिसर्वनामकिंभ्यः पञ्चम्याः ॥ ९ ॥

द्व्यादिवर्जितेभ्यः (पञ्चम्याः?) सर्वनामभ्यः किंशब्दाच्च या पञ्चमी तदन्तात् तस्प्रत्ययो (वा) भवति। सर्वस्मात् सर्वतः। विश्वस्मात् विश्वतः। यस्मात् यतः। तस्मात् ततः। कस्मात् कुतः। सर्वनामत्वेऽपि द्व्यादित्वात् किमो न प्राप्नोतीति पृथग्विधानम्। अद्व्यादिभ्य इति किम्। द्वाभ्याम्। कथं त्वत्तो मत्तः युष्मत्तोऽस्मत्त इति। 'अपादाने चाहीयरुहोरि'ति भविष्यति। सर्वनामभ्यस्तु पञ्चमीमात्राद् यथा स्यादिति वचनम्। सर्वतो हीयते। सर्वतो रोहति। सर्वतो हेतोः। सर्वतः पूर्वमिति ॥

बहोश्च सङ्ख्यायाः ॥ १० ॥

सङ्ख्यावाची यो बहुशब्दस्ततः पञ्चम्यन्तात् तस्प्रत्ययो वा भवति। बहुभ्यः बहुतः। सङ्ख्याया इति किम्। बहोः सूपात्। बहोः कालात् ॥

सप्तम्यास्त्रल् ॥ ११ ॥

अद्व्यादिसर्वनामकिंभ्यः सप्तम्यन्तेभ्यो बहोश्च सङ्ख्यावाचिनः सप्तम्यन्तात् त्रल्प्रत्ययो वा भवति। सर्वस्मिन् सर्वत्र। अन्यस्मिन् अन्यत्र। यस्मिन् यत्र। कस्मिन् कुत्र। बहुषु बहुत्र। सङ्ख्याया इत्येव। *बहुभ्यः सूपेभ्यः। बहुभ्यः काले(भ्यः)। अद्व्यादिभ्य इत्येव। द्वयोः युवयोः। त्वयि मयि। लकारः स्वरार्थः। ततस्तु लित्स्वरं स्वराधिकारे वक्ष्यति ॥

इदमो हः ॥ १२ ॥

इदमः सप्तम्यन्तात् हप्रत्ययो वा भवति। त्रलोऽपवादः। अस्मिन्। इह ॥

---

* इह सप्तम्यन्ततयोदाहर्तव्यम्।

किमोऽत् ॥ १३ ॥

किमस्सप्तम्यन्तादत्प्रत्ययो वा भवति । कस्मिन् क्व । किमः प्रतिपदविधानात् कुश्चेति त्रल् न बाध्यते । तकारः स्वरार्थः ॥

भवद्दीर्घायुरायुष्मद्देवानांप्रियैस्तेऽन्याभ्यश्च ॥ १४ ॥

भवदादिभिर्योगे अन्यविभक्त्यन्तेभ्यश्चाद्यादिसर्वनामकिंबहुभ्यस्ते तसादयः प्रत्यया भवन्ति । सभवान् ततोभवान् तत्रभवान् । तंभवन्तं ततोभवन्तं तत्रभवन्तम् । तेनभवता । ततोभवता । तत्रभवता । तस्मै भवते ततोभवते तत्रभवते । तस्माद्भवतः ततोभवतः तत्रभवतः । तस्यभवतः ततोभवतः तत्रभवतः । तस्मिन्भवति ततोभवति तत्रभवति । एवमयंभवान् इतोभवान् अत्रभवान् । कोभवान् कुतोभवान् कुत्रभवान् । (को?क्व)भवानित्याद्युदाहार्यम् । तथा सदीर्घायुः ततोदीर्घायुः तत्रदीर्घायुः । सआयुष्मान् ततआयुष्मान् तत्रायुष्मान् । सदेवानांप्रियः ततोदेवानांप्रियः तत्रदेवानांप्रियः । अयंदीर्घायुः इतोदीर्घायुः इहदीर्घायुः । कोदीर्घायुः कुतोदीर्घायुः कुत्रदीर्घायुः क्वदीर्घायुः । एवमायुष्मद्देवानांप्रियाभ्यामपि योगे सर्वा विभक्तय उदाहार्याः ॥

तेष्विदम इश् ॥ १५ ॥

तेषु तसादिषु परत इदम इश् इत्ययमादेशो भवति । इतः इह । शकारः सर्वादेशार्थः ॥

एतदोऽश् ॥ १६ ॥

एतदस्तसादिषु परतोऽशित्ययमादेशो भवति । एतस्मात् । अतः अत्र ॥

किमः कुः ॥ १७ ॥

किमस्तसादिषु परतः कु इत्ययमादेशो भवति । कुतः । कुत्र ॥

क्वाति ॥ १८ ॥

अति परतः किमः क्व इत्ययमादेशो भवति । क्व ॥

एकान्यकिंयत्तद्भ्यः सप्तम्याः काले दा ॥ १९ ॥

एकादिभ्यः कालवृत्तिभ्यः सप्तम्यन्तेभ्यो दाप्रत्ययो वा भवति । त्रलादेरपवादः । एकस्मिन् काले एकदा । अन्यस्मिन् काले अन्यदा । कस्मिन्, कदा । यस्मिन्, यदा । तस्मिन्, तदा । काल इति किम् । एकत्र देशे । क्व ग्रामे ॥

सर्वात् स चास्य वा ॥ २० ॥

सर्वशब्दात् कालवृत्तेस्सप्तम्यन्तात् दाप्रत्ययः स(र्व?)शब्दश्च सर्वशब्दस्य वा भवति । सर्वस्मिन् काले, सर्वदा सदा । काल इत्येव । सर्वत्र देशे ॥

तदो दानीम् ॥ २१ ॥

तदः कालवृत्तेस्सप्तम्यन्ताद् दानींप्रत्ययो वा भवति । तस्मिन् काले तदानीम् । प्रतिपदोक्तत्वादनेन दा न बाध्यते । काल इत्येव । तत्र देशे ।

इदम इश् च ॥ २२ ॥

इदंशब्दात् कालवृत्तेः सप्तम्यन्तात् दानींप्रत्यय इशादेशश्च (वा) भवति । अस्मिन् काले इदानीम् । काल इत्येव । इह ग्रामे ॥

अधुना च ॥ २३ ॥

इदमः सप्तम्यन्तात् कालवृत्तेरधुनाप्रत्यय इशादेशश्च वा भवति । अस्मिन् काले अधुना ॥

किंयत्तदेतदन्येभ्योऽनद्यतने र्हिल्वा ॥ २४ ॥

किमादिभ्योऽनद्यतनकालवृत्तिभ्यः सप्तम्यन्तेभ्यो र्हिल्प्रत्ययो वा भवति । कस्मिन् काले कर्हि कदा । यर्हि यदा । तर्हि तदा । कालोपाधि-

रस्यान्यः प्रयोगो नास्ति। अन्यर्हि अन्यदा। अनद्यतन इति किम्। कदा॥

एतर्श्चेदमः॥ २५॥

इदमः कालवृत्तेः सप्तम्यन्तात् र्हिलूप्रत्यय एतादेशश्च वा भवति। अस्मिन् काले एतर्हि इदानीम्। अधुना॥

द्यश्चाह्न्यश्च॥ २६॥

इदमः सप्तम्यन्तादहनि कालविशेषे वर्तमानात् द्यप्रत्ययः अशादेशश्च वा भवति। अस्मिन् अहनि अद्य॥

समानस्य द्यः सश्च[1]॥ २७॥

समानशब्दस्याहःकालवृत्तेः सप्तम्यन्तस्य द्यस्प्रत्ययः सशब्दश्चादेशो वा भवति। समानेऽहनि सद्यः॥

पूर्वान्यान्यतरेतरापराधरोत्तरेभ्यः एद्युस्॥ २८॥

पूर्वादिभ्योऽहःकालवृत्तिभ्यः सप्तम्यन्तेभ्यः एद्यु (न? स्) प्रत्ययो वा भवति। पूर्वस्मिन्नहनि पूर्वेद्युः। अन्येद्युः। अन्यतरेद्युः। इतरेद्युः। अपरेद्युः। अधरेद्युः। उत्तरेद्युः॥

उभयाद्द्युश्च॥ २९॥

उभयशब्दादहःकालवृत्तेः सप्तम्यन्तात् द्युश्चकारादेद्युस्प्रत्ययो वा भवति। उभयस्मिन् अहनि उभयद्युः। उभयेद्युः॥

पूर्वतरपरतराभ्यामेद्यविः परश्च॥ ३०॥

पूर्वतरपरतरशब्दाभ्यामहःकालवृत्तिभ्यां सप्तम्यन्ताभ्यामेद्यविः प्रत्ययः परादेशश्चानयोर्वा भवति। पूर्वतरे परतरे वाहनि परेद्यवि॥

आरिः संवत्सरे॥ ३१॥

पूर्वतरपरतरशब्दाभ्यां संवत्सरकालवृत्तिभ्यां सप्तम्यन्ताभ्यामारिप्रत्ययो वा भवति। पूर्वतरे परतरे वा संवत्सरे परारि॥

पूर्वादुच्च॥ ३२॥

---

१. 'च' ख. ग. पाठः.

पूर्वशब्दात् संवत्सरवृत्तेः सप्तम्यन्तात् उत्प्रत्ययः परादेशश्च वा भवति। पूर्वस्मिन् संवत्सरे ( परुत् ) ॥

परात् ॥ ३३ ॥

परशब्दात् संवत्सरवृत्तेः सप्तम्यन्तादुत्प्रत्ययो वा भवति। परस्मिन् संवत्सरे परुत् ।

इदमः सम(सि ? स)णिश्च ॥ ३४ ॥

इदमः संवत्सरवृत्तेः सप्तम्यन्तात् सम(सि ? स)ण्प्रत्यय इशादेशश्च वा भवति। अस्मिन् संवत्सर ऐषमः । णकारो वृद्ध्यर्थः ॥

तृतीयायाः प्रकारे थमिच्च ॥ ३५ ॥

सामान्यस्य भेदको विशेषः प्रकारस्तद्वृत्तेरिदमः तृतीयान्तात् थंप्रत्यय इदादेशश्च वा भवति। अनेन प्रकारेण इत्थम् ॥

किमः ॥ ३६ ॥

किमः प्रकारवृत्तेस्तृतीयान्तात् थंप्रत्ययो वा भवति। केन प्रकारेण कथम् ॥

सर्वोभयान्येतरापरयत्तदादिभ्यस्थाल् ॥ ३७ ॥

सर्वादिभ्यः प्रकारवृत्तिभ्यस्थाल्प्रत्ययो वा भवति। सर्वेण प्रकारेण सर्वथा । उभयथा। अन्यथा । इतरथा । (अपरथा।) यथा । तथा। आदिग्रहणाद्यथादर्शनमन्येभ्योऽपि भवति ॥

क्रियाप्रकारे धा सङ्ख्यायाः ॥ ३८ ॥

सङ्ख्याशब्देभ्यः क्रियाप्रकारवृत्तिभ्यस्तृतीयान्तेभ्यो धाप्रत्ययो वा भवति। एकेन प्रकारेण एकधा । द्विधा। त्रिधा। चतुर्धा । पञ्चधा । दशधा । सहस्रधा । बहुधा । कतिधा ॥

अधिकरणविचाले च ॥ ३९ ॥

अधिकरणं द्रव्यं तस्य विचालः सङ्ख्यान्तरापादानं तस्मिंश्च गम्यमाने सामर्थ्यात् प्रथमान्ताया द्वितीयान्ताया वा सङ्ख्याया धाप्रत्ययो वा भवति। एको राशिः (मैत्रियः? द्वौ त्रयः) पञ्चधा भवति। एकं राशिं द्वौ त्रीन् पञ्चधा

करोति। पञ्च राशयस्त्रयः द्वौ वा एको वा भवन्ति। पञ्च राशीन् त्रीन् द्वावेकं वा करोति (त्रिधा) द्विधा करोति एकधा करोति। बहुधा। गणधा। कतिधा। शतधेति॥

षोढा वा॥ ४०॥

षोढेति वा निपात्यते। षष उत्वं प्रत्ययादेश्च षत्वम्। षोढा षड्धा॥

एकाद्ध्यमुञ्॥ ४१॥

एकशब्दात् प्रकारेऽधिकरणविचाले च ध्यमुञ्प्रत्ययो वा भवति। एकेन प्रकारेण ऐकध्यम् एकधा। द्वौ राशी एकं करोति ऐकध्यं करोति। एकधा करोति॥

द्वित्रिभ्यां धमुञ्॥ ४२॥

द्वित्रिशब्दाभ्यां प्रकारे अधिकरणविचाले च धमुञ्[1]प्रत्ययो वा भवति। द्वाभ्यां प्रकाराभ्यां द्वैधं द्विधा। त्रैधं त्रिधा करोति॥

एधाच्च॥ ४३॥

द्वित्रिभ्यां प्रकारेऽधिकरणविचाले च एधाच्प्रत्ययो वा भवति। द्वाभ्यां प्रकाराभ्यां द्वेधा द्विधा द्वैधम्। त्रेधा। त्रिधा। त्रैधम्। एकं राशिं द्वौ त्रीन् वा करोति द्वेधा द्विधा द्वैधं करोति, त्रेधा त्रिधा त्रैधं करोति॥

तद्वति धण्॥ ४४॥

प्रकारवत्यधिकरणविचालवति च द्वित्रिशब्दाभ्यां धण्प्रत्ययो वा भवति। मतिद्वैधानि वर्तन्ते मतित्रैधानि। राजद्वैधानि राजत्रैधानि।

प्रकारवति जातीयः॥ ४५॥

सामान्यस्य विशेषः सादृश्यं च प्रकारः। तद्वत्यर्थे तत्सामान्यवाचिनः शब्दाज्जातीयः प्रत्ययो भवति। पटुजातीयः। मृदुजातीयः॥

स्थूलेषुमणिमधुधान्यतिलकालपुण्ड्रैरण्डचण्डचञ्चद्वृहन्महद्भ्यः कन्॥ ४६॥

---

१. 'ञ्' ख. पाठः.

स्थूलादिभ्यः प्रकारवत्यर्थे कन्प्रत्ययो भवति। स्थूलकः। इषुकः। मणिकः। मधुकः। धान्यकः। तिलकः। कालकः। समस्ताच्च तिलकालकः। पुण्ड्रकः। एरण्डकः। चण्डकः। चञ्चत्कः। बृहत्कः। महत्कः॥

कुमार्याः पुत्रश्वशुराभ्याम्॥ ४७॥

कुमारीशब्दात् परौ यौ पुत्र(श्वतु[1] श्वशु)रशब्दौ तदन्ताभ्यां प्रकारवति कन्प्रत्ययो भवति। कुमारीपुत्रकः। कुमारी(श्वतु[2] श्वशु)रकः॥

पत्रमूलाद् व्यस्ताच्च॥ ४८॥

पत्रमूलशब्दाद्व्यस्तात् समस्ताच्च प्रकारवत्यर्थे कन्प्रत्ययो भवति। पत्रमूलकः। पत्रकः मूलकः॥

अवदातात् सुरायाम्॥ ४९॥

अवदातशब्दात् सुरावृत्तेः प्रकारवत्यर्थे कन्प्रत्ययो भवति। अवदातिका सुरा॥

सुराया अहौ॥ ५०॥

सुराशब्दात् प्रकारवत्यर्थे कन्प्रत्ययो भवति। असौ प्रकारवानहिश्चेत्। सुरेव अहिः सुरकः॥

गोमूत्रादाच्छादने॥ ५१॥

गोमूत्रशब्दात् प्रकारवत्याच्छादनविशेषे कन्प्रत्ययो भवति। गोमूत्रकम्। गोमूत्रवर्णमाच्छादनम्॥

जीर्णाच्छालिषु॥ ५२॥

जीर्णशब्दात् प्रकारवत्यर्थे कन्प्रत्ययो भवति। योऽसौ प्रकारवान् शालयश्चेत् ते भवन्ति। जीर्णप्रकाराः शालयो जीर्णकाः॥

यवाद् व्रीहिषु॥ ५३॥

यवशब्दात् प्रकारवत्सु व्रीहिष्वाभिधेयेषु कन्प्रत्ययो भवति। यवका व्रीहयः॥

---

१, २. 'श्वतुर' क. पाठः.

कृष्णात् तिलेषु ॥ ५४ ॥

कृष्णशब्दात् प्रकारवत्सु तिलेष्वभिधेयेषु कन्प्रत्ययो भवति । कृष्णकास्तिलाः ॥

अणोर्माषेषु ॥ ५५ ॥

अणुशब्दात् प्रकारवत्सु माषेष्वभिधेयेषु कन्प्रत्ययो भवति । अणुका माषाः ॥

माषात् परिमाणे ॥ ५६ ॥

माषशब्दाद् प्रकारवति परिमाणविशेषेऽर्थे कन्प्रत्ययो भवति । माषकः सुवर्णपरिमाणम् ॥

दिक्छब्दाद् दिग्देशकालार्थात् सप्तमीपञ्चमीप्रथमाभ्योऽस्तातिः ॥ ५७ ॥

दिशि प्रसिद्धः शब्दो दिक्छब्दस्तस्मात् दिग्देशकालेषु वर्तमानात् सप्तमीपञ्चमीप्रथमान्तादस्तातिप्रत्ययो वा भवति । पूर्वस्यां दिशि वसति पूर्वस्या दिश आगतः पूर्वा दिग्रमणीया । पुरस्ताद्वसति पुरस्तादागतः पुरस्ताद्रमणीया(: ?) । पूर्वस्मिन् देशे वसति पुरस्ताद्वसति । पूर्वस्माद्देशादागतः पुरस्तादागतः । पूर्वो देशो रमणीयः पुरस्ताद्रमणीयः । पूर्वस्मिन् काले भवति पुरस्ताद् भवति । पूर्वस्मात् कालादागतः पुरस्तादागतः । पूर्वः कालो रमणीयः पुरस्ताद्रमणीयः । दिक्छब्दादिति किम् । ऐन्द्र्यां दिशि वसति । दिग्देशकालार्थादिति किम् । पूर्वस्मिन् गुरौ वसति । सप्तमीपञ्चमीप्रथमाभ्य इति किम् । पूर्वं ग्रामं गतः । दिग्देशकालार्थादित्यस्य दिक्छब्दादित्यनेन सम्बन्धात् सप्तमीपञ्चमीप्रथमाभ्य इत्यनेन सम्बन्धे सति यथासंख्येन न भवति ॥

अञ्चो लुक् ॥ ५८ ॥

अञ्चत्यन्तात् दिक्छब्दात् परस्यास्तातेः प्रत्ययस्य लुग् भवति । प्राच्यां दिशि वसति । प्राग् वसति । प्रागागतः, प्राग्रमणीया । 'लुक्

तद्धितलुक्यगोणीसूच्योः (३-३-१४४) इति ङीपोऽपि लुक् । प्राचि देशे वसति प्राग्वसति । प्रागागतः । प्राग्रमणीयम् । प्राचि काले गतः प्राचो (वा) (प्राग्गतः) । प्राग्रमणियम् । एवं प्रत्यगुदगित्याद्यपि भवति ॥

पूर्वाधरयोः पुरधौ च ॥ ५९ ॥

पूर्वाधर इत्येतयोरस्तातौ प्रत्यये परतः पुर् अध् इत्येतावादेशौ भवतः । पुरस्तात् । अधस्तात् ॥

आभ्यामसिश्च ॥ ६० ॥

पूर्वाधराभ्यामस्तात्यर्थे असिप्रत्ययः पुरधौ चादेशौ भवतः । पुरो वसति । पुर आगतः । पुरो रमणीयम् । अधो वसति । अध आगतः अधो रमणीयम् । एवं देशकालयोरप्युदाहार्यम् ॥

अवरस्याव च ॥ ६१ ॥

अ(ध ? व)रशब्दस्यास्तात्यर्थेऽसिप्रत्यययोऽ(ध ? व) आदेशश्च भवति । अ(ध ? व)रस्यां दिशि वसति । अ(धो ? वो) वसति । अ(ध ? व) आगतः अ(धो ? वो) रमणीयम् । एवं देशकालयोरप्युदाहार्यम् ॥

वास्तातिं[1] ॥ ६२ ॥

अस्तातौ प्रत्यये परतोऽ(ध ? व)रशब्दस्य वा(ध ? वा)देशो भवति । अ(ध ? व)स्ताद्वसति । अ(ध ? व)रस्ताद्वसति । अस्यादेशविकल्पविधानादसिरस्तातिं न बाधते ॥

अपरस्यातिः पश्चा च ॥ ६३ ॥

अपरशब्दस्यास्तात्यर्थे आतिप्रत्ययः पश्चादेसश्च भवति । अपरस्यां दिशि वसति पश्चाद्वसति । पश्चादागतः । पश्चाद्रमणीयम् । एवं देशकालयोरपि ॥

दिक्पूर्वपदस्य च ॥ ६४ ॥

---

१. 'तिः' ख ग. पाठः.

दिक्पूर्वपदस्यापरशब्दस्यास्तात्यर्थे आतिप्रत्ययः पश्चादेशश्च वा भवति । दक्षिणापरस्यां दिशि वसति दक्षिणपश्चाद्वसति । दक्षिणपश्चादागतः । दक्षिणपश्चाद्रमणीयम् । उत्तरपश्चाद्वसति । उत्तरपश्चादागतः । उत्तरपश्चाद्रमणीयम् ॥

अर्धे लुक् ॥ ६५ ॥

अर्धशब्द उत्तरपदे पश्चाशब्दादुत्तरस्यास्तातेर्लुग् भवति । पश्चार्धं पश्चार्धः । दक्षिणपश्चार्धः । उत्तरपश्चार्धः ॥

ऊर्ध्वस्य रिल्रिष्टातिलावुपश्च ॥ ६६ ॥

ऊर्ध्वशब्दस्यास्तात्यर्थे रिलरिष्टातिलौ प्रत्ययावुपादेशश्च भवति । ऊर्ध्वायां दिशि वसति उपरि वसति । उपर्यागतः । उपरि रमणीयम् । उपरिष्टाद्वसति उपरिष्टादागतः उपरिष्टाद्रमणीयम् । एवं देशकालयोरपि । विशेषविधानादस्तातिमेवैतौ बाधेते ॥

पराव॰राभ्यामतसुच्वा ॥ ६७ ॥

परा(ध ? व)रशब्दाभ्यामस्तात्यर्थे अतसुच्प्रत्ययो वा भवति । परस्यां दिशि वसति परतो वसति । परस्ताद्वसति । अ(ध ? व)रस्यां, अ(ध ? व)रतो वसति । अ(ध ? व)स्ताद्वसति अ(ध ? व)स्ताद्वसति । अ(धो ? वो)वसति । एवं पञ्चमीप्रथमयोर्देशकालयोश्च द्रष्टव्यम् । अकारः 'षष्ठ्यतसर्थप्रत्ययेने'ति विशेषणार्थः । उकार उच्चारणार्थः । चकारः स्वरार्थः ॥

अधरादातिः ॥ ६८ ॥

अधरशब्दादस्तात्यर्थे आतिप्रत्ययो वा भवति । अधरस्यां दिशि वसति । अधरस्ताद्वसति । अधो वसति । अधराद्वसति । एवं पञ्चमीप्रथमयोर्देशकालयोश्च द्रष्टव्यम् ॥

दक्षिणोत्तराभ्याम् ॥ ६९ ॥

---

१. 'ध' क. पाठः.

दक्षिणोत्तरशब्दाभ्यामस्तात्यर्थे आतिप्रत्ययो भवति वा । दक्षिणस्यां दिशि वसति-दाक्षिणाद्वसति दाक्षिणादागतः दाक्षिणाद्रमणीयम् । उत्तराद्वसति उत्तरादागतः उत्तराद्रमणीयम् ॥

तसिश्च ॥ ७० ॥

दक्षिणोत्तरशब्दाभ्यामस्तात्यर्थे तसिप्रत्ययो भवति । दक्षिणतो वसति। दक्षिणत आगतः । दक्षिणतो रमणीयम् । उत्तरतो वसति । उत्तरत आगतः । उत्तरतो रमणीयम् ॥

आच्चापञ्चम्याः ॥ ७१ ॥

दक्षिणोत्तरशब्दाभ्यामपञ्चम्यन्ताभ्यामस्तात्यर्थे आच्प्रत्ययो भवति। दक्षिणा वसति । दक्षिणा रमणीयम् । उत्तरा वसति उत्तरा रमणीयम् । अपञ्चम्या इति किम् । दक्षिणादागतः दक्षिणत आगतः । उत्तरादागतः उत्तरत आगतः । चकारो दिक्छब्दाञ्चूत्तरपदाजाहियोगे इति विशेषणार्थः ॥

आहि च दूरे ॥ ७२ ॥

दक्षिणोत्तरशब्दाभ्यामपञ्चम्यन्ताभ्यामस्तात्यर्थे आहिश्चकारादाच प्रत्ययो भवति । दूरे चेदवधिमान् भवति । दक्षिणस्यां दिशि दूरे वसति दक्षिणाहि वसति दक्षिणा वसति । दक्षिणाहि रमणीयं दक्षिणा रमणीयम् । उत्तराहि वसति उत्तराहि रमणीयम् । उत्तरा वसति उत्तरा रमणीयम् । दूरादिति किम् । दक्षिणतो वसति । अपञ्चम्या इति किम् । दक्षिणत आगतः ॥

एनबदूरे वा ॥ ७३ ॥

अधरदक्षिणोत्तरेभ्योऽपञ्चम्यर्थेभ्योऽस्तात्यर्थे एनप्प्रत्ययो वा भवति । अदूरे चेदवधिमान् भवति । अधरस्यां दिश्यदूरे वसति अधरेण वसति । अधरेण रमणीयम् । अधराद्वसति अधराद्रमणीयम् । अधस्ताद्वसति अधस्ताद्रमणीयम् । दक्षिणेन वसति दक्षिणेन रमणीयम् । दाक्षिणाद्वसति दाक्षिणाद्रमणीयम् । दक्षिणतो वसति, दक्षिणतो रमणीयम् । दक्षिणा वसति दक्षिणा रमणीयम । उत्तरेण वसति उत्तरेण रमणीयम् । उत्तरा-

द्वसति उत्तराद्रमणीयम् । उत्तरा वसति उत्तरा रमणीयम् । केचिदत्राधरादी-(नप्य ? न्ना)नुवर्तयन्ति । तेन दिक्छब्दमात्रादेनब् भवति । पूर्वेण ग्रामम् । अपरेणाहवनीयमिति ॥

याप्ये पाशप् ॥ ७४ ॥

याप्यो निन्द्यः । तस्मिन्नर्थे वर्तमानात् प्रातिपदिकात् स्वार्थे पाशप्-प्रत्ययो भवति । कुत्सितो वैयाकरणो वैयाकरणपाशः । याप्य इति किम् । साधुर्वैयाकरणः । प्रवृत्तिनिमि(त्तं ? त्त)कुत्सायामेवायामिष्यते । तेनेह न भवति । वैयाकरणश्चोरः । नह्यत्र चौर्येण वैयाकरणत्वं कुत्स्यते । किन्तर्हि शीलमिति ॥

भूतपूर्वे चरट् ॥ ७५ ॥

भूतः पूर्वं भूतपूर्वः । तस्मिन्नर्थे वर्तमानात् प्रातिपदिकात् स्वार्थे चरट्प्रत्ययो भवति । आढ्यचरः दर्शनीयचरः । टकारो ङीबर्थः । आढ्य-चरी ॥

षष्ठ्या रूप्य च ॥ ७६ ॥

षष्ठ्यन्तात् भूतपूर्वार्थे रूप्यश्चकाराच्चरट् च प्रत्ययो भवति । देव-दत्तस्य भूतपूर्वो गौः देवदत्तरूप्यः । देवदत्तचरः ॥

द्विबहुषु सजातीयाविदूरप्रकर्षे गुणक्रियावचनेभ्य-स्तरप्तमपौ ॥ ७७ ॥

प्रकर्षोऽतिशयः । स च स्पर्धायामन्योन्यापेक्ष एव भवति । तस्मिन् सजातीयापेक्षेऽविदूरवर्तिनि गुणक्रियावचनेभ्यो द्विविषये तरप् (अङ्ग?बहु)-विषये आर्थिकस्तमप्प्रत्ययो भवति । उभाविमौ शुक्लौ । अयमनयोरति-शयेन शुक्लः शुक्लतरः । अयमनयोरतिशयेनाढ्यः आढ्यतरः । अयमनयो-रतिशयेन पाचकः पाचकतरः । अयमनयोरतिशयेन प्रकृष्टः प्रकृष्टतरः । सर्वे इमे शुक्लाः । अयमेषामतिशयेन शुक्लः शुक्लतमः । इमौ द्वावेवातिशयेन शुक्लौ शुक्लतमौ । इमे त्रय एवातिशयेन शुक्लाः शुक्लतमाः । एवमाढ्यतमः आढ्यतमौ आढ्यतमाः । पाचकतमः पाचकतमौ पाचकतमाः । प्रकृष्टतमः प्रकृष्टतमौ प्रकृष्टतमाः । सजातीयग्रहणं किम् । शुक्लात् कृष्णे मा भूत् ।

कथं तर्हि शुक्लकृष्णयोः कृष्णो (*भारत ?) इति । भास्वरत्वमेकजातीयं, तदपेक्षो भविष्यति । कथमन्धानां काणतमः । कणे नि अनार्थत्वादे- शात् सजातीयं गुणस्य (?) । कथमध्वर्युर्वै श्रेयान् । पापीयान् प्रति- प्रस्थातेति । तरबर्थेजेयसुन् भवति नैतयोः परस्परस्य वा । किन्तर्ह्यन्या- पेक्षः । अध्वर्युर्वै श्रेयानन्येभ्यः प्रशस्येभ्यः । पापीयान् प्रतिप्रस्थाता वान्येभ्यः पापेभ्य इति । अविदूरप्रकर्ष इति किम् । महत् सर्षपं महान् हिमवान् इत्यत्र मा भूत् । गुणक्रियावचनेभ्य इति किम् । जातिद्रव्य- वाचिभ्यो मा भूत् । वृक्षोऽयं प्लक्षोऽयमिति ॥

## ईयसुनिष्ठन्भ्याम् ॥ ७८ ॥

आतिशायिकान्तादातिशायिको न भवतीत्युक्तम् । ततोऽपि तरतमपौ यथा स्यातामित्ययमारम्भः । ईयसुनन्तादिष्ठनन्ताच्च प्रकर्षे तरसमौ प्रत्ययौ भवतः । श्रेयसितरा श्रेयसीतरा । श्रेयस्तरा । श्रेयसितमा । श्रेयसीतमा । श्रेयस्तमा । देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे । युधिष्ठिरः श्रेष्ठ- तमः कुरूणाम् । ज्यायस्तमो ज्येष्ठतमाय भान इति ॥

## किमेत्तिङव्ययेभ्य आम्यामामद्रव्ये ॥ ७९ ॥

किम एकारान्तेभ्यस्तिङन्तेभ्योऽव्ययेभ्यश्चाद्रव्यवृत्तिभ्यो यौ तरत- मपौ तदन्तात् स्वार्थिकादाम्प्रत्ययो भवति । अतिशयेन किं किन्तराम् । किन्तमाम् । प्राह्णेतरां (प्राह्णेतमां ।) पूर्वाह्णेतराम् (पूर्वाह्णेतमाम्)। प्रगेतरां प्रगेतमाम् । अग्रेतराम् अग्रेतमाम् । पचतितरां पचतितमाम् । नितराम् (नितमम्) । सुतराम् (सुतमाम्) । अतितराम् अतितमाम् । अतीवतराम् अतीवतमाम् । नतरां नतमाम् । उच्चैस्तरां उच्चैस्तमाम् । अव्ययेभ्य इति किम् । उच्चैस्तरो वृक्षः उत्तरः उत्तमः । अस्मादेव वचनात् तिङन्तादपि अर्थप्रकर्षे तरप् (द्वि ?)बहुप्रकर्षे तमप् च भवति ॥

## विभज्योपपदे तरप् ॥ ८० ॥

---

१. 'स्ना' क. पाठः.

---

* 'भास्वरतर' इति पाठः स्यात् ।

विभागमर्हति विभज्यम् । स्वकीयमित्यादि विभज्य उपपदे गुणक्रियावचनेभ्यो द्व्यर्थप्रक(प ? र्षे)तरप्प्रत्ययो भवति । दन्तोष्ठस्य दन्ताः स्निग्धतराः । पाणिपादस्य पाणी सुकुमारतरौ । अत्र दन्ताश्च ओष्ठौ च पादौ चेत्यर्थबहुत्वेऽपि द्वैराश्यकल्पनं विभाग इति पूर्वेणाप्राप्तस्तरब् भवति । एवमस्माकं च देवदत्तः सुकुमार(तर) इति । यदा त्वस्माकमि'त्यस्मदो द्वयोश्च' (३-१-१५६) इति द्व्यर्थे बहुवचनं, तदा अस्माकं देवदत्तः सुकुमारतर इति पूर्वेणैव भवति । एवं प्लक्षन्यग्रोधस्य प्लक्षाः स्निग्धतराः । यत्र पुनरितरेतरयोगस्तत्रोद्भूतावयवत्वेन विभागत्वेन पूर्वसिद्धत्वाद् बह्वर्थप्रकर्षे तमबेव भवति । यथा गवां कृष्णा सम्पन्नक्षीरतमेति । कथं तर्हि माथुराः स्रौघ्नेभ्य आढ्यतराः अभिरूपतरा इति । अत्रापि 'पञ्चमी विभक्ते' इत्यनेन निर्धारणस्य विभक्तत्वाद् विभागो लक्ष्यते । यत्र तु पञ्चमी नास्ति तत्र निर्धारणस्य विभागाविभागसद्भावात् तरब् न भवति । माथुराणां च पाटलिपुत्राणां च माथुरा अभिरूपतमा इति । इह कथं सांकाश्यकेभ्यः पाटलिपुत्रकेभ्यश्च माथुरा अभिरूपतरा इति । द्वयोर्द्वयोरेकस्य प्रकर्षविवक्षया भविष्यति । बह्वपेक्षे तु प्रकर्षे तमबेव भवति ॥

## अभिन्नस्यापि[1] भेदे ॥ ८१ ॥

अभिन्नस्यापि वस्तुनो अवस्थाभेदाद्भेदे सति गुणक्रियाप्रकर्षविवक्षायां तरप्प्रत्ययो भवति । परुद् भवान् पटुरासीत् । पटुतर ऐषमः । अन्य एवासि सम्पन्न इति भेदस्योपचरितत्वात् पूर्वेण न प्राप्नोतीति वचनम् ॥

## स्वार्थे चाभिन्नोपपन्नादिभ्यः ॥ ८२ ॥

अभिन्नोपपन्नप्रकारेभ्यः स्वार्थे चशब्दाद्यथाप्राप्तश्च तरप्प्रत्ययो भवति । अभिन्नमेवाभिन्नतरम् । उपपन्नमेवोपपन्नतरम् । आदिग्रहणादल्पाच्तरम् । उच्चैस्तराम् । स्ववसह्वारे(?) उदात्तस्वरितपरस्य सन्नतर इति ॥

## तत्स्थगुणवचनेभ्यस्तरबर्थे ईयसुन् वा ॥ ८३ ॥

---

1. 'पि' । स्वार्थे' ख. ग. पाठः.

द्रव्यस्था(ने ? ए)व.गुणा(न् ? :) शुक्लादिवस्त्वर्पिताः तत्स्था गुणवचनाः पट्वादयः तेभ्यस्तरबर्थे ईयसुन्प्रत्ययो वा भवति । अयमनयोरतिशयेन पटुः पटीयान् पटुतरः । गरीयान् गुरुतरः । लघीयान् लघुतरः । म्रदीयान् मृदुतरः । माथुरेभ्यः पाटलिपुत्रकाः पटीयांसः पटुतराः । परुद्भवान् पटुरभूत् । ऐषमः पटीयान् पटुतरः । तत्स्थग्रहणं किम् । शुक्लतरः कृष्णतरः इत्यादौ तरबेव भवति । शुक्लादयो हि स्वातन्त्र्येणाप्यधीयन्ते । यथा पटस्य शुक्लः काकस्य कृष्णः । नतु मतुबादयः । नहि भवति देवदत्तस्य पटुः । सुवर्णस्य गुरुरिति । गुणग्रहणं किम् । क्रियावचनेभ्यो मा भूत् । अयमनयोः पाचकतरः । दन्तोष्ठस्य दन्ताः स्निग्धतराः । परुद्भवान् विद्वानासीत् । विद्वत्तरोऽधुनेति ॥

## तमबर्थे इष्ठन् ॥ ८४ ॥

तत्स्थगुणवचनेभ्यस्तमबर्थे इष्ठन्प्रत्ययो भवति । अयमेषां पटिष्ठः पटुतमः । इमावेषां पटिष्ठौ पटुतमौ । इमे एषां पटिष्ठाः पटुतमाः । तत्स्थग्रहणात् शुक्लतमः कृष्णतम इति इ(ष्ठ)न्न भवति । गुणग्रहणात् प्लक्षन्यग्रोधानां प्लक्षाः स्निग्धतमाः । अयमेषां पाचकानां पाचकतमः इति क्रियावचनेभ्यो न भवति ॥

## तयोर्विन्मतोर्लुक् ॥ ८५ ॥

तयोरीयसुनिष्ठनोः परतो विन्मतोर्लुग् भवति । अयमनयोरतिशयेन स्रग्वी स्रजीयान् । अयमेभ्यः प्रकर्षेण स्रग्वी स्रजीयान् । सर्वे इमे स्रग्विणः अयमेषामतिशयेन स्रजिष्ठः । अयमनयोरतिशयेन वसुमान् वसीयान् । अयमेषामतिशयेन वसुमान् वसिष्ठः । एवं स्रुचीयान् स्रुचिष्ठः । त्वचीयान् त्वचिष्ठः । अस्मादेव वचनाद्विन्मत्वन्ताद् अगुणवचनादपि ईयसुनिष्ठनौ भवतः । एवमुत्तरेष्वपि योगेषु प्रशस्यादिभ्य ईयसुनिष्ठनोर्विधानाद् भवति ॥

## प्रशस्यस्य श्रः ॥ ८६ ॥

तयोरीयसुनिष्ठनोः परतः प्रशस्यशब्दस्य श्र इत्ययमादेशो भवति । अयमनयोः प्रशस्यतरः श्रेयान् । अयमेषां प्रशस्यतमः श्रेष्ठः ॥

वृद्धस्य च ज्यः ॥ ८७ ॥

ईयसुनिष्ठनोः परतो वृद्धस्य चकारात् प्रशस्यस्य च ज्य इत्ययमादेशो भवति । अयमनयोरतिशयेन वृद्धतरः प्रशस्यतरो वा ज्यायान् । अयमेषामतिशयेन वृद्धतमः प्रशस्यतमो वा ज्येष्ठः । वृद्धस्य वर्षादेशमपि वक्ष्यति । वर्षीयान् वर्षिष्ठः ॥

अन्तिकबाढयोर्नेदसाधौ ॥ ८८ ॥

ईयसुनिष्ठनोः परतः अन्तिक बाढ इत्येतयोः स्थाने नेद साध इत्येतावादेशौ भवतः । अयमनयोरन्तिकतरः नेदीयान् । अयमेषामन्तिकतमः नेदिष्ठः । अयमनयोर्बाढतरः साधीयान् । अयमेषां बाढतमः साधिष्ठः ॥

युवाल्पयोः कन् वा ॥ ८९ ॥

ईयसुनिष्ठनोः परतो युवाल्पयोः स्थाने कनित्ययमादेशो वा भवति । अयमनयोर्युवतरः कनीयान् यवीयान् । अयमेषां यूनां युवतमः कनिष्ठः यविष्ठः । अयमनयोरतिशयेनाल्पतरः कनीयान् अल्पीयान् । अयमेषामल्पतमः कनिष्ठः अल्पिष्ठः ॥

प्रशंसायां रूपप् ॥ ९० ॥

प्रशंसाविशिष्टेऽर्थे वर्तमानात् प्रातिपदिकात् रूपप् प्रत्ययो भवति । प्रशस्तो वैयाकरणः वैयाकरणरूपः । याज्ञिकरूपः । प्रकृत्यर्थविशेषणवैशिष्ट्ये प्रशंसा भवति । वृषलरूपोऽयं, यः पलाण्डुना सुरां पिबति । (तत् सुरापो? चोररूपो)ऽयं, योऽक्ष्णोरप्यञ्जनमपहरति ॥

तिङश्च ॥ ९१ ॥

तिङन्तात् प्रशंसाविशिष्टेऽर्थे वर्तमानात् रूपप् प्रत्ययो भवति । प्रशस्तं पचति पचतिरूपम् । पचतोरूपं पचन्तिरूपम् । तिङन्तानां क्रियाप्रधानत्वात् तस्याश्च साध्यरूपत्वात् साध्यत्वेन लिङ्गसंख्याभ्यामयोगेन रूपं, तस्यौत्सर्गिकमेकवचनं नपुंसकलिङ्गं च भवति ॥

ईषदसमाप्तौ कल्पदेश्यदेशीयरः ॥ ९२ ॥

---

१. 'रः अल्पयानां' ख. ग. पाठः.

सम्पूर्णता पदार्थानां समाप्तिः। सा किञ्चिदूना ईषदसमाप्तिस्त-द्विशिष्टेऽर्थे वर्तमानात् प्रातिपदिकात् तिङन्ताच्च कल्पदेश्यदेशीयरः प्रत्यया भवन्ति। ईषदसमाप्तः पटुः पटुकल्पः पटुदेश्यः पटुदेशीयः। ईषदसमाप्तं पचति पचतिकल्पं पचतिदेश्यं पचतिदेशीयम्। पूर्ववन्नपुंसकलिङ्गमेक-वचनं च भवति। द्रव्यवचनेभ्योऽप्युपचारेणासमाप्तिगुणविवक्षायां कल्पादयो भवन्ति। गुडकल्पा द्राक्षा। तैलकल्पा प्रसन्ना। पयःकल्पा यवागूः। चन्द्रकल्पं मुखमिति। अथेह कथं कृतकल्पं भुक्तदेश्यं पीतदेशी-यमिति। यावता भूतकाले क्तः, न चास्ति सम्भवः। तद् भूतकालं चासमाप्तं चेति। नैष दोषः। 'आशंसायां भूतवच्च' इत्यत्र क्तो भविष्यति। यदा 'मतिबुद्धिपूजार्थेभ्य' इत्यादिना वर्तमाने क्तः, तदेषदसमाप्तौ कल्पादयः सिद्धा एव। यदापि क्रियैकदेशापवर्गाश्रयेण भूते क्तो विधीयते, तदापि भवति कृतकल्पं वस्त्रमिति। एवं तिङन्तस्य तदभ्युप-गन्तव्यम्। न ह्यन्यथा कृताकृतादयः क्रियैकदेशकृताकृताश्रयाः प्रयोगा उपपद्यन्ते। एवञ्च कालत्रयविशेषेभ्योऽपि तिङन्तेभ्यः कल्पादयो भवन्ति पचतिकल्पं पक्ष्यतिकल्पम् अपाक्षीत्कल्पमिति। अथ पटुकल्पमित्यादौ कथमीषदसमाप्तिः। निर्ज्ञातस्य ह्यर्थस्य (समाप्तिर)समाप्तिर्वा भवति। 'गुणस्त्वनिर्ज्ञातः' इति। लोकव्यवहारं दृष्ट्वा गुणस्य नैर्ज्ञातत्वम्। तद्यथा—पटुरयं ब्राह्मण इत्युच्यते, यो लघुनोपायेनार्थान् निर्वर्तयति। पटुकल्पोऽयमित्युच्यते यो न तथा करोति। गुडकल्पा द्राक्षे-त्यादावपि कथं निर्ज्ञातत्वम्। यावता लोके माधुर्येण द्राक्षाया गुडव्यवहारवदीषदसमाप्तिः सम्भवति। अथवा, गुडमाधुर्याश्रयणाद् द्राक्षायां गुडत्वारोपाद् गुडजात्यभावादीषदसमाप्तौ गुड इवेयं द्राक्षा गुड-कल्पा द्राक्षेति भवति॥

वा सुपो बहुच् पुरस्तात्॥ ६१॥

ईषदसमाप्तिविशिष्टेऽर्थे वर्तमानात् सुबन्तात् बहुच्प्रत्ययो वा भवति, स च पुरस्तादेव भवति। बहुपटुः। बहुमृदुः। बहुकृतम्। बहु-पीतम्। बहुगुडो द्राक्षा। बहुतैलं प्रसन्ना। बहुपयो यवागूः। बहुचन्द्रो

प्राग् इवो येऽर्थास्तेषु द्योत्येषु सर्वनाम्नां प्रातिपदिकानां सकारौ-[illegible]सुबन्तानां च तेषां प्राक् टेरकच्प्रत्ययो भवति । सर्वकः । विश्वकः । यकः । सकः । सर्वकस्मै विश्वकस्मै । सर्वकस्मात् विश्वकस्मात् । सर्वकस्मिन् विश्वकस्मिन् । युष्मकत्तात् अस्मकत्तात् । युवकयोः आवकयोः । युष्मकाभिः (अस्मकाभिः) । युष्मकभ्यम् अस्मकभ्यम् । सुपः खल्वपि—त्वयका मयका । त्वयकि मयकि । युष्माककम् अस्माककम् । भवतका भवतके भवतकः । भवतकि ॥

अव्ययानां कस्य दः ॥ ९७ ॥

प्राग् इवो येऽर्थास्तेषु द्योत्येष्वव्ययानां प्राक् टेरकच्प्रत्ययो तत्सन्नियोगेन च (क)कारान्तानां दकारः अन्तादेशो भवति । उच्चकैः नीचकैः शनकैः धकित् हिरकुत् । पृथकत् ॥

तूष्णीमः काम् ॥ ९८ ॥

प्राग् इवो येऽर्थास्तेषु द्योत्येषु तूष्णीमोऽव्ययस्य काम्प्रत्ययो भवति । [illegible] । तूष्णीकाम् । मकारः 'मिदचोऽन्त्यात् परः' इति विशेषणार्थः ॥

शीले को मलोपश्च ॥ ९९ ॥

शीले गम्यमाने तूष्णींशब्दात् कप्रत्ययो मलोपश्च भवति । तूष्णींशीलः तूष्णीकः । [illegible] कृतयोः [illegible] भवति । समानदेशानां ह्युत्सर्गाणामपवादे(न) बाधनं युज्यते, न भिन्नदेशानाम् । अधिकारादनेकेनापि च प्रत्ययेन यद्यपि(नैव) यथादेकस्याशेषस्यावद्योतनं दृश्यते । यथा—सौवीरस्य गार्ग्यायणी । [illegible] । नैष दोषः । विरो(धिस?धम)न्तरेणापि सामान्यफलत्वात् कृतार्थत्वे सति सामान्यविधेर्विशेषविधिर्बाधको भवति । यथा—ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेति । एवञ्च कृत्वा यथा भिन्न-देशोऽपि श्नमा शप् बाध्यते, बहुचा कल्पबादयः, तथा कश(?)कामा च कप्रत्ययो बाधिष्यत इति । गार्ग्यायणीत्यादिषु षित्करणसामर्थ्यात् [illegible]प्रत्ययमात्रं ङीषादिना क्रियत इति ॥

अज्ञाते ॥ १०० ॥

अज्ञातत्वोपाधिकेऽर्थे वर्तमानात् प्रातिपदिकात् तिङश्च यथाविहितं कादयो भवन्ति । कस्यायमश्वः अश्वकः । उष्ट्रकः । शब्दस्वरूपसामान्यात् स्वरूपेण ज्ञातोऽपि स्वामिविशेषसम्बन्धाज्ञानादज्ञात इत्युच्यते भवति । एव-मन्यत्रापि यथायोगमज्ञातता विज्ञेया । उच्चकैः नीचकैः । सर्वकैः विश्वकैः । त्वयका मयका । पचतकि । जल्पतकि । तूष्णीकाम् ।

कुत्सिते ॥ १०१ ॥

कुत्सितो निन्दितो गर्हितः । प्रकृत्यर्थविशेषणमेतत् । कुत्सितत्व-विशिष्टेऽर्थे वर्तमानात् प्रातिपदिकात् तिङश्च यथाविहितं कादयो भवन्ति । कुत्सितोऽश्वः अश्वकः । उष्ट्रकः । उच्चकैः नीचकैः । सर्वकैः विश्वकैः । त्वयका । मयका । पचतकि जल्पतकि तूष्णीकाम् ।

संज्ञायां कन् ॥ १०२ ॥

कुत्सितत्वोपाधिविशिष्टेऽर्थे वर्तमानात् प्रातिपदिकात् कन्प्रत्ययो भवति (तदन्तेन चेत्) संज्ञा गम्यते । शूद्रकः । रोमकः । पूर्णकः ॥

अवक्षेपणे च ॥ १०३ ॥

अवक्षिप्यते न्यक्क्रियतेऽनेनेत्यवक्षेपणम् । तद्विशिष्टे चार्थे वर्तमानात् प्रातिपदिकात् कन्प्रत्ययो भवति । व्याकरणकेन त्वं कत्थसे । श्रोत्रियकत्वेन त्वं गर्वितोऽसि । (य?अ)वक्षेपणकुत्सनयोः को विशेषः । प्रवृत्तिनिमित्तमकुत्सितमपि परस्य कुत्सनार्थमुपादीयते य त् तदवक्षेपणम् । स्वयन्तु कुत्सितमेव (यत्) तत् कुत्सनम् ॥

अनुकम्पायाम् ॥ १०४ ॥

अनुकम्पा दया । परस्य कारुण्येनाभ्युपपत्तिः । तस्यां गम्यमा-नायां प्रातिपदिकात् तिङन्ताच्च यथाविधि कादयो भवन्ति । पुत्रकः व-त्सकः । दुर्बलकः । शनकैः । बुभुक्षितकः । तूष्णीकाम् । स्वपितकि ॥

नीतौ च तद्युक्तायाम् ॥ १०५ ॥

तदित्यनेनानुकम्पा परामृश्यते । तद्युक्तायां च नीतौ गम्यमानायां प्रापितदिकात् तिङ(श्च ? न्ताच्च) यथाविधि कादयो भवन्ति । वत्स(कि ?

क) इहकि गृहाद् दूरं मा गाः इह नु ते धानकाः । इह नु ते गुडकाः । इह नु ते तिलकाः । पूर्वेण प्रत्यासत्तेरनुक(म्प ? म्प्य) मानादेव प्रत्ययः । अनेन तु सम्बन्धाद्व्यवहितादपि भवति । ननु च कुत्सितकोऽनुकम्पितक इति कुत्सानुकम्पयोश्शब्देनैवोक्तत्वात् कप्रत्ययो न भवति । नैष दोषः । कुत्सितस्यानुकम्पायामनुकम्पितस्य कुत्सायां भविष्यति । यदि वा यथा प्रकृष्टतरः प्रकृष्टतम इत्यादावन्य एव तु प्रकर्षस्तरबादिभिः, एवं कुत्सितक इत्यन्यैव शब्दप्रवृत्तिनिमित्तभूता कुत्सा प्रकृत्याभिधीयते । अन्या च प्रवृत्तिनिमित्तकुत्सा प्रत्ययेनेति । तदुक्तम् —

प्रकृष्ट इति शुक्लादिप्रकर्षस्याभिधायकः ।
प्रकृष्टस्य प्रकर्षे तु तरबादिर्विधीयते ॥
देवदत्तादिकुत्सायां वर्तते कुत्सितश्रुतिः ।
कुत्सितस्था तु या कुत्सा तदर्थः को विधीयते ॥
कुत्सितत्वेन वा कुत्सा न सम्यग्वापि कुत्सितः ।
स्वशब्दाभिहिते केन विशिष्टोऽर्थः प्रतीयते ॥

एवमनुकम्पितक इत्यत्रान्यैव शब्दप्रवृत्तिनिमित्तभूता । अन्या च प्रयोक्तृधर्मः प्रत्ययद्योत्येति ॥

बह्वचो मनुष्यनाम्नष्ठञ्घनिलचो वा ॥ १०६ ॥

बह्वचः प्रातिपदिकान्मनुष्यनामधेयादनुकम्पायां नीतौ च तद्युक्तायां गम्यमानायां ठच् घन् इलच् इत्येते प्रत्यया भवन्ति वा । अनुकम्पितो देवदत्तः शिक्ष्यमाणोऽपि वा देविकः देवियः देविलः । वावचनात् कोऽपि भवति । देवकः देवदत्तकः । उत्तरपदलोपमप्रतो वक्ष्यति । बह्वच इति किम् । (देव ? )दत्तकः । गुप्तकः । मनुष्यनाम्न इति किम् । मद्रबाहुकः ॥

उपादेरडञ्वुचौ च ॥ १०७ ॥

उपादेर्मनुष्यनामधेयाद् बह्वचः प्रातिपदिकाद् अनुकम्पायां नीतौ च तद्युक्तायामडच् वुच् इत्येतौ प्रत्ययौ भवतः । चकारात् ठज्घनिलचश्च वा भवन्ति । अनुकम्पित उपेन्द्रदत्तः शिक्ष्यमाणोऽपि वा उपडः उपकः । उपिकः उपियः उपिलः । उपेन्द्रदत्तकः ॥

जातिनाम्नः कन् ॥ १०८ ॥

बह्वच इति नानुवर्तते । जातिशब्दो यो मनुष्यनामधेयस्तस्मादनुकम्पायां नीतौ च तद्युक्तायां कन्प्रत्ययो वा भवति । व्याघ्रो नाम कश्चित् सोऽनुकम्पितः शिक्ष्यमाणो वा व्याघ्रकः । सिंहकः । पक्षे व्याघ्रिकः व्याघ्रियः व्याघ्रिलः इत्यादयो भवन्ति ॥

अजिनान्तादुत्तरपदस्य चाकृतसन्धेर्लोपः ॥ १०९ ॥

अजिनान्तान्मनुष्यनामधेयात् प्रातिपदिकादनुकम्पायां नीतौ च तद्युक्तायां कन्प्रत्यय उत्तरपदस्य चाकृतसन्धेर्लोपो भवति । (व्याघ्राजिनो नाम कश्चित् सः) अनुकम्पितः शिक्ष्यमाणोऽपि वा व्याघ्रकः । सिंहकः । शरभकः । अकृतसन्धेरिति वचनादकारो निवर्तते ॥

ठाजादावेकाच्पूर्वपदानाम् ॥ ११० ॥

अस्मिन् प्रकरणे यष्ठः अजा(ति? दि)श्च प्रत्ययः तस्मिन् परतः प्राग् हलः पूर्वपदानां प्रातिपदिकानामुत्तरपदस्य लोपो भवति । अनुकम्पिता वागाशीर्दत्ता वाचिकः । वाचियः वाचिलः । ठाजादाविति किम् । वागाशीर्दत्तकः ॥

षडङ्गुलिदत्तदेवदत्तादीनामूर्ध्वं द्वितीयादचः ॥ १११ ॥

षडङ्गुलिदत्तदेवदत्तादीनां मनुष्यनामधेयानां प्रातिपदिकानाम् अजादावनुकम्पायां प्रत्यये परतो द्वितीयादच उर्ध्वं लोपो भवति । षडङ्गुलिदत्तोऽनुकम्पितः शिक्ष्यमाणोऽपि षडिकः षडियः षडिलः । एकाच्पूर्वपदत्वात् पूर्वेणोत्तरपदलोपे वाचिकादिवत् षषिक इति स्यादिति द्वितीयादच ऊर्ध्वं लोपवचनम् । अनुकम्पितः शिक्ष्यमाणो ऽपि देवदत्तः देविकः देवियः देविलः । शोभनकर्मानुकम्पितः शोभि(तकः) शोभियः शोभिलः । आदिग्रहणात् रामिलः सोमिल इत्यादयो भवन्ति । अकृतसन्धेरित्येव । उपेन्द्रदत्तोऽनुकम्पितः उपडः । उपकः उपियः ।

1. 'चः' क. पाठः.

उपिलः उपि(इ?कः)इत्यादि (न?) भवति । ऊर्ध्वग्रहणं सर्वलोपार्थम् । पूर्वसूत्रे अजादाविस्येव (सिद्धे) ठग्रहणम् उको द्वितीयत्वे ठस्य कादेशार्थम् । मातृदत्तोऽनुकम्पितः मातृकः । पितृकः । अजादिलक्षणे हि लोपे यथा मथितं पण्यम् अस्य माथितिक इति कृतेऽपि 'यस्ये'त्यकारलोपे तकारान्तलक्षणः कादेशो न भवति, तथेहा (प्यपि?ध्यु)दन्तलक्षणो न स्यात् ॥

एज्द्वितीयत्वे तदादेः ॥ ११२ ॥

अजादावनुकम्पाप्रत्यये परभूते मनुष्यनामधेयानां प्रातिपदिकानामेज्द्वितीयत्वे सति तदादेः शब्द(स्व)रूपस्य लोपो भवति । कुबेरदत्तोऽनुकम्पितः कुबिकः कुबियः कुबिलः । कहोडोऽनुकम्पितः — कहिकः कहियः कहिलः ॥

शेवलसुपरिविशालवरुणार्यमादीनां तृतीयात् ॥

शेवलाद्यादीनां मनुष्यनाम्नामजादावनुकम्पाप्रत्यये परतस्तृतीयादच ऊर्ध्वं लोपो भवति । अनुकम्पितः शेवलदत्तः शेवलिकः शेवालियः शेवलिलः । सुपरिकः सुपरियः सुपरिलः । विशालिकः विशालियः विशालिलः । वरुणिकः वरुणियः वरुणिलः । अर्यमिकः अर्यमियः अर्यमिलः । आदिग्रहणाद्विशाखिलः । कुमारिलः बृहस्पतिक इत्यादयो भवन्ति । अकृतसन्धेरित्येव । शेवलेन्द्रदत्तोऽनुकम्पितः शेवलिक इति यथा स्यात्, शेव(लिय?ठयिक) इति मा भूत् । सुपर्याशीर्दत्तोऽनुकम्पितः सुपरिक इति यथा स्यात् । सुप(रि?र्यि)क इति मा भूत् ॥

प्रजापतिदत्तादीनां चतुर्थात् । ।११४ ॥

प्रजापतिदत्तादीनां मनुष्यनाम्नाम् अजादावनुकम्पाप्रत्यये परतश्चतुर्थादच ऊर्ध्वं लोपो भवति । प्रजापतिदत्तोऽनुकम्पितः प्रजापतिकः प्रजापतियः प्रजापतिलः । बृहस्पतिकः बृहस्पतियः बृहस्पतिलः । अकृतसन्धेरित्येव । प्रजापत्याशीर्दत्तोऽनुकम्पितः प्रजापतिक इति यथा स्यात् प्रजाप(ति?त्यि)क इति मा भूत् ॥

पूर्वपदस्य च ॥ ११५॥

---

१. 'द्विक, 'ब' ब. ग. पाठः.

मनुष्यनाम्नां प्रातिपदिकानां सम्बन्धिनः पूर्वपदस्याजादावनुकम्पाप्रत्यये परतो लोपो भवति । देवदत्तोऽनुकम्पितः, दत्तिकः । दत्तियः । दत्तिलः ॥

## इलादावुत्तरपदस्य च वा ॥ ११६ ॥

इलादावनुकम्पाप्रत्यये परतो मनुष्यनाम्नां प्रातिपदिकानां सम्बन्धिनः पूर्वपदस्योत्तरपदस्य च लोपो वा भवति । अनुकम्पितो देवदत्तः देवकः । दत्तकः । देवदत्तकः । व्याघ्रकः । अजिनकः । व्याघ्राजिनकः ।

## अप्रत्यये च ॥ ११७ ॥

प्रत्ययमन्तरेणापि मनुष्यनाम्नां पूर्वोत्तरपदयोर्लोपो वा भवति । देवः । दत्तः । देवदत्तः । विष्णुः । मित्रः । विष्णुमित्रः । व्यवस्थितविभाषाविज्ञानात् क्वचिदुत्तरस्यैव । भीमः भीमसेनः । सत्या सत्यभामा । क्वचित् पूर्वपदस्यैव । मिण्ठः । भर्तृमिण्ठः । हरिः, भर्तृहरिः ॥

## उगन्तादुत्तरपदलोपे घनिलचोरादिलोपः ॥ ११८ ॥

मनुष्यनाम्नां सम्बन्धिन उगन्तात् पूर्वपदाद् उत्तरपदस्य लोपे सति घनिलचोरादेर्लोपो भवति । भानुदत्तोऽनुकम्पितः भानुयः भा(नि?नु)लः । वासुयः वासुलः । भ्रातृयः भ्रातृलः । सवितृयः सवितृलः । ननु च संज्ञाशब्दैकदेशे लुप्ते संज्ञास्वरूपानुपलम्भात् कथं संज्ञिनोऽव(ग)मः । न हि यस्य देवदत्त इति संज्ञा कृता स पूर्वशब्दादुत्तरशब्दाद्वा प्रतीयते । न चैकदेशोऽनुमीयमानः समुदायार्थस्य वाचक इति वाच्यम् । प्रत्ययार्थस्य प्रत्यायकत्वायोगाद्धि प्रधानं शेषभावमनुभवति । नैष दोषः । संज्ञायामिति नियोगकाल एवानुनिष्पादितत्वात् समुदायवदवयवानामपि संज्ञात्वेन विनियोगात् । नन्वेवं सति पदैरिव वर्णैरपि समुदायार्थाभिधानं प्राप्नोति । ततश्च ज्येष्ठा आर्द्रा विशाखा इत्यादीनां योऽर्थः ष्ठार्द्राखेत्यादीनामपि स एव स्यात् । नैवम् । एवमादीनां शास्त्रेणानभ्यनुज्ञानात् । तथाहि—

तुल्यायामनुनिष्पत्तौ ष्ठार्द्राखा इत्यसाधवः ।
*न ह्यन्वाख्यायते शास्त्रे तेषु दत्तादिवद् भवेत् ॥ इति ॥

अल्पे ॥ ११९ ॥

अपचितं परिमाणं चाल्पत्वं, तद्विशिष्टेऽर्थे वर्तमानात् प्रातिपदिकाल्लटश्च यथाविधि काकचौ प्रत्ययौ भवतः। अल्पं तैलं तैलकम्। घृतकम्। पचतकि। उच्चकैः॥

ह्रस्वे ॥ १२० ॥

दैर्घ्यप्रतियोगिता ह्रस्वत्वं, तद्विशिष्टेऽर्थे वर्तमानाद् यथाविधि काकचौ प्रत्ययौ भवतः। वृक्षकः। प्लक्षकः। उच्चकैः। पचतकि॥

संज्ञायां कन् ॥ १२१ ॥

ह्रस्वत्वविशिष्टेऽर्थे वर्तमानात् प्रातिपदिकात् संज्ञायां विषये कन्-प्रत्ययो भवति। वंशकः। नडकः। वेणुकः॥

कुटीशमीशुण्डाभ्यो रः ॥ १२२ ॥

ह्रस्वत्वविशिष्टेऽर्थे वर्तमानेभ्यः कुट्यादिभ्यः स्वार्थे रप्रत्ययो भवति। ह्रस्वा कुटी, कुटीरः। शमीरः। शुण्डारः। प्रकृतीनां स्त्रीलिङ्गत्वेऽपि रप्रत्ययान्तानां शब्दान्तरत्वात् लिङ्गस्य च शब्दधर्मत्वात् पुल्लिङ्गं भवति॥

कुत्वा डुपच् ॥ १२३ ॥

कुतुशब्दाद्ध्रस्वत्वविशिष्टेऽर्थे वर्तमानात् स्वार्थे डुपच्प्रत्ययो भवति। *ह्रस्वः कुतुः कुतुपः। कुतुरिति चर्ममयं तैलादिपात्रमुच्यते॥

कासूगोणीभ्यां ष्टरच् ॥ १२४ ॥

कासूगोणीशब्दाभ्यां ह्रस्वोपाधिकेऽर्थे ष्टरच्प्रत्ययो भवति। ह्रस्वा कासूः कासूतरी। गोणीतरी। कासूरायुधविशेषः, यां शक्तिरित्याचक्षते। गोणीति धान्याद्यावपनमुच्यते। षकारो ङीषर्थः॥

वत्सोक्षर्षभाश्वेभ्यः स्वार्थतनुत्वे ॥ १२५ ॥

* 'कुतूरित्यूकारान्तस्त्रीलिङ्गशब्द इत्यभिधानकाराः। तेन ह्रस्वा कुतूरि'ति पाठः समीचीनः प्रतिभाति।

वत्सादिभ्यः शब्देभ्यः प्रवृत्तिनिमित्तस्य तनुत्वे द्योत्ये ष्टरच्प्रत्ययो भवति । वत्सतरः । उक्षतरः । ऋषभतरः । अश्वतरः । प्रथमवया गौर्वत्सः । तस्य तनुत्वं द्वितीयवयःप्राप्तिः । तरुण उक्षा । तस्य तनुत्वं *द्वितीयवयःप्राप्तिः । अनड्वानृषभः । तस्य तनुत्वमनोवहने मन्दशक्तिता । अश्वेनाश्वायां जातोऽश्वः । तस्य तनुत्वमन्यपितृकता । स्वार्थग्रहणं किम् । कृशो वत्सो वत्सतर इत्यादि मा भूत् ॥

किंयत्तदेकान्येभ्यो द्वयोरेकस्य निर्धारणे डतरच् ॥ १२६ ॥

जातिगुणक्रियासंज्ञाभिः समुदायादेकदेशस्य पृथक्करणं निर्धारणम् । तत्र जातिनिर्धारणस्योत्तरसूत्रेऽप्युपादानात् गुणादिनिर्धारणमिह गृह्यते । किमादिभ्यः प्रातिपदिकेभ्यो द्वयोरेकस्य निर्धारणे गम्यमाने डतरच्प्रत्ययो भवति । स स्वाभिधानशक्तिस्वाभाव्यान्निर्धार्यमाणवाचिभ्यो विज्ञायते । कतरो भवतोः पटुः पाचको देवदत्तो वा । यतरो भवतोः पटुः पाचको देवदत्तो वा, ततर आगच्छतु । तयोरेकतरः पटुः पाचको देवदत्तो वा आगच्छ(तु?तु) । अनयोरन्यतरः पटुः पाचको देवदत्तो वा आगच्छ(तु?तु) महाविभाषानुवृत्तेः प्रत्ययो विकल्प्यते । को भवतोः पटुः । यो भवतोः पटुः, स आगच्छ(तु?तु) । एको भवतोः पटुः । सर्वनामपठितोऽन्यतरशब्दो बहुत्वविषयोऽपि भवति ॥

वा बहूनां जातौ डतमच् ॥ १२७ ॥

बहूनां मध्यादेकस्य निर्धारणे गम्यमाने किंयत्तदेकान्येभ्यो जातिवृत्तिभ्यः स्वार्थे डतमच्प्रत्ययो भवति । कतमो भवतां कठः । यतमो भवतां कठः, ततम आगच्छतु । एकतम एषां कठः । अन्यतम एषां कालापः । महाविभाषया प्रत्ययविकल्पे सिद्धे वावचनमकजर्थम् । यको भवतां कठः सक आगच्छ(तु?तु) । एकक एषां कठः । अन्यक एषां कालापः । किमः साकच्कस्यापि कादेशं वक्ष्यति । एकस्येत्येव । यावेतेषां कठौ तावागच्छताम् ॥

---

* 'तृतीयवयःप्राप्तिरि'ति वृत्तिकारः ।

किमो डतरच् ॥ १२८ ॥

बहूनां मध्यादेकस्य निर्धारणे गम्यमाने किमो डतरच्प्रत्ययो भवति । कतरो भवतां कठः । कतरः कालापः । किमः क्षेपार्थवृत्ते- र्निर्धारणाभावात् परिप्रश्नार्थवृत्तेरेव ग्रहणं भवति ॥

इवे संज्ञायाम् ॥ १२९ ॥

इवार्थः सादृश्यं, तद्विशिष्टेऽर्थे वर्तमानात् प्रातिपदिकात् कन्प्रत्ययो भवति । (संज्ञायां गम्यमानायाम्) । अश्वसदृशस्य या संज्ञा अश्वकः । गर्द- भक इति ॥

प्रतिकृतौ च ॥ १३० ॥

प्रतिकृतिः प्रतिरूपकं प्रतिच्छन्दकः । तद्विशिष्ट इवार्थे वर्तमानात् प्रातिपदिकात् कन्प्रत्ययो भवति । अश्व इवायमश्वस्य प्रतिकृतिः अश्वकः । उष्ट्रकः । गर्दभकः । प्रतिकृताविति किम् । गौरिव गवयः । इत उत्तरं संज्ञायां (प्रतिकृताविति च) प्रतियोगं यथासम्भवमुपतिष्ठते ॥

लुम्मनुष्ये ॥ १३१ ॥

इवार्थविहितस्य प्रत्ययस्य मनुष्येऽभिधेये लु(ग्?ब्) भवति । चञ्चा तृणमयः पुरुषः, यः क्षेत्ररक्षणाय क्रियते । चञ्चेव चञ्चा । एवं वध्रिका । दासी । खरकुटी । लुपि युक्तवद्भावात् पुलिङ्गेऽप्यर्थे स्त्रीलिङ्ग- तैव भवति । मनुष्य इति किम् । अश्वकः ॥

जीविकार्थे चापण्येऽर्चाचित्रध्वजेषु ॥ १३२ ॥

जीविकार्थं यदपण्यमर्चाचित्रध्वजरूपं तस्मिन्नभिधेये कस्य लु- (ग्?ब्) भवति । विक्रीयते यत् तत् पण्यं, ततोऽन्यदपण्यम् । अर्चा- सु—वासुदेवः । स्कन्दः । आदित्यः । देवलकानां जीविकार्थदेवताप्रति- कृतय उच्यन्ते । चित्रेषु—रामः । युधिष्ठिरः । अर्जुनः । दुर्योधनः । ध्वजे—*(व्रजः?)गरुडः । हनुमान् । सिंहः । अपण्य इति किम् । वासु-

* 'वृष' इति पाठः स्यात् ।

देवकान् विक्रीणीते । अर्चादिष्विति किम् । हस्तिकान् अश्वकान् हंसकान् मयूरकान् छायादर्शको दर्शयति ॥

देवहंसवारिजलाजराजशतशङ्कुभ्यः पथात्
॥ १३३ ॥

देवादिभ्यः परो यः पथशब्दस्तदन्तात् प्रातिपदिकादिवार्थे विहितस्य कस्य लु(गु)(ब्)भवति । देवपथ इव देवपथः । हंसपथः । वारिपथः । जलपथः । अजपथः । राजपथः । शतपथः । शङ्कुपथः ॥

सिद्धगत्युष्ट्रग्रीवावामरज्जुमत्स्येन्द्रादिभ्यश्च
॥ १३४ ॥

सिद्धगत्यादिभ्यः प्रातिपदिकेभ्य इवार्थे विहितस्य कस्य लुब् भवति । सिद्धगतिः । उष्ट्रग्रीवा । वामरज्जुः । मत्स्यः । इन्द्रः । आदिग्रहणात् कङ्कमुखकाकतुण्डादयो भवन्ति ॥

न हस्तदण्डपुष्पादिभ्यः ॥ १३५ ॥

हस्तादिभ्य इवार्थे विहितस्य कस्य लुब्न भवति । हस्तकः । दण्डकः पुष्पकः । पूर्वसूत्रे आदिशब्दस्य प्रकारार्थत्वात् प्राप्तो लुबनेन निषिध्यते । आदिग्रहणात् तिलकदन्तकादयो भवन्ति ।

वस्तेर्ढञ् ॥ १३६ ॥

संज्ञाप्रतिकृत्योरिति निवृत्तम् । इवेत्येवानुवर्तते । वस्तिशब्दादिवार्थे द्योत्ये ढञ्प्रत्ययो भवति । वस्तिरिव वास्तेयः वास्तेयी ॥

शिलाया ढश्च ॥ १३७ ॥

शिलाशब्दादिवार्थे ढप्रत्ययश्चकारात् ढञ् प्रत्ययो भवति । शिलेयं दधि । शैलेयं हिमम् ॥

शाखामुखमेघजघनचरणस्कन्धोरशिरःशृङ्गाग्रशरणेभ्यो यः ॥ १३८ ॥

शाखादिभ्य इवार्थवृत्तिभ्यः स्वार्थे यप्रत्ययो भवति । शाखेव शाख्यः । मुख्यः । मेघ्यः जघन्यः । चरण्यः । स्कन्ध्यः । उरस्यः । शिरस्यः । शृङ्ग्यः । अग्र्यः । शरण्यः ॥

द्रोर्भव्ये ॥ १३९ ॥

द्रुशब्दादिवार्थवृत्तेर्भव्येऽभिधेये स्वार्थे यप्रत्ययो भवति । द्रुरिव द्रव्यमयं राजपुत्रः । इन्द्रद्रुमः पुष्पपल्लवादिभिरर्थिनः कृतार्थयति । एवमन्योऽपि यः स एवमुच्यते । स हि भवनमर्हतीति भव्यो भवति । आत्मवानपि द्रव्यमुच्यते । 'क्रिया हि द्रव्यं विनयति नाद्रव्य-मि'ति । प्रकर्षार्थकर्तृ(?)साधकत्वाद्धिरण्यादिकमपि द्रव्यम् । 'निर्द्रव्यं (प्र ?)पुरु(षस्त्य ? षं त्य)जन्ति गणिका' इति ॥

कुशाग्रार्धजरतीघुणाक्षरादिभ्यश्छः ॥ १४० ॥

कुशाग्रादिभ्य इवार्थे द्योत्ये छप्रत्ययो भवति । कुशाग्रमिव तीक्ष्णा कुशाग्रीया बुद्धिः । अर्धजरतीशब्दोऽर्धजरतिकामनुवर्तते । तदिव तद-(र्धा ? र्ध)जरतीयम् । घुणोत्किरणात् कथमपि निष्पन्नमक्षरं तदिव यद-कु(ले ? शले)न दैवान्निष्पाद्यते तद् घुणाक्षरीयम् । आदिग्रहणाद् गोम(यी)-यवायसीयादयो भवन्ति ॥

समासाच्च तद्विषयादाकस्मिके ॥ १४१ ॥

तदित्यनेन इवार्थविषयस्तद्धितो निर्दिश्यते । तद्विषयो यः समासः 'काकतालादय इवार्थे'(३-२-५)इति विहितस्तस्मादिवार्थे द्योत्ये आकस्मिकविषये छप्रत्ययो भवति । काकतालमिलन(म्) इव देवदत्तस्य मिलनमाकस्मिकं तत् काकतालीयम् । अजाकृपाणीयम् । अन्धवर्तिकीयम् । खलतिबिल्वीयम् । अन्ये काकतालयोरागमनपतनाभ्यां यन्मिलनं यच्च देवदत्तस्य (दस्यूनां) चागमनोपनिपाताभ्यां (मी ? मि) लनं, तद्धेतुकेन च (येन ?) साधारणधर्मेण तुल्यमिवार्थे सार्थकमुत्पादयन्ति । अन्ये त्विवार्थविषयात् समासादपरस्मिन्निवार्थे प्रत्ययमिच्छन्ति ॥

शर्कराकपालिकाकपाटिकासिकतानकुलनाराचशत-पत्रपुण्डरीकेभ्योऽण् ॥ १४२ ॥

शर्करादिभ्यः प्रातिपदिकेभ्य इवार्थवृत्तिभ्यः स्वार्थेऽण्प्रत्ययो भवति। शर्करेव शार्करम् । कापालिकम् । कापाटिकम्। सैकतम् । नाकुलम् । नाराचम् । शातपत्रम्। पौण्डरीकम् ॥

गोर्लोमपुच्छाभ्याम् ॥ १४३ ॥

गोशब्दात् परौ यौ लोमपुच्छशब्दौ ततः प्रातिपदिकादिवार्थवृत्तेरण्-प्रत्ययो भवति । गोर्लोमेव गौलोमम् । गोपुच्छमिव गौपुच्छम् ॥

अः सपत्न्याः ॥ १४४ ॥

सपत्नीशब्दादिवार्थवृत्तेरप्रत्ययो भवति । सपत्नीव सपत्नः । प्रति-पक्ष उच्यते ॥

अङ्गुलिभरुजावभ्रुवल्गुमण्डरमण्डलमुनिहरिकपि-खलोदश्विद्रुरुतरशष्कुलीकुलिशगोणीभ्यष्ठक् ॥ १४५ ॥

अङ्गुल्यादिभ्यः शब्देभ्य इवार्थवृत्तिभ्यष्ठक्प्रत्ययो भवति । अङ्गु-लिरिव आङ्गुलिकः । भारुजिकः । बाभ्रुकः । वाल्गुकः माण्डरिकः । माण्ड-लिकः । मौनिकः । हारिकः । कापि(ल?)कः । खालिकः । औदश्विकः । रौरुकः । ता(र)सिकः । शाष्कुलिकः । कौलिशिकः । गौणिकः ॥

एकशालायाष्ठ(च् ? ञ्च) ॥ १४६ ॥

*एकशब्दाद् स्थालार्थ(?)वृत्तेष्ठच्, चकाराद् ठक् च प्रत्ययो भवति । एकशालेव एकशालिकः, ऐकशालिकः ॥

कर्कलोहिताभ्यामीकक् ॥ १४७ ॥

१. 'राकलकाक' ख. ग. पाठः. २. 'सशाष्कु' क. पाठः. ३. ४. 'नृ' ख. ग. पाठः.

* 'एकशालाशब्दादिवार्थवृत्तेरि'ति पाठः स्यात् ।

कर्कलोहितशब्दाभ्यामिवार्थवृत्तिभ्यामीकक्प्रत्ययो भवति । कर्क इव कार्कीकः । लौहितीकः । स्फटिकादिरकर्कलोहितवर्णोऽप्युपाश्रयवशात् तथावभासते, स एवमुच्यते ॥

पूगादग्रामणीपूर्वाञ्ञ्यः ॥ १४८ ॥

इवेति निवृत्तम् । नानाजातीया अनियतवृत्तयोऽर्थकामप्रधानाः सङ्घाः पूगाः । पूगवाचि(नः) प्रातिपदिकात् स्वार्थे ञ्यप्रत्ययो भवति, न चेत् ग्रामणीः पूर्वावयवोऽस्य भवति । लौहध्वज्यः लौहध्वज्यौ । बहुषु लुकं वक्ष्यति । लोहध्वजाः । शैब्यः शैब्यौ शिबयः । चातक्यः चातक्यौ चातकाः । अग्रामणीपूर्वादिति किम् । देवदत्तो ग्रामणीरस्य देवदत्तकः देवदत्तकौ देवदत्तकाः भवति देवदत्तशब्दः पूगवचनः । किन्तु देवदत्तः पूर्वावयवोऽस्य स च ग्रामणीरिति ञ्यो न भवति ॥

व्रातादस्त्रियाम् ॥ १४९ ॥

नानाजातीया अनियतवृत्तय उत्सेधजीविनो व्राताः । तद्वाचिनः प्रातिपदिकाद् अस्त्रीवृत्ते स्वार्थे ञ्यप्रत्ययो भवति । .... .... ....

... ... ... ... ... ... ... ... ...

... ... ... ... ... ... ... ... ...

... ... ... ... ... ... ... ... ...

... ... ... ... ... ... ... ... ...

... ... ... ... ... ... ... ... ...

बाहीकेष्वब्राह्मणराजन्यादायुधजीविसङ्घाञ्ञ्यट् ॥

... ... ... ... ... ... ... ... ...

... ... ... ... ... ... ... ... ...

.... .... ... कौण्डीबृस्यः कौण्डीबृस्यौ कुण्डीबृसाः । क्षौद्रक्यः क्षौद्रक्यौ क्षुद्रकाः । मालव्यः मालव्यौ मालवाः । टित्करणसामर्थ्याद्-स्त्रियामिति नानुवर्तते । कौण्डीबृसी । क्षौद्रकी । मालवी । बाहीकेष्विति किम् । शबरः शबरौ शबराः । पुलिन्दः पुलिन्दौ पुलिन्दाः । आयुधजीविग्रहणं किम् । मल्लः मल्लौ मल्लाः । शयाण्डः शयाण्डौ शयाण्डाः । सङ्घग्रहणं किम् । सम्राट् । अब्राह्मणराजन्यादिति किम् । शालङ्कायनः शालङ्कायनौ शालङ्कायनाः । राजन्यः राजन्यौ राजन्याः ॥

वृकाट्टेण्यण् ॥ १५१ ॥

वृकशब्दादायुधजीविसङ्घवाचिनः स्वार्थे टेण्यण्प्रत्ययो भवति। वार्केण्यः वार्केण्यौ वृकाः। वार्केणी स्त्री। आयुध(जीवि)सङ्घादिति किम्। मृगजातेर्मा भूत्।

'कामक्रोधौ मनुष्याणां खादितारौ वृकाविव'॥

दामन्यौलपिबैजवाप्यौदङ्क्यौडविकाकन्दक्याविर्दन्तिशाकुन्तकिसार्वसेनिबैन्दविमौञ्जायनसावित्रीपुत्रेभ्यश्छः ॥ १५२ ॥

दामन्यादिभ्यः प्रातिपदिकेभ्य आयुधजीविसङ्घवाचिभ्यः स्वार्थे छप्रत्ययो भवति। एषामन्त्यः षष्ठीसमासः। मौञ्जायनो नडादिफगन्तः। दामनीयः दामनीयौ दामनयः। औलपीयः औलपीयौ औलपयः। बैजवापीयः बैजवापीयौ बैजवापयः। औदङ्कीयः औदङ्कीयौ औदङ्कयः। औडवीयः औडवीयौ औडवयः। काकन्दकीयः काकन्दकीयौ काकन्दकयः। आविर्दन्तीयः आविर्दन्तीयौ आविर्दन्तयः। शाकुन्तकीयः शाकुन्तकीयौ शाकुन्तकयः। सार्वसेनीयः सार्वसेनीयौ सार्वसेनयः। बैन्दवीयः बैन्दवीयौ बैन्दवयः। मौञ्जायनीयः मौञ्जायनीयौ मौञ्जायनाः। सावित्रीपुत्रीयः सावित्रीपुत्रीयौ सावित्रीपुत्राः॥

कौण्डोपरथदाण्डकि[2]क्रौष्टुकिजालमानिब्राह्म[3]गुप्तजानकिभ्यस्त्रिगर्त्तेषु ॥ १५३ ॥

कौण्डोपरथादिभ्य आयुधजीविसङ्घवाचिभ्यस्त्रिगर्त्तविषयेभ्यः स्वार्थे छप्रत्ययो भवति। एषां प्रथमपञ्चमौ शिवाद्यणन्तौ। अन्ये त्विञन्ताः। कौण्डोपरथीयः कौण्डोपरथीयौ कौण्डोपरथाः। दाण्डकीयः दाण्डकीयौ दाण्डकयः। (क्रौष्टुकीयः क्रौष्टुकीयौ क्रौष्टुकयः।) जालमानीयः जालमानीयौ जालमानयः। *ब्राह्मणगुप्तीयः ब्राह्मणगुप्तीयौ ब्राह्मणगुप्ताः। जानकीयः जानकीयौ जानकयः। त्रिगर्त्तेष्विति किम्। कौण्डोपरथ्यः कौण्डोपरथ्यौ कौण्डोपरथाः॥

---

१. 'ति' ख. ग. पाठः. २. 'कीक्रोष्टुकीजालमानिब्रा' क. पाठः. ३. 'ब' ख. प

---

* सूत्रपाठानुरोधात्तु 'ब्राह्मगुप्तीय' इति णवर्जितः पाठः कल्प्यः।

क्रमशः। माषादयो हि परिमाणशब्दाः सुवर्णादिर्वस्त्वन्तरस्यावच्छेदार्थमु- पादीयमाना वृत्तावप्येकार्था भवन्ति। क्रमशश्चेति क्रमवतां भेदात् क्रमेणे- ति वीप्सा भवति। सङ्ख्यैकार्थादिति किम्। माषौ माषौ ददाति। घटं घटं पश्यति। वृक्षं वृक्षं छिनत्ति। वीप्सायामिति किम्। द्वौ ददाति। कारका- दित्येव। द्वयोर्द्वयोः स्वामी। कार्षापणस्य कार्षापणस्येष्टे॥

## सङ्ख्यापूर्वेभ्यः पादशतमोदकादिभ्यो वुन्॥ ३॥

सङ्ख्यापूर्वेभ्यः पादशतमोदकादिभ्यो वीप्सायां गम्यमानायां वुन् प्रत्ययो भवति। द्वौ द्वौ पादौ ददाति द्विपदिकां ददाति। (द्विशतिकां ददाति।) द्विमोदकिकां भक्षयति। अपूपिकामश्नाति। स्वभावतः स्त्री- लिङ्गाः। सङ्ख्यापूर्वेभ्य इति किम्। पादं पादं ददाति। वीप्सायामिति किम्। द्वौ पादौ ददाति। द्वावपूपावश्नाति॥

## दण्डदानयोः॥ ४॥

दण्डो दमनम्। दानं व्यवसर्गः। दण्डे दाने च गम्यमाने संख्यापू- र्वेभ्यः पादादिभ्यो वुन्प्रत्ययो भवति। *द्वौ (द्वौ)[1] पादौ दण्डितः द्विपदिकां दण्डितः। त्रिपादिकाम्। द्वौ पादौ ददाति द्विपादिकां ददाति। त्रिपदिकां व्यवसृजति। द्विशतिकां दण्डितः। द्विशतिकां ददाति। द्विमोदकिकां दण्डितः। द्विमोदकिकां व्यवसृजति॥

## वारसंख्यायाः कृत्वसुच्॥ ५॥

सजातीयैककर्तृकक्रियोत्पत्तिर्वारः। क्रियाभ्यावृत्तिरिति यावत्। तद्ग- तैना(त्मिका? धिकसा)धारणा संख्या। तद्विशिष्टेऽर्थे वर्तमानात् प्रातिपदि- कात् स्वार्थे कृत्वसुच्प्रत्ययो भवति। पञ्च वारान् पचति पञ्चकृत्वः पचति। शतकृत्वो भुङ्क्ते। विंशतिकृत्वः शृणोति। शतकृत्वोऽधीते। बहुकृत्वः गणकृत्वः तावत्कृत्वः। कतिकृत्वः। वारग्रहणं किम्। पञ्च भुङ्क्ते.......पञ्च- वारान् भुङ्क्ते(?)। सङ्ख्याया इति किम्। भूरिवारान् भुङ्क्ते। प्रभूतान् (वारान्) पचति॥

## बह्वोर्वाराविप्रकर्षे धा च॥ ६॥

१. 'रावति' ख. ग. पाठः.

*अवीप्सार्थोऽयमारम्भः।

बहुशब्दाद् गणे वर्तमानात् वाराणामविप्रकर्षे अविदूरत्वे गम्यमाने स्वार्थे धाप्रत्ययश्चकारात् कृत्वसुच्च भवति। बहून् वारानह्नि भुङ्क्ते बहुधा भुङ्क्ते। अविप्रकर्ष इति किम्। बहुकृत्वो मासस्य भुङ्क्ते॥

द्वित्रिचतुर्भ्यः सुच्॥ ७॥

द्व्यादिभ्यो वारगणने वर्तमानेभ्यः स्वार्थे सुच्प्रत्ययो भवति। कृत्वसुचोऽपवादः। द्वौ वारौ भुङ्क्ते द्विर्भुङ्क्ते। त्रिर्भुङ्क्ते। चतुर्भुङ्क्ते॥

एकस्य सकृच्च॥ ८॥

वारसंख्यावृत्तेरेकशब्दात् सुच्प्रत्ययः, तत्सन्नियोगेन चास्य सकृदादेशो भवति। कृत्वसुचोऽपवादः। सकृद् भुङ्क्ते। सकृदधीते॥

तत् प्रकृतमिति मयट्॥ ९॥

तदिति प्रथमासमर्थात् प्रकृतत्वोपाधिकेऽर्थे वर्तमानात् स्वार्थे मयट् प्रत्ययो भवति। अन्नं प्रकृतमन्नमयम्। यवागूः प्रकृता यवागूमयम्। टकारो ङीबर्थः॥

अस्मिन्निति च॥ १०॥

तदिति प्रथमासमर्थात् प्रकृतत्वोपाधिकेऽर्थे वर्तमानात् अस्मिन्निति सप्तम्यर्थे च मयट्प्रत्ययो भवति। अन्नं प्रकृतमस्मिन् अन्नमयो यज्ञः। अपूपमयं पर्व। वटकमयी यात्रा। यवागूमयी .... .... .... ....

.... .... .... .... .... .... ....

.... .... .... .... .... .... ....

ज्ञः। चकारः पूर्वार्थानुकर्षणार्थः। तेनोत्तरसूत्रे द्वयोरप्यनुवृत्तिर्भवति॥

समूहवच्च बहुषु॥ ११॥

तदिति प्रथमासमर्थात् प्रकृतत्वोपाधिकेऽर्थे वर्तमानात् बहुवचनविषयात् स्वार्थेऽस्मिन्निति सप्तम्यर्थे समूहवत्प्रत्ययाः चकारान्मयट्प्रत्ययो भवति। अपूपाः प्रकृताः आपूपिकम्। मौदकिकम्। शाष्कुलिकम्। वैनुकम्। अपूपमयम्। मोदकमयम्। शष्कुलीमयम्। वेनुमयम्। स्वार्थिकानां प्रकृतेर्लिङ्गवचनातिक्रमेऽपि भवति। अपूपाः प्रकृता अस्मिन्नित्यापूपिको यज्ञः।

मौदकिकः । शाष्कुलिकः । धैनुकः । अपूपमयः । मोदकमयः । शष्कुलीमयः । धेनुमयः ॥

अनन्तावसथेतिहभेषजाञ्ञ्यः ॥ १२ ॥

अनन्तादिभ्यः शब्देभ्यः स्वार्थे ञ्यप्रत्ययो भवति । अनन्तमेवानन्त्यम् । आवसथ एवावसथ्यम् । इतिह एवैतिह्यम् । भेषजमेव भैषज्यम् । इतिह इति निपातसमुदाय उपदेशपारम्पर्ये वर्तते ॥

तीयादविद्यायामीकक् ॥ १३ ॥

तीयप्रत्ययान्तादविद्यार्थे वर्तमानात् स्वार्थे ईकक्प्रत्ययो वा भवति । द्वितीयमेव द्वैतीयीकम् । तृतीयमेव तार्तीयीकम् । अविद्यायामिति किम् । द्वितीया विद्या । तृतीया विद्या । ककारो वृद्धिस्वरार्थः ॥

यावमण्यविपीडितास्थिचन्द्रतन्त्वजाताजातकुल्माषादिभ्यः कन् ॥ १४ ॥

यावादिभ्यः प्रातिपदिकेभ्यः स्वार्थे कन्प्रत्ययो भवति । याव एव यावकः । मणिकः । अविकः । पीडितकः । अस्थिकः । चन्द्रकः । तन्त्वकः । जातकः । अजातकः । कुल्माषकः । आदिग्रहणात् भृतकभिक्षुकादयो भवन्ति ॥

ऋतावुष्णशीताभ्याम् ॥ १५ ॥

उष्णशीतशब्दाभ्यामृतुवृत्तिभ्यां स्वार्थे कन्प्रत्ययो वा भवति । उष्णः ऋतुः उष्णकः । शीतः ऋतुः शीतकः ।

पशौ लूनवियाताभ्याम् ॥ १६ ॥

लूनवियातशब्दाभ्यां पशुवृत्तिभ्यां स्वार्थे कन्प्रत्ययो भवति । लूनः पशुः लूनकः । वियातः पशुः वियातकः । पशाविति किम् । लूनो यवः । वियातो बटुः ॥

जातौ प्रियच्चित्रगुह्यगोलकुब्जादिभ्यः ॥ १७ ॥

प्रियादिभ्यः प्रातिपदिकेभ्यो जातिवृत्तिभ्यः कन्प्रत्ययो(वा)भवति । प्रियकः चित्रकः मृगजातिः । गुह्यकः देवजातिः । गोलकः ब्राह्मणजातिः ।

१. 'स्त' क, ख, ग. पाठः. २. 'द्व' ख, ग. पाठः. ३. 'तजा' ग. पाठः.

कुञ्जकः गजजातिः । जाताविति किम् । मिश्रः चित्रः । गुप्तः । गोडः । कुञ्जः । [illegible] भवन्ति ॥

अणोर्निपुणे ॥ १८ ॥

अणुशब्दान्निपुणार्थवृत्तेः कन्प्रत्ययो (वा) भवति । अणुरेवाणुकः । निपुण इति किं । अणुर्व्रीहिः ॥

पुत्रात् कृत्रिमे ॥ १९ ॥

पुत्रशब्दात् कृत्रिमार्थवृत्तेः, स्वार्थे कन्प्रत्ययो वा भवति । कृत्रिमः पुत्रः पुत्रकः । कृत्रिम इति किम् । पुत्रः सूनुः ।

स्नाताद् वेदसमाप्तौ ॥ २० ॥

स्नातशब्दात् वेदसमाप्तौ गम्यमानायां स्वार्थे कन्प्रत्ययो वा भवति । वेदव्रतानि च समाप्य स्नातः स्नातकः । वेदसमाप्ताविति किम् । तीर्थे स्नातः ॥

शून्याद्रिक्ते ॥ २१ ॥

शून्यशब्दात् रिक्तार्थवृत्तेः स्वार्थे कन्प्रत्ययो वा भवति । शून्यकं रिक्तम् । रिक्त इति किम् । शुने हितं शून्यम् ॥

दानात् कुत्सिते ॥ २२ ॥

दानशब्दात् कुत्सितार्थवृत्तेः स्वार्थे कन्प्रत्ययो वा भवति । कुत्सितं दानं दानकम् । कुत्सित इति किम् । दानं ददाति ॥

तनोः सूत्रे ॥ २३ ॥

तनुशब्दात् सूत्रार्थवृत्तेः स्वार्थे कन्प्रत्ययो (वा) भवति । तनु सूत्रं तनुकम् । सूत्र इति किम् । तनुर्रसः ॥

बृहत्या आच्छादने ॥ २४ ॥

बृहतीशब्दादाच्छादनार्थवृत्तेः स्वार्थे कन्प्रत्ययो भवति । बृहतिका आच्छादनविशेषः । व्यवस्थितविभाषया नित्यम् । आच्छादन इति किम् । बृहती ओषधिः ॥

कुमारक्रीडनकेभ्यः ॥ २५ ॥

कुमारक्रीडनकवाचिभ्यः स्वार्थे कन्प्रत्ययो भवति । कन्दुकः भ्रमरकः ॥

बहुभिन्नोपपन्नसुकराद्यादेस्तरपः ॥ २६ ॥

बह्वाद्यादेस्तरबन्तात् प्रातिपदिकात् स्वार्थे कन्प्रत्ययो वा भवति । बहुतरमेव बहुतरकम् । अभिन्नतरकम् । उपपन्नतरकम् सुकरतरकम् ॥

ईयसश्च ॥ २७ ॥

ईयसन्तात् प्रातिपदिकात् स्वार्थे कन्प्रत्ययो वा भवति । श्रेयानेव श्रेयस्कः । ज्यायानेव ज्यायस्कः ॥

लोहितान्मणौ ॥ २८ ॥

लोहितशब्दान्मणावर्थे स्वार्थे कन्प्रत्ययो वा भवति । लोहित एव लोहितकः मणिः । मणाविति किम् । लोहिता गौः ॥

रक्ते ॥ २९ ॥

लोहितशब्दाल्लाक्षादिना रक्तेऽर्थे वर्तमानात् स्वार्थे कन्प्रत्ययो भवति । लोहित एव लोहितकः पटः । प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणात् लोहि(तीति)का शाटी । लोहि(तीति)का पटी ॥

अनित्यवर्णे च ॥ ३० ॥

अनित्यवर्णे चार्थे वर्तमानाल्लोहितशब्दात् स्वार्थे कन्प्रत्ययो वा भवति । लोहितकः कोपेन । लोहितकः पीडनेन । लिङ्गविशिष्टग्रहणाल्लोहितिका कोपेन । लोहितिका पीडनेन । अनित्य इति किम् । लोहितः लोहिता । (लोहितिका कोपेन ?)॥

कालात् ॥ ३१ ॥

कालशब्दात् कज्जलादिना रक्तेऽनित्यवर्णे चार्थे वर्तमानात् स्वार्थे कन्प्रत्ययो(वा)भवति । कालकः प : । कालकं मुख, वैलक्ष्येण कालम् ॥

क्तादनात्यन्तिके ॥ ३२ ॥

क्तप्रत्ययान्तादनात्यन्तिकविशिष्टेऽर्थे वर्तमानात् स्वार्थे कन्प्रत्ययो वा भवति । नात्यन्तं भिन्नः भिन्नकः, छिन्नकः । अनात्यन्तिक इति किम् । भिन्नः । छिन्नः ॥

न सामिनेमार्धयोगे ॥ ३३ ॥

साम्यादियोगे 'क्तादनात्यन्तिके' इति कन्प्रत्ययो न भवति । सामिकृतम् । नेमकृतम् । अर्धकृतम् । सामिभिन्नम् । नेमभिन्नम् । अर्धभिन्नम् इति । उपपदात् प्रतीतेऽप्यनात्यन्तिकत्वे स्वार्थिकत्वात् कन् स्यादेवेति प्रतिषेधः ॥

जात्यन्ताच्छ बन्धुनि ॥ ३४ ॥

बध्यन्ते समवयन्ति जात्यादयोऽर्था इति बन्धु द्रव्यं, तस्मिन् वर्तमानात् जात्यन्तात् प्रातिपदिकात् स्वार्थे छप्रत्ययो भवति । ब्राह्मणजातीयः । क्षत्रियजातीयः । बन्धुनीति किम् । शोभना ब्राह्मणजातिः । ब्राह्मणादिप्रकरणार्थेन जाती(या?येन) जातिशब्देन च बहुव्रीहिणा विकल्पे सिद्धे छविधानं नित्यार्थम् । तेन बन्धुनि ब्राह्मणजातिरिति न भवति ॥

स्थानान्तात् पूर्वपदार्थतुल्ये ॥ ३५ ॥

स्थानशब्दान्तात् प्रातिपदिकात् पूर्वपदार्थतुल्येऽर्थे वर्तमानात् स्वार्थे छप्रत्ययो वा भवति । पितुरिवास्य स्थानं पितृस्था(नं?नः) पितृस्थानीयः। (पुत्रस्थानः) पुत्रस्थानीयः । पितृतुल्यः पुत्रतुल्य इत्यर्थः । पूर्वपदार्थतुल्य इति किम् । गवां स्थानम् ॥

विनयसमयाकस्मात्कथञ्चिदत्ययविशेषव्यवहारोपचारानुगादिभ्यष्ठक्[1] ॥ ३६ ॥

विनयादिभ्यः प्रातिपदिकेभ्यः स्वार्थे ठक्प्रत्ययो वा भवति । विनय एव वैनयिकः । सामयिकः । आकस्मिकः । कोन । (अ) कस्माद् (षष्ठीदान्त) इति कादेशाभावः । काथञ्चिकः । आत्ययिकः । वैशेषिकः । व्यावहारिकः । औपचारिकः । आनुगादिकः ॥

समो गत्यूहाचारोत्कर्षप्रदानेभ्यः ॥ ३७ ॥

---

१. 'नुराग' ख. पाठः.

कुमारक्रीडनकवाचिभ्यः स्वार्थे कन्प्रत्ययो भवति । कन्दुकः भ्रमरकः ॥

बह्वभिन्नोपपन्नसुकराद्यादेस्तरपः ॥ २६ ॥

बह्वाद्यादेस्तरबन्तात् प्रातिपदिकात् स्वार्थे कन्प्रत्ययो वा भवति । बहुतरमेव बहुतरकम् । अभिन्नतरकम् । उपपन्नतरकम् सुकरतरकम् ॥

ईयसश्च ॥ २७ ॥

ईयसन्तात् प्रातिपदिकात् स्वार्थे कन्प्रत्ययो वा भवति । श्रेयानेव श्रेयस्कः । ज्यायानेव ज्यायस्कः ॥

लोहितान्मणौ ॥ २८ ॥

लोहितशब्दान्मणावर्थे स्वार्थे कन्प्रत्ययो वा भवति । लोहित एव लोहितकः मणिः । मणाविति किम् । लोहिता गौः ॥

रक्ते ॥ २९ ॥

लोहितशब्दाल्लाक्षादिना रक्तेऽर्थे वर्तमानात् स्वार्थे कन्प्रत्ययो भवति । लोहित एव लोहितकः पटः । प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणात् लोहि(त१ति)का शाटी । लोहि(त१ति)का पटी ॥

अनित्यवर्णे च ॥ ३० ॥

अनित्यवर्णे चार्थे वर्तमानाल्लोहितशब्दात् स्वार्थे कन्प्रत्ययो वा भवति । लोहितकः कोपेन । लोहितकः पीडनेन । लिङ्गविशिष्टग्रहणाल्लोहितिका कोपेन । लोहितिका पीडनेन । अनित्य इति किम् । लोहितः लोहिता । (लोहितिका कोपेन ?)॥

कालात् ॥ ३१ ॥

कालशब्दात् कज्जलादिना रक्तेऽनित्यवर्णे चार्थे वर्तमानात् स्वार्थे कन्प्रत्ययो(वा)भवति । कालकः प : । कालकं मुख, वैलक्ष्येण कालम् ॥

क्तादनात्यन्तिके ॥ ३२ ॥

क्तप्रत्ययान्तादनात्यन्तिकविशिष्टेऽर्थे वर्तमानात् स्वार्थे कन्प्रत्ययो वा भवति । नात्यन्तं भिन्नः भिन्नकः, छिन्नकः । अनात्यन्तिक इति किम् । भिन्नः । छिन्नः ॥

न सामिनेमार्धयोगे ॥ ३३ ॥

साम्यादियोगे 'क्तादनात्यन्तिके' इति कन्प्रत्ययो न भवति । सामिकृतम् । नेमकृतम् । अर्धकृतम् । सामिभिन्नम् । नेमभिन्नम् । अर्धभिन्नम् इति । उपपदात् प्रतीतेऽप्यनात्यन्तिकत्वे स्वार्थिकत्वात् कन् स्यादेवेति प्रतिषेधः ॥

जात्यन्ताच्छ बन्धुनि ॥ ३४ ॥

बध्यन्ते समवयन्ति जात्यादयोऽर्था इति बन्धु द्रव्यं, तस्मिन् वर्तमानात् जात्यन्तात् प्रातिपदिकात् स्वार्थे छप्रत्ययो भवति । ब्राह्मणजातीयः । क्षत्रियजातीयः । बन्धुनीति किम् । शोभना ब्राह्मणजातिः । ब्राह्मणादिप्रकरणार्थेन जाती(या?येन) जातिशब्देन च बहुव्रीहिणा विकल्पे सिद्धे छविधानं नित्यार्थम् । तेन बन्धुनि ब्राह्मणजातिरिति न भवति ॥

स्थानान्तात् पूर्वपदार्थतुल्ये ॥ ३५ ॥

स्थानशब्दान्तात् प्रातिपदिकात् पूर्वपदार्थतुल्येऽर्थे वर्तमानात् स्वार्थे छप्रत्ययो वा भवति । पितुरिवास्य स्थानं पितृस्था(नं?नः) पितृस्थानीयः । (पुत्रस्थानः) पुत्रस्थानीयः । पितृतुल्यः पुत्रतुल्य इत्यर्थः । पूर्वपदार्थतुल्य इति किम् । गवां स्थानम् ॥

विनयसमयाकस्मात्कथञ्चिदत्ययविशेषव्यवहारोपचारानुगादिभ्यष्ठक्[1] ॥ ३६ ॥

विनयादिभ्यः प्रातिपदिकेभ्यः स्वार्थे ठक्प्रत्ययो वा भवति । विनय एव वैनयिकः । सामयिकः । आकस्मिकः । को न । (अ) कस्माद् (षष्ठ?दा-न्त) इति कादेशाभावः । काथञ्चित्कः । आत्ययिकः । वैशेषिकः । व्यावहारिकः । औपचारिकः । आनुगादिकः ॥

समो गत्यूहाचारोत्कर्षप्रदानेभ्यः ॥ ३७ ॥

---

१. 'नुराग' ख. पाठः.

समः परे ये गत्यादयस्तस्मात् प्रातिपदिकात् ठक्प्रत्ययो भवति । सङ्गतिरेव साङ्गतिकम् । सामूहिकम् । सामाचारिकम् । सामुत्कर्षिकम् । साम्प्रदानिकम् ॥

उपायाद्ध्रस्वश्च ॥ ३८ ॥

उपायशब्दात् स्वार्थे ठक्प्रत्ययो ह्रस्वश्चैतत्सम्बन्धिनो दीर्घस्य भवति । उपाय एवौपयिकम् ॥

वाचः सन्देशे ॥ ३९ ॥

वाक्छब्दात् सन्देशे वर्तमानात् स्वार्थे ठक्प्रत्ययो भवति । सन्देशरूपा वाक्, वाचिकम् । सन्देश इति किम् । मधुरा (वाक्) देवदत्तस्य ॥

तद्युक्तात् कर्मणोऽण् ॥ ४० ॥

तेन वाचिकेन वृद्धसन्देशेन युक्तेऽर्थे वर्तमानात् कर्मशब्दात् स्वार्थेऽण्प्रत्ययो वा भवति । कर्मैव, कार्मणम् । यद्वाचिकं श्रुत्वा वशीकरणादिकमनुष्ठीयते तदेवमुच्यते ॥

ओषधेरजातौ ॥ ४१ ॥

ओषधिशब्दादजातिवृत्तेः स्वार्थेऽण्प्रत्ययो वा भवति । औषधं ददाति । औषधं पिबति । अजाताविति किम् । ओषधयः क्षेत्ररूढा भवन्ति ॥

णजितुणभ्यां नित्यम् ॥ ४२ ॥

णजन्तादितुणन्ताच्च स्वार्थेऽण्प्रत्ययो नित्यं भवति । व्यावक्रोशी । व्याव(च)र्ची । सांराविणम् । सांकूटिनम् । कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमिति सगतिकेभ्योऽप्यण् इति तदादेर्वृद्धिर्भवति ॥

प्रज्ञवणिगुशिक्प्रत्यक्षदेवताविद्यामनश्चक्षुःश्रोत्रशत्रुयोधचोरेभ्यो वा ॥ ४३ ॥

प्रज्ञादिभ्यः स्वार्थेऽण्प्रत्ययो वा भवति । प्रज्ञ एव प्राज्ञः । वणिगेव वाणिजः । उशिगेवौशिगः । प्रत्यक्षमेव प्रात्यक्षम् । देवतैव दैवतम् । विद्यैव

वैद्यम् । मन एव मानसम् । चक्षुरेव चाक्षुषम् । श्रोत्रमेव श्रौत्रम् । शत्रुरेव शात्रवः । योध एव यौधः । चोर एव चौरः ॥

षोडद्विदज्जुहृच्चिकीर्षद्वसुमरुत्सत्त्वद्दशार्हाशनिबन्धुवयःक्रुङ्भ्यः ॥ ४४ ॥

षोडदादिभ्यः प्रातिपदिकेभ्यः स्वार्थेऽण्प्रत्ययो वा भवति । षोडदेव षौडतः । विद्वन्नेव वैदतः । जुहृदेव जौह्वतः । चिकीर्षदेव चैकीर्षतः । वसुरेव वासवः । मरुदेव मारुतः । सत्त्वानेव सात्त्वतः । दशार्ह एव दाशार्हः । अशनिरेवाशनः । बन्धुरेव बान्धवः । वय एव वायसः । क्रुङेव क्रौञ्च इति ॥

रक्षःपिशाचासुराग्रहायणाग्रयणसाधारणविकृतव्याकृतसन्तपनद्वितानीच्छन्दोनामादिभ्यः ॥ ४५ ॥

रक्षःप्रभृतिभ्यश्छन्दोनामभ्यः प्रातिपदिकेभ्यः स्वार्थे (कन्?अण्) प्रत्ययो वा भवति। रक्ष एव राक्षसः। एवं पैशाचः। (आसुरः।) आग्रहायणः। आग्रयणः। साधारणः। वैकृतः। वैयाकृतः। सान्तपनम्। द्वैतम्। आग्नीधः छन्दोनामभ्यः खल्वपि — गायत्र्येव गायत्रम्। औष्णिहम। आनुष्टुभम्। बार्हतम्। पाङ्क्तम्। त्रैष्टुभम्। जागतम्। आदिग्रहणाच्चाण्डालादयो भवन्ति ॥

कृष्णान्मृगे ॥ ४६ ॥

कृष्णशब्दान्मृगार्थवृत्तेः स्वार्थे (कन्?अण्) प्रत्ययो वा भवति । कृष्ण एव कार्ष्णः । मृग इति किम । कृष्णा गौः ॥

विसारिणो मत्स्ये ॥ ४७ ॥

विसारिन्शब्दान्मत्स्यार्थवृत्तेः स्वार्थेऽण्प्रत्ययो भवति । वैसामत्स्यः । मत्स्य इति किम् । विसारी देवदत्तः ॥

मृदस्तिकन् ॥ ४८ ॥

मृच्छब्दात् स्वार्थे तिकन्प्रत्ययो वा भवति । मृदेव मृत्तिका ॥

सस्नौ प्रशंसायाम् ॥ ४९ ॥

मृच्छब्दात् प्रशंसोपाधिकेऽर्थे वर्तमानात् सस्नौ प्रत्ययौ वा भवतः। प्रशस्ता मृत्, मृत्सा। मृत्स्ना। केचिद्रूप(व)मपीच्छन्ति। मृद्रूपा। प्रशंसायामिति किम्। मृत्तिका॥

मनोऽहंभ्यां कारः ॥ ५० ॥

मनोऽहंशब्दाभ्यां स्वार्थे कारप्रत्ययो वा भवति। मन एव मनस्कारः। अहमेवाहङ्कारः॥

वर्णाव्ययेभ्यः स्वरूपे ॥ ५१ ॥

वर्णेभ्योऽव्ययेभ्यः स्वरूपार्थवृत्तिभ्यः स्वार्थे कारप्रत्ययो भवति। अकारः। इकारः। उकारः। ककारः। खकारः। ककारादिष्वकार उच्चारणार्थः। अव्ययेभ्यः खल्वपि — हुंकारः। वषट्कारः। स्वाहाकारः। स्वधाकारः। हन्तकारः। नमस्कारः। चकारः। इ(दि?ति)कारः। एवकारः। एवंकारः। फूत्कारः। शूत्कारः। सीत्कार इति। ननु च यथा हुङ्कृति फूत्कृति सीत्कृतमिति भवन्ति, तथा कारशब्देन घञन्तेन समासे ......... हुङ्कारादयो भविष्यन्ति। सत्यमेतत्। किन्तु हुङ्कारमुच्चारयति। वषट्कारमभिधत्ते। हुङ्कारं करोति सीत्कारं करोति इत्यादयो न सिध्यन्ति। स्वरूप इति किम्। अः विष्णुः। इः कामः। कः ब्रह्मा। खम् आकाशम्। हुं ब्रह्म। वषडिन्द्राय। स्वाहाग्नये। स्वधा पितृभ्य इत्यर्थपरतायां मा भूत्॥

रादिफः ॥ ५२ ॥

(र)शब्दाद्वर्णस्वरूपवृत्तेः स्वार्थे इफप्रत्ययो भवति। कारस्यापवादः। र एव रेफः॥

नामरूपाभ्यां धेयः ॥ ५३ ॥

नामरूपशब्दाभ्यां स्वार्थे धेयप्रत्ययो वा भवति। नामैव नामधेयम्। रूपमेव रूपधेयम्॥

१. 'त्स्ना प्र' ख. ग. पाठः.

भागाद्यच्च ॥ ५४ ॥

भागशब्दात् स्वार्थे यत्, चकाराद् धेयप्रत्ययश्च वा भवति । भागा एव भाग्यानि । भागधेयानि ॥

सूरमर्त[1]क्षेमयविष्ठेभ्य[2]: ॥ ५५ ॥

सूरादिभ्यः स्वार्थे यत्प्रत्ययो वा भवति । सूर एव, सूर्यः । मर्त्यः । क्षेम्यः । यविष्ठ्यः । 'राजसूयसूर्यौ यज्ञदेवतयोः' (१-३-१६०) इति सिद्धे स्वरार्थं वचनम् ॥

नवात् ॥ ५६ ॥

नवशब्दात् स्वार्थे यत्प्रत्ययो वा भवति । नवमेव, नव्यम् ॥

त्नप्तनखा नू च ॥ ५७ ॥

नवशब्दात् स्वार्थे त्नप्तनखाः प्रत्ययाः नू चास्यादेशो भवति । नूत्नम् । नूतनम् । नवीनम् ॥

प्रात् पुराणे नश्च ॥ ५८ ॥

प्रशब्दात् पुराणार्थवृत्तेः नप्रत्ययश्चकारात् त्नप्तनखाश्च प्रत्यया भवन्ति । प्रणम् । प्रत्नम् । प्रतनम् । प्रीणम् ॥

देवात् तल् ॥ ५९ ॥

देवशब्दात् स्वार्थे तल्प्रत्ययो वा भवति । देव एव देवता ॥

देवतान्तात्तदर्थे यत् ॥ ६० ॥

देवताशब्दान्तात् प्रातिपदिकात् सामर्थ्यादेव चतुर्थीसमर्थात् तदर्थेऽभिधेये यत्प्रत्ययो भवति । अग्निदेवतायै इदमग्निदेवत्यम् । पितृदेवत्यम् ॥

पादार्घाभ्यां च ॥ ६१ ॥

पादार्घशब्दाभ्यां चतुर्थीसमर्थाभ्यां तदर्थे अभिधेये यत्प्रत्ययो भवति वा । पादाभ्यामिदं पाद्यमुदकम् । अर्घार्थमिदमर्घ्यं दधि ॥

---

१. 'आ' ख. ग. पाठः २. 'भ्यः । त्नप्त' ख. ग. पाठः.

अतिथेर्न्यः ॥ ६२ ॥

अतिथिशब्दात् चतुर्थीसमर्थात् तदर्थेऽभिधेये ञ्यप्रत्ययो भवति । अतिथय इदम् आतिथ्यम् ॥

विशो जातौ ॥ ६३ ॥

विशित्येतस्माज्जातौ वर्तमानात् ञ्यप्रत्ययो वा भवति । विश एव वैश्यः । जाताविति किम् । विड्वाचिनः प्रजावाचिनश्च मा भूत् । विण्मूत्रम् । विशां पतिरिति ॥

अभूततद्भावे कृभ्वस्तियोगे विकारात् च्विः ॥ ६४ ॥

अवस्थावतोऽवस्थान्तरेणाभूतस्य तदात्मना सम्पत्तिरभूततद्भावः । तस्मिन् गम्यमाने प्रकृतौ विकारावस्थां प्राप्नुवत्यां प्रकृतिविकारभेदविवक्षायां विकारवाचिनः शब्दात् प्रकृतौ वर्तमानात् कृभ्वस्तियोगे सति स्वार्थे च्विप्रत्ययो भवति । (अ)शुक्लं शुक्लं सम्पद्यमानं विक्रियते तत् करोति भवान् । (शुक्लीकरोति ।) (यदा) भवतिना अस्तिना वा योगस्तदा प्रकृतिरेव विकारात्मतामापद्यमाना विकारभेदेन विवक्ष्यमाणा भवनक्रियायां कर्त्री भवति । अशुक्लः शुक्लः सम्पद्यते शुक्लीभवति । शुक्लीस्यात् । एवमसमीपः समीपः सम्पद्यते समीपीकरोति । समीपीभवति । समीपीस्यात् । एवं काष्ठं च भस्मीकरोति, भस्मीभवति, भस्मीस्यात् । दुग्धं दधीकरोति । दधीभवति । दधीस्यात् । सुवर्णं कुण्डलीकरोति । कुण्डलीभवति । कुण्डलीस्यात् । मृदं घटीकरोति । मृद् घटीभवति । घटीस्यात् । एवं ब्राह्मणाः सङ्घः सम्पद्यन्ते सङ्घीभवन्ति ब्राह्मणाः । पटीभवन्ति तन्तवः । अत्वं त्वं सम्पद्यते त्वद्भवति । अनहमहं सम्पद्यते मद्भवति । अमहान् महान् सम्पन्नः महद्भूतश्चन्द्रमा इति । सर्वत्र च्विप्रत्ययान्तेन ,

"पूर्वावस्थामविजहत् संस्पृशन् धर्ममुत्तरम् ।
सम्मूर्छित इवार्थात्मा जायते नोऽभिधीयते ॥"

अभूततद्भाव इति किम् । शुक्लं करोति । घटो भवति । (तद्दध्य? दध्य)स्ति । कृभ्वस्तियोग इति किम् । अशुक्लः शुक्लो जायते । अघटो

घटः सम्पद्यते। अघटो घटोऽभिनिर्वर्त्तते। विकारादिति किम् । काष्ठादिभ्यः प्रकृतिशब्देभ्यो मा भूत् ॥

अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च ॥ ६१॥

अरुःप्रभृतीनां विकारवाचिनामभूततद्भावे कृभ्वस्तियोगे च्विप्रत्ययः सलोपश्च भवति । प्रत्ययः पूर्वेणैव सिद्धः, सलोपार्थं वचनमिति तदन्तेभ्योऽपि भवति । अनरुररुः करोति, अरूकरोति । अरूभवति । अरूस्यात् । उन्मनीकरोति। उन्मनीभवति। उन्मनीस्यात् । उच्चक्षूकरोति। उच्चक्षूभवति। उच्चक्षूस्यात् । विचेतीकरोति । विचेतीभवति । विचेतीस्यात् । विरहीकरोति । विरहीभवति । विरहीस्यात् ।) विरजीकरोति । विरजीभवति । विरजीस्यात् ॥

अभिविधौ सम्पदा च सातिर्वा । ६६ ॥

एकदेशेन सर्वात्मना वा अभिव्याप्तिरभिविधिः । तस्मिन् गम्यमाने विकारवाचिनः प्रातिपदिकादभूततद्भावे सम्पदा चकारात् कृभ्वस्तिभिश्च योगे सातिप्रत्ययो वा भवति । अनग्निरग्निः सम्पद्यते अग्निसात्सम्पद्यते शस्त्रम् । अग्निसात्करोति । अग्निसाद्भवति । अग्निसात्स्यात् । अग्नीकरोति अग्नीभवति अग्नीस्यात् । शिलासात् सम्पद्यते जलम् । शिलासात् करोति । शिलासाद् भवति । शिलासात् स्यात् । शिलीकरोति । शिलीभवति । शिलीस्यात् । एवं भस्मसात्सम्पद्यते काष्ठम् । भस्मसात् करोति । भस्मसाद् भवति । भस्मसात् स्यात् । भस्मीकरोति । भस्मीभवति । भस्मीस्यात् । उदकसात् सम्पद्यते लवणम् । उदकसात् करोति । उदकसाद् भवति । उदकसात् स्याद् । उदकीकरोति । उदकीभवति । उदकीस्यात् । अभिविधाविति किम् । शुक्लीकरोति । पुनर्वावचनं च्विसमावेशार्थम् ॥

तदधीने ॥ ६७ ॥

तदधीनं तदायत्तं तत्स्वामिकमित्यर्थः । तस्मिन्नभिधेये स्वामिवाचिनः प्रातिपदिकात् कृभ्वस्तिभिः सम्पदा च योगे सातिप्रत्ययो भवति । राजाधीनं करोति, राजसात्करोति । राजाधीनो भवति, राजसाद्भवति । राजसात्स्यात् । राजसात्सम्पद्यते । एवं ब्राह्मणसात्करोति । ब्राह्मणसाद्भवति । ब्राह्मणसात्स्यात् । ब्राह्मणसात्सम्पद्यते ॥

देये त्रा च ॥ ६८ ॥

तदधीने देयेऽभिधेये स्वामिविशेषवाचिनः प्रातिपदिकात् कृभ्वस्तिभिः सम्पदा च योगे त्रा, चकारात् सातिश्च प्रत्ययो भवति। देवाधीनं देयं करोति देवत्राकरोति। देवत्राभवति। देवत्रास्यात्। देवत्रासम्पद्यते। देवसात्करोति। देवसाद्भवति। देवसात्स्यात्। देवसात्सम्पद्यते॥

देवमनुष्यमर्त्यपुरुषपुरुबहुभ्यो द्वितीयासप्तम्यन्तेभ्यो बहुलम्[1] ॥ ६९ ॥

देवादिभ्यः प्रातिपदिकेभ्यो द्वितीयान्तेभ्यः सप्तम्यन्तेभ्यश्च कृभ्वस्तिभिर्योगे स्वार्थे त्राप्रत्ययो बहुलं भवति। देवान् करोति देवत्राकरोति। देवेषु भवति देवत्राभवति। देवेषु स्यात् देवत्रास्यात्। एवं मनुष्यं करोति मनुष्यत्राकरोति। मनुष्यत्राभवति। मनुष्यत्रास्यात्। मर्त्यत्राकरोति मर्त्यत्राभवति मर्त्यत्रास्यात्। पुरुषत्राकरोति पुरुषत्राभवति पुरुषत्रास्यात्। पुरुत्राकरोति पुरुत्राभवति पुरुत्रास्यात्। बहुत्राकरोति बहुत्राभवति बहुत्रास्यात्। बहुलग्रहणादन्ययोगेऽपि भवति देवान् गच्छति देवत्रागच्छति। देवेषु वसति देवत्रावसति। एवं मनुष्यत्रागच्छति। मनुष्यत्रावसति। मर्त्यत्रागच्छति। मर्त्यत्रावसति। पुरुषत्रागच्छति पुरुषत्रावसति। पुरुत्रागच्छति पुरुत्रावसति। बहुत्रागच्छति बहुत्रावसति॥

अव्यक्तानुकरणादनेकाचोऽनितौ डाच् ॥ ७० ॥

यस्मिन् ध्वनावकारादयो वर्णा विशेषरूपेण नाभिव्यज्यन्ते सोऽव्यक्तः तस्यानुकरणम् अव्यक्तानुकरणम्। तस्मादनेकाचो डाच् प्रत्ययो भवति। पटपटाकरोति पटपटाभवति पटपटास्यात्। दमदमाकरोति दमदमाभवति दमदमास्यात्। अव्यक्तानुकरणादिति किम्। दृषत्करोति। अनेकाजिति किम्। श्रत्करोति। अनिताविति किम्। पटिति करोति। चकारो 'नित्यं डाच्पूर्वस्ये'ति विशेषणार्थम्॥

कृञो द्वितीयतृतीयशम्बबीजात् कृषौ ॥ ७१ ॥

[1] भ्योर्बहु क. पाठः.

द्वितीयादिभ्यः करोतिना योगे कृषावभिधेयायां डाच्प्रत्ययो भवति । क्षेत्रस्य द्वितीयां कृषिं करोति, क्षेत्रं द्वितीयाकरोति । तृतीयाकरोति । शम्बाकरोति । अनुलोमकृष्टं पुनस्तिर्यक् कृषतीत्यर्थः । बीजाकरोति । बीजेन सह कृ(ष्य?ष)तीत्यर्थः । कृषाविति किम् । द्वितीयं पटं करोति । कृग्ग्रहणं भ्वस्तिनिवृत्त्यर्थम् ॥

सङ्ख्यादेर्गुणात् ॥ ७२ ॥

गुणशब्दात् सङ्ख्यापूर्वात् करोतिना योगे कृषावभिधेयायां डाच्प्रत्ययो भवति । द्विगुणं कर्षणं करोति क्षेत्रस्य, द्विगुणाकरोति क्षेत्रम् । त्रिगुणाकरोति । कृषाविति किम् । द्विगु(णं ? णां) रज्जुं करोति ॥

समयाद्यापनायाम् ॥ ७३ ॥

कालहरणे गम्यमाने समयशब्दात् करोतिना योगे डाच्प्रत्ययो भवति । समयाकरोति । कालक्षेपं करोतीत्यर्थः । यापनायामिति किम् । समयं करोति ॥

सपत्रनिष्पत्रादतिव्यथने ॥ ७४ ॥

सपत्रनिष्पत्राभ्यां करोतिना योगे अतिव्यथने गम्यमाने डाच्प्रत्ययो भवति । सपत्राकरोति मृगम् । सपत्रं शरमस्य शरीरे प्रवेशयतीत्यर्थः । निष्पत्राकरोति । शरपत्राणि [illegible] पार्श्वेन निष्पातयतीत्यर्थः । अतिव्यथन इति किम् । सपत्रं शरं करोति । निष्पत्रं शरं करोति ॥

निष्कुलान्निष्कोषणे ॥ ७५ ॥

निष्कुलशब्दात् करोतिना योगे निष्कोषणे डाच्प्रत्ययो भवति । अन्तरवयवानां बहिर्निष्काशनं निष्कोषणम् । निष्कुलाकरोति फलम् । निष्कोषण इति किम् । निष्कुलं करोति शत्रुम् ॥

प्रियसुखाभ्यामानुकूल्ये ॥ ७६ ॥

प्रियसुखशब्दाभ्यामानुकूल्ये गम्यमाने करोतिना योगे डाच्प्रत्ययो भवति । प्रियाकरोति । सुखाकरोति । स्वाम्यादेरानुकूल्यमाचरतीत्यर्थः । आनुकूल्य इति किम् । प्रियं करोति [illegible] । सुखं करोत्यौषधपानम् ॥

दुःखात् प्रातिकूल्ये ॥ ७७ ॥

दुःखशब्दात् प्रातिकूल्ये गम्यमाने करोतिना योगे डाच्प्रत्ययो भवति। दुःखाकरोति । अनभिमतमाचरतीत्यर्थः । प्रातिकूल्य इति किम्। दुःखं करोति रोगः ॥

शूलात् पाके ॥ ७८ ॥

शूलशब्दात् पाके गम्यमाने करोतिना योगे डाच्प्रत्ययो भवति। शूले पचति, शू(ला) करोति मांसम् । पाक इति किम् । शूलं करोति कदन्नम् ॥

सत्यादशपथे ॥ ७९ ॥

सत्यशब्दात् शपथादन्यत्र वर्तमानात् करोतिना योगे डाच्प्रत्ययो भवति । सत्याकरोति वणिग् भाण्डम् । मयावश्यमेतत् क्रेतव्यमिति विक्रेतारं प्रत्याययति । अशपथ इति किम् । सत्यं करोति ब्राह्मणः ॥

मद्रभद्राभ्यां वपने ॥ ८० ॥

मद्रभद्रशब्दाभ्यां वपने गम्यमाने करोतिना योगे डाच्प्रत्ययो भवति। मद्राकरोति, भद्राकरोति नापितः। शिशोर्मङ्गल्यं केशच्छेदनं करोतीत्यर्थः । वपन इति किम् । मद्रं करोति ॥

समासान्ताः ॥ ८१ ॥

अधिकारोऽयमापादपरिसमाप्तेः । अतःपरं ये प्रत्ययास्ते समासस्यान्ता अवयवा एकदेशा भवन्ति, तद्ग्रहणेन गृह्यन्ते । प्रयोजनमव्ययीभावादिसंज्ञा । अधिराजम्। उपराजम् । 'नाव्ययीभावादत' इत्येते विषयो भवन्ति । (विधु? द्विपु)री । त्रिपुरी । 'द्विगोरि'ति ङीब् भवति । वाग्दृषदिनी स्रक्त्वचिनी । 'द्वन्द्वोपतापे'त्यादिना इनिर्भवति । विधुरः । प्रधुरः । 'तत्पुरुषे तुल्यार्थे'त्यादिना पूर्वपदप्रकृतिस्वरो भवति । उच्चैर्धुरः । नीचैर्धुरः । इति । 'बहुव्रीहौ प्रकृत्या पूर्वमि'त्येतद् भवति ॥

न किमः क्षेपे ॥ ८२ ॥

यान् शब्दान् राजादीनुपादाय टजादयः समासान्ता विधास्यन्ते ते यदि क्षेपवाचिनः किंशब्दात् परे भवन्ति (तदा ते न भवन्ति)। क्षेपो निन्दा। कुत्सितो राजा किंराजा, यो न रक्षति। किंसखा, योऽभिद्रुह्यति। किंगौः, यो न वहति। क्षेप इति किम्। केषां राजा, किंराजः। किंसखः। किंगवः॥

पूजास्वतिभ्यां प्राग् बहुव्रीहेः॥ ८३॥

पूजार्थौ यौ स्वतीशब्दौ ताभ्यां परो यः समासान्तहेतुः तस्मिन् बहुव्रीहिप्रसङ्गशब्दनात् प्राग् यः समासान्तविधिः स न भवति। सुराजा। अतिराजा। सुसखा। अतिसखा। सुगौः। अतिगौः (प्र?)पूजाग्रहणं किम्। अतिक्रान्तो राजानमतिराजः। अतिसखः। अतिगवः। स्वतिभ्यामिति किम्। परमराजः। परमसखः। परमगवः। प्राग् बहुव्रीहेरिति किम्। सुसक्थः, अतिसक्थः। स्वक्षः॥

नञस्तत्पुरुषे॥ ८४॥

नञः परो यः समासान्तहेतुस्तस्मात् तत्पुरुषसमासे समासान्तो न भवति। अराजा। असखा। अगौः। तत्पुरुष इति किम्। अनृचो माणवकः। अधुरं शकटम्॥

पथो वा॥ ८५॥

नञः परो यः पथिन्शब्दस्ततस्तत्पुरुषसमासे समासान्तो वा भवति। न पन्थाः, अपन्थाः। अपथम्। तत्पुरुष इति किम्। अपथोऽयमुद्देशः॥

पुरेपूपथिभ्योऽच्॥ ८६॥

पुराद्यन्तात् समासादच्प्रत्ययो भवति समासान्तः। द्विपुरी त्रिपुरी। द्वीपं, समीपम्। वेदपथः कृष्णलपथः। अकारान्तेन पुरशब्देन सिद्धे रेफान्तस्य पूर्शब्दस्य समासान्ताश्रवणं माभूदिति वचनम्॥

धुरोऽनक्षस्य॥ ८७॥

धुरन्तात् समासादच्प्रत्ययः समासान्तो भवति, सा चेद् धूरक्ष-

१. 'रपथि' इति ख. ग. पाठः।

सम्बन्धिनी न भवति । राज्यधुरा । रणधुरा । द्विधुरी । त्रिधुरी । अनक्षस्येति किम् । अक्षधूः । दृढधूरक्षः ॥

ऋचः ॥ ८८ ॥

ऋक्छब्दान्तात् समासादप्रत्ययः समासान्तो भवति । समर्चं सूक्तम् । अर्धर्चम् ॥

नञ्बहुभ्यां माणवचरणयोः ॥ ८९ ॥

नञ्बहुभ्यां परो य ऋक्छब्दस्तदन्तात् समासाद्यथासंख्यं माणवचरणयोरभिधेययोरच् समासान्तो भवति । अनृचो माणवकः । बह्वृचश्चरणः । माणवचरणयोरिति किम् । अनृक् साम । बह्वृक् सूक्तम् ॥

प्रत्यन्ववेभ्यः सामलोमभ्याम् ॥ ९० ॥

प्रत्यन्ववेभ्यः परौ यौ सामलोमशब्दौ तदन्तात् समासाद् अच् प्रत्ययो भवति समासान्तः । प्रतिसामम् । अनुसामम् । अवसामम् । प्रतिलोमम् । अनुलोमम् । अवलोमम् ॥

अक्ष्णोऽचक्षुषः ॥ ९१ ॥

अचक्षुर्वाची योऽक्षिशब्दस्तदन्तात् समासादच्प्रत्ययो भवति । लवणाक्षम् । कवराक्षम् । पुष्कराक्षम् । अचक्षुष इति किम् । ब्राह्मणाक्षि ॥

स्त्रीपुंसधेन्वनडुहर्ग्यजुषर्क्सामवाङ्मनसाक्षिभ्रुवदार-गवोर्वष्ठीवपदष्ठीवाहोरात्ररात्रिन्दिवनक्तन्दिवाहर्दिवसरजसपु-रुषायुषद्व्यायुषत्र्यायुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः ॥

स्त्रीपुंसादयः समासा अच्प्रत्ययान्ताः साधवो भवन्ति । तत्राद्या-स्त्रयोदश द्वन्द्वाः । स्त्री च पुमांश्च स्त्रीपुंसौ । तत्पुरुषे न भवति । स्त्रियाः पुमान् । धेनुश्चानड्वांश्च धेन्वनडुहौ । इह न भवति । धेनोरनड्वान् । ऋक् च यजुश्च ऋग्यजुषम् । ऋक् च साम च ऋक्सामे । वाक् च मनश्च वाङ्मनसे । अक्षिणी च भ्रुवौ च अक्षिभ्रुवम् । दाराश्च गावश्च दारगवम् । ऊरू चाष्ठीवन्तौ च ऊर्वष्ठीवम् । (पादौ च अष्ठीवन्तौ च

पदष्ठीवम् ।) निपातनाट्टिलोपः पदादेशश्च । अहश्च रात्रिश्चाहोरात्रः । रात्रिश्च दिवा च रात्रिन्दिवम् । नक्तञ्च दिवा च नक्तन्दिवम् । निपातनात् पूर्वपदस्य मुमागमः । अहश्च दिवा चाहर्दिवम् । निपातनात् पर्याययोरपि वीप्सार्थे द्वन्द्वः । अहरहरित्यर्थः । [illegible] वाहश्शब्दः । सरजसमिति साकल्येऽव्ययीभावः । सरजसमभ्यवहरति । बहुव्रीहिर्वा । 'सरजसमपहाय केतकीनां प्रस(पंऽव)म्' इति । पुरुषस्यायुः पुरुषायुषमिति षष्ठीतत्पुरुषः । द्वे आयुषी समाहृते, त्रीण्यायूंषि समाहृतानि, द्व्यायुषं त्र्यायुषमिति द्विगुः । जातः उक्षा जातोक्षः । वृद्धः उक्षा वृद्धोक्षः । महानुक्षा महोक्षः । इति त्रयः कर्मधारयाः । बहुव्रीहौ न भवति । जातोक्षा महोक्षा वृद्धोक्षा ब्राह्मणः । शुनः समीपे उपशुनमित्यव्ययीभावः । निपातना(लोऽट्टिलो)पाभावः सम्प्रसारणं च । गोष्ठे श्वा गोष्ठश्व इति तत्पुरुषः । समासनियमो निपातनसामर्थ्याल्लभ्यते ॥

ब्रह्महस्तिराजपल्येभ्यो वर्चसः ॥ ९३ ॥

ब्रह्मादिभ्यः परो यो वर्चश्शब्दस्तदन्तात् समासादच्प्रत्ययो भवति । ब्रह्मवर्चसम् । हस्तिवर्चसम् । राजवर्चसम् । पल्यवर्चसम् । पल्यमिति हस्तिविषोच्यते ॥

अवसमन्धेभ्यस्तमसः ॥ ९४ ॥

अवादिभ्यः परो यस्तमश्शब्दस्तदन्तात् समासादच्प्रत्ययो भवति । अवतमसम् । सन्तमसम् । अन्धतमसम् ॥

श्वसो वसीयसः ॥ ९५ ॥

श्वसः परो यो वसीयश्शब्दस्तदन्तात् समासादच्प्रत्ययो भवति । श्वोवसीयसं, कल्याणम् ॥

निसश्च श्रेयसः ॥ ९६ ॥

निसश्चकारात् श्वसश्च परो यः श्रेयश्शब्दस्तदन्तात् समासादच्प्रत्ययो भवति । निश्श्रेयसं, निर्वाणम् । श्वःश्रेयसं, कल्याणम् ॥

अन्ववतप्तेभ्यो रहसः ॥ ९७ ॥

अन्वादिभ्यः परो यो रहश्शब्दस्तदन्तात् समासादच्प्रत्ययो भवति। अनुरहसम्। अवरहसम्। तप्तरहसम्॥

प्रतेरुरसः सप्तमीस्थात्॥ ९८॥

प्रतिशब्दात् परो य उरश्शब्दः सप्तम्यर्थवृत्तिस्तदन्तात् समासादच्प्रत्ययो भवति। उरसि, प्रत्युरसम्। विभक्त्यर्थेऽव्ययीभावः। सप्तमीस्थादिति किम्। प्रतिगतमुरः, प्रत्युरः॥

अनुगवमायामे॥ ९९॥

अनुगवमित्यच्प्रत्ययान्तो निपात्यते आयामे गम्यमाने। अनु गामायतमनुगवं शकटः। 'अनुः सामीप्यायामयोरि'त्यव्ययीभावः। आयाम इति किम्। गवां पश्चाद्, अनुगु॥

द्विस्तावा त्रिस्तावा वेदिः॥ १००॥

द्विस्तावती त्रिस्तावतीत्यस्मिन्नर्थे द्विस्तावा त्रिस्तावेत्यच्प्रत्ययस्तीशब्दलोपश्च निपात्यते वेदिश्चेत् सा भवति। द्विस्तावा त्रिस्तावा वेदिः। यावती प्रकृतौ वेदिस्तावती द्विगुणा त्रिगुणा वा कस्यांचिद्विकृतौ भवति। वेदिरिति किम्। द्विस्तावती रज्जुः॥

उपसर्गादध्वनः॥ १०१॥

उपसर्गात् परो योऽध्वन्शब्दस्तदन्तात् समासादच्प्रत्ययो भवति। प्रगतोऽध्वानं प्राध्वो रथः। प्राध्वं शकटम्। अत्यध्वं निरध्वम्। उपसर्गादिति किम्। परमाध्वा॥

पाण्डूदक्कृष्णेभ्यो भूमेः॥ १०२॥

पाण्ड्वादिभ्यः परो यो भूमिशब्दस्तदन्तात् समासादच्प्रत्ययो भवति। पाण्डुभूमः। उदग्भूमः। कृष्णभूमः॥

सङ्ख्याया नदीगोदावरीभ्याञ्च॥ १०३॥

सङ्ख्याशब्देभ्यः परौ यौ नदीगोदावरीशब्दौ चकाराद् भूमिशब्दश्च तदन्तात् समासादच्प्रत्ययो भवति। पञ्चनदम्। सप्तगोदावरम्। द्विभूमः प्रासादः। दशभूमकं सूत्रम्॥

अव्ययाच्चाङ्गुलेस्तत्पुरुषे॥ १०४॥

अव्ययात्, चकारात् सङ्ख्यायाश्च परो योऽङ्गुलिशब्दस्तदन्तात् तत्पुरुषेऽच्प्रत्ययो भवति समासान्तः । निर्गतमङ्गुलिभ्यो, निरङ्गुलम् । अत्यङ्गुलम् । द्वे अङ्गुली समाहृते द्व्यङ्गुलम् । त्र्यङ्गुलम् । चतुरङ्गुलम् । तत्पुरुष इति किम् । उपाङ्गुलिः । पञ्चाङ्गुलिर्हस्तः । कथं द्व्यङ्गुलं काष्ठम् । द्वे अङ्गुली प्रमाणमस्येत्यर्थे मात्रडादेर्लुकि कृते तद्धितार्थे द्विगुस्तत्पुरुषोऽन्यपदार्थे वर्तते, नत्वयं बहुव्रीहिः । अङ्गुलशब्दो वा अकारान्तो अङ्गुल(न्तं ? न्त-रम्) । यथा — 'स्वेनाङ्गुलप्रमाणेना(प्य)ङ्गुलानां शतं पुमान् । हस्तोऽङ्गुलिर्विंशत्या' इति । द्व्यङ्गुलावयवोनहस्त इति समुदायो बहुव्रीहिः । अङ्गुलान्तात् समाहारे द्विगुस्तत्पुरुष इत्यच् भवि(ष्य)ति ॥

सर्वैकदेशसङ्ख्यातपुण्यवर्षादीर्घेभ्यश्च[1] रात्रेः ॥ १०५ ॥

सर्वादिभ्यश्चकारादव्ययात् संख्यायाश्च परो यो रात्रिशब्दस्तदन्तात् तत्पुरुषे समासेऽच्प्रत्ययो भवति । सर्वा रात्रिः सर्वरात्रः । पूर्वं रात्रेः पूर्वरात्रः । मध्यरात्रः । अर्धरात्रः । अपररात्रः । पश्चिमरात्रः । संख्यातरात्रः । पुण्यरात्रः । वर्षारात्रः । दीर्घरात्रः । त्रिरात्रः पञ्चरात्रो बहुरात्रः । गणरात्रः । अतिरात्रः । नीरात्रः । तत्पुरुष इति किम् । दीर्घरात्रिर्हेमन्तः । उपरात्रिः ॥

सख्यहोभ्यां टच् ॥ १०६ ॥

सख्यन्तादहश्शब्दान्ताच्च प्रातिपदिकात् तत्पुरुषे समासे टच्प्रत्ययो भवति । राज्ञः सखा राजसखः । ब्राह्मणसखः । परमाहः । उत्तमाहः । पुण्याहम् । सुदिनाहम् । तत्पुरुष इति किम् । इन्द्रः सखा अस्येन्द्रसखा । सख्युः समीपमुपसखि । दीर्घाण्यहान्यस्मिन्, दीर्घाहा निदाघः । दीर्घाह्नी शरत् ॥

राज्ञोऽस्त्रियाम् ॥ १०७ ॥

अस्त्रीलिङ्गो यो राजन्शब्दस्तदन्तात् तत्पुरुषाच्च टच् समासान्तो भवति । देवराजः । मद्रराजः । परमराजः । अस्त्रियामिति किम् । मद्राणां राज्ञी, मद्रराज्ञी । महाराज्ञी ॥

गोरतद्धितलुकि ॥ १०८ ॥

---

१. 'दृक्याहो' ख. ग. पाठः.

गोशब्दान्तात् प्रातिपदिकादतद्धितलुकि सति (तत्)पुरुषे तद्धिते टच् समासान्तो भ(विष्य ? व)ति । राजगवः । परमगवः । पञ्चगवधनः । दशगवप्रियः । अतद्धितलुकीति किम् । सुब्लुकि प्रतिषेधो मा भूत् । राज-(गा ? ग)वमिच्छति राजगवीयति । लुग्ग्रहणं किम । पञ्चभ्यो गोभ्य आगतं पञ्चगवरूप्यम् । पञ्चगवमयम् । तत्पुरुष इति किम् । उपगु । चित्रगु । अजा(श्व ? श्व)गावः ॥

उरसोऽग्रे ॥ १०९ ॥

अग्र्यं प्रधानं तस्मिन्नुरश्शब्दो वर्तते । तदन्तात् तत्पुरुषे टच्-प्रत्ययो भवति । अश्वानामुरः, अश्वोरसम् । अश्वानां प्रधानमित्यर्थः । हस्त्युरसम् । रथोरसम् । अग्र्य इति किम् । अश्वोरः ॥

अनोश्मायस्सरसां जातिसंज्ञयोः ॥ ११० ॥

अनःप्रभृतीनां तत्पुरुषे जातौ संज्ञायां च टच् समासान्तो भवति । उपानसमिति जातिः । महानसमिति संज्ञा । अमृ(तांश ? ताश्म) इति जातिः । पि(ण्डांश ? ण्डाश्म) इति संज्ञा । कालायसमिति जातिः । लोहितायसमिति संज्ञा । मण्डूकसरसमिति जातिः । जलसरसमिति संज्ञा । जातिसंज्ञयोरिति किम् । सदनः । सदश्मा । कथं 'बिन्दुसरो बकसर' इति । नैषा संज्ञा । रूढ्यात्र संज्ञाविज्ञानं शूर्पण(की ? खे)तिवत् ॥

ग्रामकौटाभ्यां तक्ष्णः ॥ १११ ॥

ग्रामकौटाभ्यां परो यस्तक्षन्शब्दस्तदन्तात् तत्पुरुषे टच्प्रत्ययो भवति, समासान्तः । ग्रामस्य तक्षा, ग्रामतक्षः । बहूनां साधारण इत्यर्थः । कुट्यां भवः कौटः, कौटस्तक्षा कौटतक्षः । स्वतन्त्रः, न कस्यचित् प्रति-बद्ध इत्यर्थः । ग्रामकौटाभ्यामिति किम् । राज्ञस्तक्षा राजतक्षा । तत्पुरुष इति किम् । ग्रामश्च तक्षा च ग्रामतक्षाणौ । कौटस्तक्षास्य कौटतक्षः ॥

अतेः शुनः ॥ ११२ ॥

अतेः परो यः श्वन्शब्दस्तस्मात् तत्पुरुषे टच् समासान्तो भवति । अतिक्रान्तः श्वानमतिश्वो वराहः । अतिजव इत्यर्थः । अतिश्वः सेवकः अतिश्वी सेवा । [illegible]ः ॥

उपमानादप्राणिनि ॥ ११३ ॥

अप्राणिविषय उपमानो यः श्वन्शब्दस्तदन्तात् तत्पुरुषे टच् समासान्तो भवति । आकर्षः श्वेव, आकर्षश्वः । फलकश्वः । *'उपमितं व्याघ्रादिभिः' इति समासः । उपमानादिति किम् । न श्वा, अश्वा लोष्टः । अप्राणिनीति किम् । पुरुषः श्वेव, पुरुषश्वा ॥

पूर्वोत्तरमृगेभ्यश्च सक्थ्नः ॥ ११४ ॥

पूर्वादिभ्यश्चकारादुपमानाच्च परो यः सक्थिशब्दस्तदन्तात् तत्पुरुषे टच् समासान्तो भवति । पूर्वसक्थम् । उत्तरसक्थम् । मृगसक्थम् । फलकसक्थम् ॥

नावो द्विगोः ॥ ११५ ॥

नौशब्दान्तात् द्विगोष्टच् समासान्तो भवति । द्वे नावौ समाहृते, द्विनावम् । त्रिनावम् । द्विनावधनः । पञ्चनावप्रियः । द्विनावरूप्यम् । द्विनावमयम् । द्विगोरिति किम् । द्वयोर्नौर्द्विनौः । राज्ञो नौः, राजनौः । द्वे नावावस्य द्विनौकः । (अ)तद्धितलुकीत्येव । पञ्चभिर्नौभिः क्रीतः, पञ्चनौः । दशनौः ॥

अर्धाच्च ॥ ११६ ॥

अर्धशब्दात् परो यो नौशब्दस्तदन्तात् तत्पुरुषे टच् समासान्तो भवति । अर्धनावम् । चकारो द्विगोरित्यस्यानुकर्षणार्थः । तेनोत्तरसूत्रे द्वयमप्यनुवर्तते ॥

खार्या वा ॥ ११७ ॥

खारीशब्दान्तात् द्विगोरर्धशब्दाच्चकारात् खारीशब्दात् तत्पुरुषे टच् समासान्तो वा भवति । द्विखारम् । द्विखारि । अर्धखारम् । अर्धखारि । विधानसामर्थ्यादेव टजन्तस्य न स्त्रियां वृत्तिः । द्विगोरित्येव । द्वयोः खारी, द्विखारी । द्वे खार्यावस्य, द्विखारीकः ॥

द्वित्रिभ्यामञ्जलेः ॥ ११८ ॥

---

* इदं पाणिनीयसूत्रम् । 'उपमेयानि व्याघ्रसिंहर्षभवृषभपुण्डरीकपद्मपल्लवकिसलयेन्दुचन्द्रादिभिः सामान्याप्रयोगे' (३-२-८२) इति तु सरस्वतीकण्ठाभरणस्थसूत्रपाठः ।

द्वित्रिभ्यां परो योऽञ्जलिशब्दस्तस्माद् द्विगोष्टच् समासान्तो वा भवति। द्व्यञ्जलं, द्व्यञ्जलि(:?)। त्र्यञ्जलं त्र्यञ्जलि(:?)। द्विगोरित्येव। द्वयोरञ्जलिः, द्व्यञ्जलिः। द्वावञ्जली अस्य, द्व्यञ्जलिकः। अतद्धितलुकीत्येव। द्वाभ्यामञ्जलिभ्यां क्रीतः, द्व्यञ्जलिः॥

कुमहद्भ्यां ब्रह्मणः॥ ११९॥

कुमहद्भ्यां परो यो ब्रह्मन्शब्दस्तस्मात् तत्पुरुषे टच् समासान्तो वा भवति। कुब्रह्मः। कुब्रह्मा। (महाब्रह्मः)। महाब्रह्मा। तत्पुरुष इत्येव। कुब्रह्मास्मिन्निति कुब्रह्मको देशः। महाब्रह्मकः॥

जनपदेभ्यो नित्यम्॥ १२०॥

जनपदशब्देभ्यो यो ब्रह्मन्शब्दस्तदन्तात् तत्पुरुषे टच् समासान्तो नित्यं भवति। सुराष्ट्रब्रह्मः। अवन्तिब्रह्मः। काशीब्रह्मः। जनपदेभ्य इति किम्। देवब्रह्मा नारदः। तत्पुरुष इत्येव। अवन्तयश्च ब्रह्माणश्च अवन्तिब्रह्माणः। अवन्तयो ब्रह्मास्यावन्तिब्रह्मकः॥

द्वन्द्वाच्चुदषहान्तात् समाहारे॥ १२१॥

समाहारे यो द्वन्द्वस्तस्माच्चवर्गदकारषकारहकारान्तात् टच् समासान्तो भवति। वाक्त्वचम्। स्रक्त्वचम्। श्रीस्रजम्। इडूर्जम्। समिद्दृषदम्। वाक्त्विषम्। वाग्विप्रुषम्। छत्रोपानहम्। धेनु(गोमहं? गोदुहम्)। समासान्तत्वेन प्रत्ययस्य द्वन्द्वावयवत्वाच्छत्रोपानहीति द्वन्द्वलक्षणो मत्वर्थीय इनिर्भवति। द्वन्द्व इति किम्। पञ्च वाचः समाहृताः, पञ्चवाक्। द्विदृषत्। चुदषहान्तादिति किम्। वाक्समित्। यकृन्मेदः। समाहार इति किम्। प्रावृट्शरदौ। अश्वानडवाहौ॥

शरद्विपाडनस्मनसुपानद्धिमवदनडुत्पथिद्युदिग्दृग्यत्तच्चतुर्भ्योऽव्ययीभावे[1]॥ १२२॥

शरदादिभ्योऽव्ययीभावे टच् समासान्तो भवति। उपशरदम्। उपविपाशम्। प्रत्यनसम्। अधिमनसम्। उपोपानहम्। अभिहिमवतम्।

1. 'ष' क. पाठः.

अन्वनडुहम्। अनुपथम्। अतिदिवम्। प्रतिदिशम्। अभिदृशम्। अनुयदम्। अनुतदम्। आचतुरम्। येऽत्र झयन्तास्तेषामुपादानं नित्यार्थम्। अव्ययीभावादिति किम्। परमशरत्॥

प्रतिपरस्समनुभ्योऽक्ष्णः॥ १२३॥

प्रत्यादिभ्यः परो योऽक्षिशब्दस्तस्मादव्ययीभावे टच् समासान्तो भवति। अक्षिणी प्रति, प्रत्यक्षम्। परस्समानार्थः परश्शब्दोऽव्ययम्। अक्ष्णः परः, परोक्षम्। अत्राप्यव्ययीभावः। समीपमक्ष्णः समक्षम्। अन्वक्षम्। कथं प्रत्यक्षोऽर्थः। परोक्षकारित्यादिवाव्ययीभावस्य सत्त्ववचनता। प्रत्यादेरक्षि[illegible] भविष्यति। अथाक्षशब्देन नेत्रपर्यायेण सिद्धे किमर्थं वचनम्। प्रत्यादिभ्यः परस्याक्षिशब्दस्याव्ययीभावे प्रयोगो मा भूदिति॥

जराया जरश्च॥ १२४॥

जराशब्दादव्ययीभावे टच् समासान्तो जरसादेशश्चास्य भवति। जरायाः समीपमुपजरसम्॥

अनः॥ १२५॥

अन्नन्तादव्ययीभावे टच् समासान्तो भवति। अध्यात्मम्। प्रत्यात्मम्। उपराजम्॥

नपुंसकाद्वा॥ १२६॥

अन्नन्तान्नपुंसकलिङ्गादव्ययीभावे टच् समासान्तो वा भवति। उपचर्मम्। उपचर्म। अधिसामम्। अधिसाम॥

गिरिनदीपौर्णमास्याग्रहायणीभ्यः॥ १२७॥

गिर्यादिभ्योऽव्ययीभावे टच् समासान्तो भवति वा। अनुगिरम्। अनुगिरि। अन्तर्गिरम्। अन्तर्गिरि। उपनदम्। उपनदि। अधिपौर्णमासम्। अधिपौर्णमासि। उपाग्रहायणम्। उपाग्रहायणि॥

झयः॥ १२८॥

शयन्तादव्ययीभावे टच् समासान्तो वा भवति । उपसमिधम् । उपसमित् । उपदृषदम् । उपदृषत् । उपस्रुचम् । उपस्रुक् । अधिस्रजम् । अधिस्रक् । उपलघटम् । उपलघट् । उपैडविडम् । उपैडविट् । प्रतिमरुतम् । प्रतिमरुत् । अनुककुभम् । अनुककुप् ॥

निसः शतो डच् ॥ १२९ ॥

निसः परो यः शदन्तस्तस्मात् डच् समासान्तो भवति । निर्गतानि त्रि(शानि ? शतो) वर्षाणि निस्त्रिंशानि । निश्चत्वारिंशानि । निर्गतस्त्रिंशतोऽङ्गुलिभ्यः, निस्त्रिंशः खड्गः । निस्त्रिंश इव क्रूरकर्मा निस्त्रिंशः खलः । अभिधानसामर्थ्यात् तत्पुरुष एवायं समासान्तो भवति ॥

अबहोः सङ्ख्येयबहुव्रीहेः ॥ १३० ॥

सङ्ख्येये (यो) बहुव्रीहिरबहुशब्दान्तस्तस्माड्डच् समासान्तो भवति । उपदशाः । आसन्नदशाः । अदूरदशाः । अधिकदशाः । द्विदशाः । त्रिदशाः द्वित्राः । पञ्चषाः । अबहोरिति किम् । उपबहवः । सङ्ख्येयग्रहणं किम् । प्रियपञ्चः । प्रियपञ्चानः । बहुव्रीहेरिति किम् । द्वादश । त्रयोदश ॥

सक्थ्यक्ष्णः स्वाङ्गात् षच् ॥ १३१ ॥

स्वाङ्गवचनौ यौ सक्थ्यक्षिशब्दौ तदन्तात् बहुव्रीहेः षच् समासान्तो भवति । दीर्घसक्थः, दीर्घसक्थी । विशालाक्षः, विशालाक्षी । सक्थ्यक्ष्ण इति किम् । दीर्घजानुः । महाबाहुः । स्वाङ्गादिति किम् । (द्वि ? दीर्घ)सक्थि शकटम् । स्थूलाक्षिरिक्षुः । बहुव्रीहेरिति किम् । परमसक्थि । षचः षकारो ङीबर्थः ॥

अङ्गुलेर्दारुणि ॥ १३२ ॥

अङ्गुलिशब्दान्ताद्बहुव्रीहेर्दारुणि वर्तमानात् षच् समासान्तो भवति । द्व्यङ्गुलं दारु । पञ्चाङ्गुलम् । अङ्गुलिसदृशावयवं धान्यादिविक्षेपणकाष्ठमुच्यते ॥

द्वित्रिभ्यां मूर्ध्नः ॥ १३३ ॥

द्वित्रिभ्यां परो यो मूर्धन्शब्दस्तदन्ताद्बहुव्रीहेः षच् समासान्तो भवति । द्वौ मूर्धानावस्य, द्विमूर्धः । त्रिमूर्धः । बहुव्रीहेरित्येव । द्वयोर्मूर्धा द्विमूर्धा ॥

अप्पूरण्यास्तत्प्राधान्ये ॥ १३४ ॥

पूरणप्रत्ययान्तस्त्रीलिङ्गशब्दः पूरणीत्युच्यते । तदन्ताद्बहुव्रीहेस्तत्प्राधान्ये वृत्तावप्यन्तर्भावे अप्प्रत्ययो भवति । कल्याणी पञ्चमी आसां रात्रीणां कल्याणीपञ्चमाः । कल्याणीदशमाः । 'न प्रधानपूरण्याम्' इति पुंवद्भावाभावः । तत्प्राधान्य इति किम् । कल्याणी पञ्चमी अस्मिन् कल्या(णी ? ण)पञ्च(मि ? मी)कः पक्षः ॥

प्रमाण्याः ॥ १३५ ॥

प्रमाणीशब्दान्तात् बहुव्रीहेरप् समासान्तो भवति । स्त्री प्रमाणी एषां स्त्रीप्रमाणाः कुटुम्बिनः । भार्याप्रमाणाः श्रेणयः । प्रमाणशब्देन सिद्धे प्रमाणीशब्दान्तात् कबभावार्थं वचनम् ॥

अन्तर्बहिर्भ्यां लोम्नः ॥ १३६ ॥

अन्तर्बहिर्भ्यां परो यो लोमन्शब्दस्तदन्ताद् बहुव्रीहेरप् समासान्तो भवति । अन्तर्गतानि लोमान्यस्यान्तर्लोमः प्रावारः । बाहिर्लोमः (पटः) ॥

नक्षत्रान्नेतुः ॥ १३७ ॥

नक्षत्रशब्दात् परो यो नेतृशब्दस्तदन्ताद्बहुव्रीहेरप् समासान्तो भवति । मृगो नेता आसां मृगनेत्रा रात्रयः । पुष्यनेत्राः । नक्षत्रादिति किम् । देवदत्तनेतृकः । ननु च नेत्रशब्देनैव सिद्धं—

"प्रायेण ग्राहिणीनेत्राः कन्यार्थेषु कुटुम्बिनः ।"

इति । सत्यमेतत् । किन्तु ने(त्र ? तृ)शब्दान्तात् कब् मा भूदिति वचनम् ॥

नञ्सुव्युपत्रिभ्यश्चतुरोऽच् ॥ १३८ ॥

नञादिभ्यः परो चतुर्शब्दस्तदन्ताद् बहुव्रीहेरच् समासान्तो भवति । अविद्यमानानि चत्वारि अस्य अचतुरः । शोभनानि चत्वारि अस्य सुचतुरः । विगतानि चत्वारि अस्य विचतुरः । चतुर्णां समीप उपचतुराः । त्रयश्चत्वारो वा त्रिचतुराः ॥

नाभेः ॥ १३९ ॥

नाभ्यन्ताद्बहुव्रीहेरच् समासान्तो भवति । पद्मनाभः । ऊर्णनाभः ॥

सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणीपदाजपदप्रोष्ठपदभद्रपदाः ॥ १४० ॥

सुप्रातादयो बहुव्रीहयोऽच्प्रत्ययान्ता निपात्यन्ते । शोभनं प्रातरस्मिन् सुप्रातः । शोभनं श्वोऽस्मिन् सुश्वः । शोभनं दिवास्मिन् सुदिवः । शारेरिव कुक्षिरस्य शारिकुक्षः । चतस्रः अश्रयोऽस्य चतुरश्रः । एण्या इव पादावस्य एणीपदः । एवमजपदः । प्रोष्ठो गौः, तस्येव पादा(श ? व)स्य प्रोष्ठपदः । भद्रः पादोऽस्य भद्रपदः । निपातनसामर्थ्यात् टिलोपपद्भावनियमादयो भवन्ति ॥

नञ्दुस्सुभ्यः स(क्थो ? क्थ्नो) वा ॥ १४१ ॥

नञादिभ्यः परो यः सक्थिशब्दस्तदन्तात् बहुव्रीहेरच् समासान्तो वा भवति । अविद्यमानं सक्थ्यस्य असक्थः । दुस्सक्थः । सुसक्थः । पक्षे अस(क्थी ? क्थिरि)त्यादि । नञादिभ्य इति किम् । दीर्घसक्थि शकटम् । बहुव्रीहेरित्येव । न सक्थि, असक्थि ॥

हलिशक्त्योश्च ॥ १४२ ॥

नञादिभ्यः परौ यौ हलिशक्तिशब्दौ तदन्ताद्बहुव्रीहेरच् समासान्तो (वा) भवति । अविद्यमाना हलिरस्य अहलः । अहलिः । दुर्हलः । दुर्हलिः । सुहलः । सुहलिः । अशक्तः । अशक्तिः । दुश्शक्तः । दुश्शक्तिः । सुशक्तः । सुशक्तिः । हलशब्देन शक्तशब्देन च सिद्धे स्वरार्थं वचनम् ॥

नित्यमसिच् प्रजायाः ॥ १४३ ॥

नञादिभ्यः परो यः प्रजाशब्दस्तदन्ताद्बहुव्रीहेर्नित्यमसिच् समासान्तो भवति । अविद्यमाना प्रजा अस्य, अप्रजाः । दुष्प्रजाः । सुप्रजाः ॥

मन्दाल्पाभ्यां च मेधायाः ॥ १४४ ॥

मन्दाल्पाभ्यां चकारान्नञादिभ्यश्च परो यो मेधाशब्दस्तदन्ताद्बहुव्रीहेरसिच्प्रत्ययो भवति । मन्दा मेधा अस्य, मन्दमेधाः । अल्पमेधाः । (अमेधाः) । दुर्मेधाः । सुमेधाः ॥

नाम्नि नासिकाया नसोऽस्थूलात् ॥ १४५ ॥

स्थूलादन्यस्मात् परो यो नासिकाशब्दस्तस्य बहुव्रीहिसमासे संज्ञायाम(सि?)च्प्रत्ययः समासान्तो नसादेशश्च भवति । गौरिव नासिका अस्य, गोनसः । द्रुरिव (नासिका अस्य) द्रुणसः । वाध्री(व) नासिका अस्य, वा (ध्री ? ध्री)णसः । कुम्भीनसः । नाम्नीति किम् । तुङ्गा नासिका अस्य, तुङ्गनासिकः । अस्थूलादिति किम् । स्थूलनासिकः । कथं गोनासः । यद्यस्ति, नासाशब्देन भविष्यति ॥

उपसर्गाच्च ॥ १४६ ॥

उपसर्गात् परो यो नासिकाशब्दस्तदन्तस्य बहुव्रीहौ नसादेशस्समासान्तो भवति । प्रणसं मुखम् । उन्नसम् । असंज्ञार्थं वचनम् ॥

वेः खुखग्राः ॥ १४७ ॥

वेरुपसर्गात् पराया नासिकाया बहुव्रीहौ खु, ख, ग्र, इत्येते आदेशाः समासान्ता भवन्ति । विखुः, विगतनासिकः । विखः । विग्रः ॥

खरखुराभ्यां नस् वा ॥ १४८ ॥

खरखुराभ्यां परस्या नासिकायाः संज्ञायां नस् इत्ययमादेशः समासान्तो वा भवति । खरणाः, खरणसः । खुरणाः । खुरणसः ॥

धर्मादनिच् केवलात् ॥ १४९ ॥

केवलात् पूर्वपदाद् यो धर्मशब्दस्तदन्ताद् बहुव्रीहेरनिच् समासान्तो वा भवति । कल्याणधर्मा । कल्याणधर्मकः । तद्धर्मा । तद्धर्मकः । विपरीतधर्मा । विपरीतधर्मकः । केवलादिति किम् । परमः स्वो धर्मोऽस्य परमस्वधर्मकः ॥

सुहरिततृणसोमेभ्यो जम्भात् ॥ १५० ॥

स्वादिभ्यः परो यो जम्भशब्दस्तदन्ताद् बहुव्रीहेरनिच् समासान्तो भवति वा । जम्भशब्दोऽभ्यवहार्यवचनो दन्तवचनो वा । शोभनो जम्भो (जम्भ वा ?)ऽस्य, सुजम्भा । हरितजम्भा । तृणजम्भा । दन्तपक्षे तृणजम्भा, तृणमिव जम्भोऽस्य । सोमजम्भा । स्वादिभ्य इति किम् । पतितजम्भः॥

१ 'कादस्य' ख. ग. पाठः.

दक्षिणेर्मा लुब्धयोगे ॥ १५१ ॥

दक्षिणेर्मेत्यनिजन्तो बहुव्रीहौ निपात्यते लुब्धयोगे गम्यमाने । दक्षिणमीर्ममस्य दक्षिणेर्मा मृगः । ईर्मं व्रणमुच्यते । दक्षिणमङ्गं व्रणितमस्य व्याधेनेत्यर्थः । लुब्धयोग इति किम् । दक्षिणेर्मं शकटम् ॥

इच् क्रियाव्यतीहारे ॥ १५२ ॥

क्रियाव्यतीहारे यो बहुव्रीहिस्तस्मादिच्प्रत्ययः समासान्तो भवति । केशेषु च केशेषु च गृहीत्वा युद्धं वृत्तं केशाकेशि । बाहूबाहवि । दण्डैश्च दण्डैश्च प्रहृत्य वृत्तं युद्धं दण्डादण्डि । मुष्टीमुष्टि । तस्यापत्यादिसूत्रेण (?) इजन्तस्याव्ययत्वाद्विभक्तेर्लुक् ॥

क्रियायां द्वे दण्डमुसलाभ्याम् ॥ १५३ ॥

द्विशब्दात् परौ यौ दण्डमुसलशब्दौ तदन्तात् बहुव्रीहेः क्रियायां वर्तमानादन्यपदार्थे इच् समासान्तो भवति । द्वौ दण्डावस्यां दण्डक्रियायां द्विदण्डि प्रहरन्ति । द्विमुसलि । क्रियायामिति किम् । द्विदण्डा शाला ॥

उभोभयाभ्यामञ्जलिपाणिहस्तदन्तकर्णेभ्यः ॥

उभोभयाभ्यां परे ये अञ्जल्यादयस्तदन्ताद् बहुव्रीहेः क्रियायां वर्तमानात् इच् समासान्तो भवति । उभावञ्जली अस्यां क्रियायामुभाञ्जलि । उभयाञ्जलि । उभापाणि । उभयापाणि । उभाहस्ति प्रयच्छन्ति । उभयाहस्ति । उभादन्ति घ्नन्ति । उभयादन्ति । उभाकर्णि शृण्वन्ति, उभयाकर्णि । ननु चोभयशब्दस्य द्विवच(न ? ना) विषयत्वमुभयोऽन्यत्र स्मर्यते । तत् कथमुत्तरपदे प्रयोगः । पृथगुपादानसामर्थ्याद् भविष्यति ॥

बाहोर्लुक् ॥ १५५ ॥

उभोभयाभ्यां परो यो बाहुशब्दस्तदन्ताद् बहुव्रीहेः क्रियायां वर्तमानात् इच्प्रत्ययो लुक् चास्य भवति । उभाबाहु युध्यन्ते । उभयाबाहु । सर्वत्रात् । 'इच्यनचिर्दीर्घश्च'ति पूर्वपदस्यात्त्वम् ॥

---

१. २. ३. उभोभ० ख. ग. बाहु...

संहृतपुच्छ्येकपद्याढ्यपद्यादयः ॥ १५६ ॥

संहृतपुच्छ्यादयो बहुव्रीहौ क्रियायामिच्प्रत्ययान्तास्साधवो भवन्ति संहृतपुच्छि गच्छति। एकपदि गच्छति। आढ्यपदि धावति। निपातनादात्त्वाभावः पदादेशश्च भवति॥

प्रोह्यपदिनिकुच्यकर्णि च ॥ १५७ ॥

प्रोह्यपदि निकुच्यकर्णि इत्येतौ समासौ क्रियायां निपात्येते। प्रोह्य पादावास्ते, प्रोह्यपद्यास्ते। निकुच्य कर्णौ धावति, निकुच्यकर्णि धावति। योगविभागकरणं बहुव्रीह्यर्थम्। उत्तमपाकलादित्वाचान्यपदार्थेऽपि क्वचित् तत्पुरुषो भवति॥

मासाद् भृतिप्रत्ययादेष्ठच् ॥ १५८ ॥

भृतिप्रत्ययान्तपूर्वपदान्मासशब्दात् बहुव्रीहेष्ठच् समासान्तो भवति। पञ्चभृतिर्दीयतेऽस्मिन्निति पञ्चको मासः। 'सङ्ख्याया अतिशतः कन्' (५-१-२०) पञ्चको मासोऽस्य पञ्चकमासिकः॥

प्रसम्भ्यां जानुनोर्ज्ञुः ॥ १५९ ॥

प्रसंभ्यां परो यो जानुशब्दस्तस्य बहुव्रीहौ समासे ज्ञुरित्ययमादेशो भवति। प्रगते जानुनी अस्य प्रज्ञुः। संज्ञुः॥

ऊर्ध्वाद्वा ॥ १६० ॥

ऊर्ध्वशब्दात् परो यो जानुशब्दस्तस्य ज्ञुरादेशः समासान्तो वा भवति* ॥

(धनुषोऽनङ् ॥ १६१ ॥

वा संज्ञायाम् ॥ १६२ ॥

उपमानात् ॥ १६३ ॥

पादस्य पादहस्त्यश्वाजदासीमहेलागणिकाकुसूलजालकटोलगण्डोलकेभ्यः ॥ १६४ ॥

---

* इत उत्तरं कतिपयांशा गलिताः। धनूरेखान्तर्गतानि सूत्राणि सूत्रपाठादुद्धृत्य लिखितानि।

कुम्भजालशतसूत्रस्थूणामुनिशिलार्द्रगोधाकलशी-
दासीभ्यः ॥ १६५ ॥

त्रिपुकृष्णकुणिगुणद्रोणीशकृत्सूकरसूचीशुचि-
विनञ्निरष्टाभ्यश्च ॥ १६६ ॥

संख्यादेः ॥ १६७ ॥

वयसि दन्तस्य दतृ ॥ १६८ ॥)

वयसीति किम्। सुदन्ता दाक्षिणात्याः । द्विदन्तः कुञ्जरः । ऋकार उगित्कार्यार्थः ॥

षोडन् ॥ १६९ ॥

षषादेर्दन्तान्तस्य बहुव्री(हि ! हे)र्दन्तस्य दत्रादेशः, षष उत्वं च निपात्यते। षड् दन्ता अस्य षोडन् । वयसीति नानुवर्तते ॥

स्त्रियां संज्ञायाम् ॥ १७० ॥

बहुव्रीहौ स्त्रियां संज्ञायां विषये दन्तशब्दस्य दत्रादेशः समासान्तो भवति। अयोदती। फलदती। संज्ञायामिति किम्। समदन्ती सुदन्ती ॥

अग्रान्तशुद्धशुभ्रवृषवराहा(हि)मूषिकश्यावाशिखरारोकेभ्यो वा ॥ १७१ ॥

अग्रान्तेभ्यः शुद्धादिभ्यश्च परस्य दन्तशब्दस्य बहुव्रीहौ दत्रादेशसमासान्तो वा भवति। कुड्मलाग्रदन्। कुड्मलाग्रदन्तः। कलिकाग्रदन्। कलिकाग्रदन्तः। शुद्धदन्। शुद्धदन्तः। शुभ्रदन्। शुभ्रदन्तः। वृषदन्। वृषदन्तः। वराहदन्। वराहदन्तः। अहिदन्। अहिदन्तः। मूषिकदन्। मूषिकदन्तः। श्यावदन्। श्यावदन्तः। शिखरदन्। शिखरदन्तः। अरोकदन्। अरोकदन्तः। अरोको निर्दीप्तः ॥

ककुत् ककुदस्यावस्थायाम् ॥ १७२ ॥

कालादिकर्मकृता वस्तुधर्मा वयःप्रभृतयोऽवस्थेत्युच्यते । तस्यां गम्यमानायां ककुदशब्दस्य बहुव्रीहौ ककुदित्ययमादेशः समासान्तो भवति । असञ्जातककुद्, बालः । यष्टिककुद्, युवा । पूर्णककुद्, मध्यमः । पत्रककुद्, जीर्णः । स्थूलककुद्, बलवान् । अवस्थायामिति किम् । श्वेतककुदः । ककुच्छब्देन सिद्धे ककुदशब्दस्यास्मिन् विषये प्रयोगो मा भूदिति वचनम् ॥

त्रिककुत् पर्वते ॥ १७३ ॥

त्रेः परस्य ककुदशब्दस्य बहुव्रीहौ समासे पर्वतेऽभिधेये ककुदादेशस्समासान्तो निपात्यते । त्रीणि ककुदान्यस्य, त्रिककुत् पर्वतः । 'त्रेः पर्वत' इति सिद्धे निपातनं पर्वतविशेषप्रतिपत्त्यर्थम् । तेनान्यस्त्रिककुद एव भवति ॥

उद्विभ्यां काकुत काकुदस्य ॥ १७४ ॥

उद्विभ्यां परस्य काकुदस्य बहुव्रीहौ काकुदित्ययमादेशः समासान्तो भवति । उद्गतं काकुदमस्य, उत्काकुत् । (विकाकुत् । ) काकुदं तालु उच्यते ॥

पूर्णाद्वा ॥ १७५ ॥

पूर्णशब्दात् परस्य काकुदस्य बहुव्रीहौ काकुदित्ययमादेशः समासान्तो वा भवति । पूर्णं काकुदमस्य, पूर्णकाकुत् । पूर्णकाकुदः ॥

सुहृद्दुर्हृदौ मित्रामित्रयोः ॥ १७६ ॥

स्वादेर्दुरादेश्च हृदयशब्दस्य बहुव्रीहौ यथासङ्ख्यं मित्रामित्रयोर्हृदादेशः समासान्तो निपात्यते । शोभनं हृदयमस्य सुहृद्, मित्रम् । दुष्टं हृदयमस्य दुर्हृद्, अमित्रम् । मित्रामित्रयोरिति किम् । सुहृदयः साधुः । दुर्हृदयश्चोरः । निपातनसामर्थ्यादवयवानर्थक्ये सौहृदं दौर्हृदमिति 'हृद्भगसिन्धोः पूर्वपदस्य च' इत्युत्तरपदवृद्धिर्न भवति ॥

उरःसर्पिर्दधिमधूपानच्छालिभ्यः कप् ॥ १७७ ॥

---

१. 'धूपो' क. पाठः

उरःप्रभृत्यन्ताद् बहुव्रीहेः कप्प्रत्ययः समासान्तो भवति । व्यूढमुरोऽस्य, व्यूढोरस्कः । प्रियसर्पिष्कः । प्रियदधिकः । प्रियमधुकः । एवमवमुक्तोपानत्कः । सम्पन्नशालिकः ॥

पुमनडुन्नौपयोलक्ष्मीभ्य एकत्वे ॥ १७८ ॥

एकत्वविषया ये पुमादयस्तदन्ताद् बहुव्रीहेः कप्प्रत्ययः समासान्तो भवति । प्रियः पुमानस्य, प्रियपुंस्कः । प्रियानडुत्कः । प्रियनौकः । प्रियपयस्कः । प्रियलक्ष्मीकः । एकत्व इति किम् । द्विपुमान् । द्विपुंस्कः । (बहुलक्ष्मीः) बहुलक्ष्मीकः । 'शेषादि'ति विकल्पो भवति ॥

नञोऽर्थात् ॥ १७९ ॥

नञः परो योऽर्थशब्दस्तदन्ताद्बहुव्रीहेः कप्प्रत्ययः समासान्तो भवति । अविद्यमानः अर्थोऽस्यानर्थकः ॥

इनः स्त्रियाम् ॥ १८० ॥

इन्नन्ताद्बहुव्रीहेः स्त्रियां वर्तमानात् कप्प्रत्ययः समासान्तो भवति । बहवो दण्डिनोऽस्यां शालायां बहुदण्डिका शाला । बहुच्छत्रिका सेना । बहुस्वामिका नगरी । बहुवाग्मिका सभा । 'अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति' । स्त्रियामिति किम् । बहुदण्डी राजा । बहुदण्डिकः ॥

ङ्यूङृतः ॥ १८१ ॥

ङ्यन्तादूङन्तादृकारान्ताच्च बहुव्रीहेः कप्प्रत्ययः समासान्तो भवति । बह्वयः कुमार्योऽस्मिन् बहुकुमारीकः । बहुबन्धूकः । बहुकर्तृकः ॥

शेषाद्वा ॥ १८२ ॥

यस्माद्बहुव्रीहेः समासान्तो न विहितस्तस्मात् कप्प्रत्ययः समासान्तो वा भवति । बह्व्यः खट्वा अस्मिन् बहुखट्वकः । बहुखट्वः । बहुमालकः । बहुमालः । बहुवीणकः । (बहुवीणः ।) शेषादिति किम् । प्रियपथः । प्रियधुरः ॥

न सुभ्र्वादिभ्यः ॥ १८३ ॥

सुभ्र्वादिभ्यो बहुव्रीहिभ्यः कप् समासान्तो न भवति । सुभ्रूः । लेखाभ्रूः । कोमलोरूः । जातिवचनत्वादूङन्ता एते । एवं हि सम्बुद्धौ ह्रस्वो भवति । हे सुभ्रु । हे वरोरु । आकृतिगणत्वात् करभोरूः संहितोरूरित्यादिभ्योऽपि न भवति ॥

संज्ञायाम् ॥ १८४ ॥

संज्ञायां विषये बहुव्रीहौ कप् समासान्तो न भवति । विश्वदेवः । विश्वयशाः ॥

ईयसः ॥ १८५ ॥

ईयसुन्नन्ताद् बहुव्रीहेः कप् समासान्तो न भवति । बह्वः श्रेयांसोऽस्मिन् बहुश्रेयान् । बहुज्यायान् । बहुगरीयान् ॥

ङ्या ईच्च ॥ १८६ ॥

ईयसः परो यो ङीप् तदन्तस्य बहुव्रीहेरीकारोऽन्तादेशश्चकारात् कप्प्रतिषेधश्च भवति । बह्व्यः श्रेयस्योऽस्य, बहुश्रेयसी पुरुषः । ईद्विधानसामर्थ्यादुपसर्जनह्रस्वो न भवति ॥

स्तुतौ भ्रातुः ॥ १८७ ॥

भ्रातृशब्दान्ताद् बहुव्रीहेः स्तुतौ गम्यमानायां कप् समासान्तो न भवति । शोभनो भ्राता अस्य सुभ्राता । पटुभ्राता । स्तुताविति किम् । मूर्खभ्रातृकः ॥

नाडीतन्त्र्योः स्वाङ्गे ॥ १८८ ॥

स्वाङ्गवाचिनौ यौ नाडीतन्त्रीशब्दौ तदन्तस्य बहुव्रीहेः कप् समासान्तो न भवति । बह्व्यः नाड्योऽस्मिन् बहुनाडिः कायः । बहुतन्त्रीः ग्रीवा । तन्त्र्यो धमन्य उच्यन्ते । स्वाङ्ग इति किम् । बहुनाडीकः स्तम्बः । बहुतन्त्रीका वीणा । अन्ये स्वाङ्गशब्देन बहुव्रीह्यर्थावयवमाहुः । तेनात्रापि कप् न भवति । बहुनाडिः स्तम्बः । बहुतन्त्रीः वीणा । प्रत्युदाहरणं तु बहुनाडीको ग्रहः । बहुतन्त्रीको नटः ॥

निष्प्रवाणिः ॥ १८९ ॥

निष्प्रवाणिरिति बहुव्रीहिलक्षणस्य कपः प्रतिषेधो निपात्यते । प्रोयतेऽस्यामिति प्रवाणी तन्तुवायशलाका । निर्गता प्रवाणी अस्य, निष्प्रवाणिः पटः । दन्तादचिरापहृतः (समाप्तवा)न इत्यर्थः । निर्गतः प्रवाणेरिति तत्पुरुषेण सिद्धे बहुव्रीहौ कब् मा भूदिति वचनमर्थवद्भवति ॥

इति श्रीदण्डनाथनारायणभट्टसमुद्धृतायां सरस्वतीकण्ठाभरणस्य
व्याकरणस्य लघुवृत्तौ हृदयहारिण्यां पञ्चमस्याध्यायस्य
चतुर्थः पादः ॥

पञ्चमाध्यायः : ॥

---

## अथ षष्ठोऽध्यायः ।

### प्रथमः पादः ।

सन्यङोराद्य एकाज् द्विः ॥ १ ॥

सन्नन्तस्य यङन्तस्य च यः प्रथम एकाजवयवः स द्विरुच्यते । तितिक्षते । चिकीर्षति । लोलूयते । पापच्यते ॥

श्लुचङि ॥ २ ॥

श्लौ चङि (च) परतः पूर्वस्य प्रथम एकाजवयवो द्विरुच्यते । जुहोति । जिहीते । अपीपचत् । अचकमत ॥

लिट्यनामि ॥ ३ ॥

अनामि भूते लिटि परतः पूर्वस्य प्रथम एकाजवयवो द्विरुच्यते । जजागार । पपाच । इयाय । आर । पपाचेत्यत्राद्यन्तवत्त्वं व्यपदेशिवद्भावात् । इयाय आरेत्यत्र तु एकाच्त्वमपि व्यपदेशिवद्भावात् । एकाजिति हि तद्गुणसंविज्ञानो बहुव्रीहिः । एकः अच् यस्य सोऽयमेकाजित्यवयवेन विग्रहः । समुदायः समासार्थः । अभ्यन्तरश्च समुदायेऽवयवस्तेन साच्कस्यैव द्विर्वचनं भवति । तत्र पपाचेत्यादौ येनैवाचा पाजित्यादिसमुदाय एकाच् तेनैव तदवयवोऽच्शब्दादिः पशब्दादिश्च । तत्र पृथगवयवैकाचो न द्विरुच्यन्ते । किन्तर्हि समुदायैकाजेव । एवं हि सकृच्छास्त्र-

प्रवृत्त्या सावयवः समुदायोऽत्र गृह्यते । तथा च चराचरेत्यादयः सिद्धा भवन्ति । अनासीति किम् । चकासांचकार । पाचयाञ्चक्रे ॥

अजादेर्द्वितीयः ॥ ४ ॥

अजादेर्द्विर्वचनभाजः सम्बन्धी य एकाच् (तद् ? स) द्विरुच्यते । न प्रथमः । अटिटिषति । अशिशिषति । अटाट्यते । अशाश्यते । आटिटत् । आशिशत् । (प्रापोण् न ?) अरिरिषति । (न कुरुचे ?) अर्त्तेः 'स्मिपूङ्रञ्ज्वशां सनि' (कृगॄदृधृप्रच्छिभ्यः सनः' इतीटि कृते गुणे च 'द्विर्वचनेऽचि' (१-२-५०) इति स्थानिवद्भावः प्राप्नोति । नैष दोषः । द्विर्वचननिमित्तेऽचीत्युच्यते । न चात्र द्विर्वचनस्य निमित्तमिट् । किन्तर्हि का(र्ये ? र्यी ।) (न च कार्यी) निमित्तत्वेनाश्रियते । तथा च क्ङिन्निमित्तयोर्गुणवृद्ध्योः प्रतिषेधो विधीययानः शायक इत्यत्र न भवति । न हि का (र्ये?र्यि) णः शीङो गुणं प्रति निमित्तभावः । अजादेरिति किम् । जजागार ॥

न न्द्राः संयोगादयः ॥ ५ ॥

नकारदकाररकारा द्वितीयस्यैकाचोऽवयवभूताः संयोगादयो न द्विरुच्यन्ते । (उन्दिदिषति) (अड्डिडिषति । अटिटिषति ? ।) उब्जिजिषति । (न्द्राः ? न्द्राः) इति किम् । ईचिक्षिषते । संयोगादय इति किम् । प्राणि-(नि ? णि)षति । द्वितीय इत्येव । दिद्रासति । ननु च इन्दिद्रीयिषतीति यथा नकारस्य संयोगादेर्द्विर्वचनं न भवति, तथैव दकारस्यापि न प्राप्नोति ? समुदायस्य संयोगान्तोऽयं (न) संयोगस्यादिः किन्तर्हि मध्यम इति भविष्यति ॥

अयि रः ॥ ६ ॥

अयकारे परतः रेफः संयोगादिर्द्वितीयस्यैकाचोऽवयवभूतो न द्विरुच्यते । अर्चिचिषति । अ(दी ? र्दि)दिषति । अयीति किम् । अरा-(ध्यन्ते ? र्यते) संयोगादिरित्येव । अरिरिषति ॥

पुनः ॥ ७ ॥

यद् द्विरुक्तं तत् पुनर्न द्विरुच्यते । जुगुप्सिषते । लोलूयिषते ॥

ईर्ष्यो र्यिः सन् वा ॥ ८ ॥

ईर्ष्यतेः समस्तस्यापि यिशब्दो वा सन् वा द्विरुच्यते । ईर्ष्यियिषति । ईर्ष्यिषिषति ॥

सुब्धातूनां यथेष्टम् ॥ ९ ॥

सुब्धातूनां यथेष्टमेकाजवयवतः प्रथमो द्वितीयस्तृतीयादिर्वा द्विरुच्यते । पुपुत्रीयिषति । पुतित्रीयिषति । पुत्रीयियिषति । पुत्रीयिषिषति ॥

अजादीनां द्वितीयात् ॥ १० ॥

अजादीनां सुब्धातूनां द्वितीयादारभ्य एकाजवयवो यथेष्टं द्विरुच्यते । अशिश्वीयिषति । अश्वीयियिषति ॥

कण्ड्वादीनां तृतीयात् ॥ ११ ॥

एभ्यस्तृतीयादारभ्य एकाजवयवो द्विरुच्यते । न प्रथमद्वितीयादिः । कण्डूयियिषति ॥

दाश्वान्साह्वान्मीढ्वांश्च ॥ १२ ॥

दाश्वानित्यादयः शब्दाः साधवो भवन्ति । 'दाशृ दाने' इत्येतस्य क्वसावद्वित्वमनिट्त्वं च निपात्यते । दाश्वान् दाश्वांसौ दाश्वांसः । 'षह मर्षणे' इत्येतस्य परस्मैपदमुपधादीर्घत्वमाद्वित्वमनिट्त्वं च । साह्वान् साह्वांसौ साह्वांसः । 'मिह सेचने' इत्यस्याद्वित्वमनिट्त्वमुपधादीर्घत्वं (ढत्वं) च । मीढ्वान् मीढ्वांसौ मीढ्वांसः ॥

क्लिदेः के ॥ १३ ॥

क्लिदेर्धातोः कप्रत्यये परतः प्रथमोऽवयव एकाच् द्विरुच्यते* । कस्यति चक्षुषम् (?) ॥

चरिचलिपतिवदीनां वाक् चाभ्यासस्य[१] ॥ १४ ॥

---

१. 'नामग् वाभ्यासस्य' क. पाठः.

---

* इत उत्तरं कियांश्चिद् ग्रन्थभागो गलितः प्रतिभाति । 'क्रुसेराचि दीर्घश्च' इत्येकं सूत्रं चाशुद्धप्रायं ख. ग. मातृकयोरधिकतया दृश्यते ।

चरिप्रभृतीनां धातूनामचि प्रत्यये परतः प्रथम एकाजवयवो वा द्विरुच्यते । अभ्यासस्य चाक् चागमो भवति । चरतीति चराचरः । चलाचलः । पतापतः । वदावदः । आगमविधानसामर्थ्याद् 'हलोऽनादेः' इति लोपो न भवति । लोपे हि सत्यागमादेशयोर्विशेषो न स्यात् । पक्षे चरः पुरुषः । चलं यानम् । पतः पक्षः । वदो मनुष्य इति ॥

हन्तेर्[1]ईश्च घः ॥ १५ ॥

हन्तेर्धातोराचि परतः प्रथमोऽवयव एकाज् वा द्विरुच्यते । हकारस्य घकारादेशः । आक् चाभ्यासस्य भवति । हन्तीति घनाघनः । पक्षे हनः ।

पाटेर्णिलुग् दीर्घ ऊक् च ॥ १६ ॥

पटतेर्ण्यन्तस्याचि परतः प्रथमोऽवयव एकाज् वा द्विरुच्यते । णेर्लुग् अभ्यासस्य दीर्घ ऊक् चागमो भवति । पाटयतीति (पटा ? पाटू) पटः । पक्षे पाटः चक्रः । (वैभूयञ्जरि इत्यौणादिकाः ?) ॥

ष्यङः प्रधानस्य सम्प्रसारणं पुत्रपत्योः केवलयोस्तत्पुरुषे ॥ १७ ॥

पुत्र पति इत्येतयोः केवलयोरुत्तरपदयोस्तत्पुरुषसमासे ष्यङः प्रधानस्य सम्प्रसारणं भवति । यणः स्थान इग् भवतीत्यर्थः । कारीषगन्धीपुत्रः । कारीषगन्धीपतिः । कौमुदगन्धीपुत्रः । कौमुदगन्धीपतिः । करीषस्येव गन्धोऽस्येति बहुव्रीहिः । 'उपमानादि'ति गन्धस्येदन्तादेशः । करीषगन्धेरपत्यमित्यण् । तस्य स्त्रियां ष्यङ् । ततो 'यङश्चाप्' (३-४-१२६) । तस्यापि विहिते षष्ठीसमासः । ततोऽनेन सम्प्रसारणम् । आकारस्य परपूर्वत्वात् 'सम्प्रसारणस्ये'ति दीर्घः । एवं कौमुदगन्धीत्यादावपि सर्वं भवति । ष्यङ इति किम् । इभ्यापुत्रः । क्षत्रियापतिः । प्रधानस्येति किम् । अतिक्रान्ता कारीषगन्ध्यामतिकारीषगन्ध्या तस्याः पुत्रः, अतिकारीषगन्ध्यापुत्रः । प्रिया कौमुदगन्ध्या यस्याः सा प्रियकौमुदगन्ध्या । तस्याः पतिः प्रियकौमुदगन्ध्यापतिः । यत्र तु ष्यङन्तस्य प्राधान्यं तत्र भवत्येव । परमकारीषगन्धीपुत्रः । उत्तमकौमुदगन्धीपतिः । पुत्रपत्योरिति किम् ।

---

१. 'न्तेश्च घः' ख. ग. पाठः.

(अतिक्रान्ता ?) कारीषगन्ध्याकुलम् । केवलयोरिति किम् । कारीषगन्ध्यापुत्रकुलम् । कारीषगन्ध्यापरमपतिः । तत्पुरुष इति किम् । कारीषगन्ध्या पतिरस्य ग्रामस्य कारीषगन्ध्यापतिः । यद्यपि ष्यङन्ते बहवो यणः सन्ति तथापि निर्दिश्यमानस्यादेशा भवन्तीति ष्यङ एव (सम्प्रसारणम्) । सम्प्रसारणमिति चाधिकारः 'प्राग्धातोरि'ति यावत् ॥

## बन्धुनि बहुव्रीहौ ॥ १८ ॥

बन्धुशब्दे केवले उत्तरपदे बहुव्रीहौ समासे ष्यङः प्रधानस्य सम्प्रसारणं भवति । कारीषगन्ध्या बन्धुरस्य, कारीषगन्धीबन्धुः । कौमुदगन्धीबन्धुः । ष्यङ इति किम् । इभ्या बन्धुरस्य, इभ्याबन्धुः । प्रधानस्येति किम् । अतिकारीषगन्ध्याबन्धुः । ष्यङन्तप्राधान्ये तद् भवत्येव । परमकारीषगन्धीबन्धुः । बन्धुनीति किम् । कारीषगन्ध्यादुहितृकः । केवल इत्येव । कारीषगन्ध्या बन्धुधनमस्य कारीषगन्ध्याबन्धुधनः । कारीषगन्ध्यापरमबन्धुः । बहुव्रीहाविति किम् । कारीषगन्ध्याया बन्धुः कारीषगन्ध्याबन्धुः । बन्धुनीति शब्दरूपापेक्षया नपुंसकलिङ्गता ॥

## मातज्मातृकमातृषु वा ॥ १९ ॥

मातजादिषु केवलेषूत्तरपदेषु बहुव्रीहौ समासे ष्यङः प्रधानस्य सम्प्रसारणं वा भवति । कारीषगन्धी माता अस्य, कारीषगन्धीमातः । कारीषगन्ध्यामातः । कारीषगन्धीमातृकः । कारीषगन्ध्यामातृकः । कारीषगन्धीमाता । कारीषगन्ध्यामाता । एतस्मादेव वचनात् बहुव्रीहौ मातुर्मा (न्ता ? तजा)देशः । समासान्तः कबपि ऋदन्तलक्षणो विकल्पेन भवति । मातजश्चकारः अन्तोदात्तार्थः । ष्यङ इत्येव । इभ्यामातः । इभ्यामातृकः । इभ्यामाता । योऽपि 'सम्बुद्धौ मातुर्मातच् पुत्रे श्लाघ्ये' इति नित्यो मातजादेशस्तत्रापि हे कारीषगन्धीमातः । हे कारीषगन्धीमातेति सम्प्रसारणविकल्पो भवति ॥

## वचिस्वपियजादीनां लिट्यपिति ॥ २० ॥

वचिस्वपियजादीनां लिट्यपिति परतः सम्प्रसारणं भवति । वचिरिति 'वच परिभाषणे' ब्रूञादेशश्च । ऊचतुः ऊचुः । ऊचे ऊचाते । 'ञिष्वप् शये' सुषुपतुः सुषुपुः । यजादीनां खल्वपि — ईजतुः ईजुः ।

डुवप् — ऊपतुः ऊपुः । (वह् —) ऊहतुः ऊहुः । वेञः 'अपिति वा' इति विकल्पेन प्रतिषेधं वक्ष्यति । ऊवतुः ऊवुः । ववतुः ववुः । वेञादेशस्य वयो 'वयो य' इति यकारस्य प्रतिषेधाद्वकारस्य भवति । ऊयतुः ऊयुः । व्येञ् — संविव्यतुः संविव्युः । ह्वेञो ह्वित्व इति सामान्येन वक्ष्यति । (वस — ) ऊषतुः ऊषुः । वद — ऊदतुः ऊदुः । श्वयतेः सामान्येन विकल्पं वक्ष्यति । अपितीति किम् । उवाच इयाज ॥

ग्रहिव्यध्योः ॥ २१ ॥

ग्रहेर्व्यधेश्च लिट्यपिति परतः सम्प्रसारणं भवति । जगृहतुः, जगृहुः । विविधतुः, विविधुः । अपितीत्येव । जग्राह । विव्याध ॥

शिन्ङितोः ॥ २२ ॥

शिति (ङिति) च सम्प्रसारणं भवति । गृह्णाति । जरीगृह्यते । (विव्यधे वेविध्ये ? विध्यति वेविध्यते) ॥

ज्याव्रश्चभ्रस्जाम् ॥ २३ ॥

ज्यादीनां शिति ङिति च सम्प्रसारणं भवति । (जि)नाति । वृश्चति । भृज्जति । जेजीयते । वरीवृश्च्यते । बरीभृज्ज्यते ॥

पृच्छेरनङि ॥ २४ ॥

पृच्छे(र्वा ? र्धा)तोश्शिति ङिति च नङ्वर्जिते परतः सम्प्रसारणं भवति । पृच्छति । परीपृच्छ्यते । पृच्छा । अनङीति किम् । प्रश्नः ॥

वशोङर्थेपिति[1] ॥ २५ ॥

वशेङर्थपिति च परतः सम्प्रसारणं भवति । उष्टः । उशन्ति । उशन् उश(ति ? ती) ॥

व्यचोऽङिणत्यनसि[2] ॥ २६ ॥

'व्यच व्याजीकर(णे)' इत्यस्य धातोरङ्णिति प्रत्ययेऽसुन्वर्जिते परतः सम्प्रसारणं भवति । उद्विचिता । उद्विचितुम् । उद्वि-

1. 'स्तिवत्य' क., 'स्तिङ्शित्य' ख. ग. पाठः. 2. 'वेचेरन्' क. पाठः.

चितव्यम् । आङ्णितीति किम् । व्यायकः । अनसीति किम् । उरु-व्यचाः ॥

## किति चैतेषाम् ॥ २७ ॥

एतेषां षट्सूत्रनिर्दिष्टानां वच्यादिधातूनां किति च प्रत्यये परतः सम्प्रसारणं भवति । उक्तः उक्तवान् । सुप्तः, सुप्तवान् । इष्टः, इष्टवान् । उप्तः, उप्तवान् । ऊढः, ऊढवान् । उतः, उतवान् । संवीतः, संवीतवान् । हूतः, हूतवान् । उषितः, उषितवान् । उदितः, उदितवान् । शूनः, शूनवान् । गृहीतः, गृहीतवान् । विद्धः, विद्धवान् । जितः, जितवान् । वृ(ष्णः ? क्णः), वृ(ष्ण ? क्ण)वान् । (भृष्टः, भृष्टवान् ।) पृष्टः, पृष्टवान् । उ(चि ? शि)तः, उ(चि ? शि)तवान् । विचितः, विचितवान् । धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यं विज्ञायते । तेनेह न भवति । वाच-मिच्छति वाच्यति । व्याहूतार्थावेकेहववाचीति कित् । .... .... अथाक्विबन्तसु (?) .... ... विधानादिहापि प्राप्नोति ॥

## लिट्यश्विनामभ्यासस्य ॥ २८ ॥

एतेषां वच्यादीनां श्विवर्जितानां लिटि परतोऽभ्यासस्य सम्प्रसारणं भवति । उवाच उवचिथ । सुष्वाप सुष्वपिथ । उवाप उवपिथ । उवाह उवहिथ । संविव्याय संविव्यायिथ । (व्यो ? ह्वे)ञो 'द्वित्व' इति सामान्येन वक्ष्यति । तेनापि जुहाव जुहविथेति भवतः । उवाद उवदिथ । जग्राह जग्रहिथ । विव्या(थ ? ध) विव्यधिथ । जिज्यौ जिज्यिथ । वव्रश्च वव्रश्चिथ । बभ्रज्ज बभ्रज्जिथ । पप्रच्छ पप्रच्छिथ । उवास उवसिथ । विव्याच विव्यचिथ । इडर्थमिदं वचनम् । अपिति कृतसम्प्रसारणानां द्विर्वचनेन जिनादेरपिदर्थमविजित्यक्ष्यतुजिद्यः (?) । श्विपर्युदासः किम् । शिश्वाय शिश्वयिथ । न(सुव ? नु 'ह)लोऽनादेरि'ति वकारलोपेनापि तत् सिध्यति । एवं तर्ह्यनेनैतद् ज्ञापयति — (न ? ह) लोऽनादेर्लोपात् सम्प्रसारणं बलीय इति । तेन व्येञ्ज्याव्यधिव्यचीनामभ्यासे यकारस्य सम्प्रसारणं भवति । ग्रहिप्रच्छिभ्रस्जां तु रेफस्य सम्प्रसारणे लोपे वा नास्ति विशेषः । व्रश्चेतेस्तु यदि सम्प्रसारणमकृत्वा 'हलोऽनादि'लोपेन रेफो निवर्त्यते, (तदा) वकारस्य सम्प्रसारणं प्राप्नोति । अथ रेफस्य सम्प्रसारणमुरदत्वं रपरत्वं

'हलोऽनादि' लोपः क्रियते, तदा उरदत्वस्य स्थानिवद्भावात् ('न) तस्मिन्' (६-१-४६) इति वकारस्य सम्प्रसारणनिषेधो भवतीत्ययम् विशेषः ॥

### ग्रहिस्वपिप्रच्छां सनि ॥ २९ ॥

ग्रहादीनां सनि प्रत्यये सम्प्रसारणं भवति । जिघृक्षति । 'सनि ग्रहगुहोश्च' इतीडभावः । सुषुप्सति । पिपृच्छिषति । 'कृगृदृप्रच्छिभ्यश्च' इतीडागमः ॥

### स्वापेश्चङि ॥ ३० ॥

स्वापेर्ण्यन्तस्य चङि परतः सम्प्रसारणं भवति । असूषुपत् असूषुपताम् असूषुपन् । अत्र सम्प्रसारणं गुणः ह्रस्वत्वं द्विर्वचनमभ्यासदीर्घश्चे(त्यमि ?)ति क्रमः । चङीति किम् । स्वापयति ॥

### स्वपिस्यमिव्येञां यङि ॥ ३१ ॥

स्वप्यादीनां धातूनां यङि परतः सम्प्रसारणं भवति । सोषुप्यते । सेसिम्यते । वेवीयते ॥

### चायः की ॥ ३२ ॥

'चायृ पूजानिशामनयोरि'त्यस्य धातोर्यङि परतः की इत्ययमादेशो भवति । चेकीयते । दीर्घोच्चारणं यङ्लुगर्थम् । चेकीतः ॥

### प्रस्त्याप्रसंस्त्योर्निष्ठायाम् ॥ ३३ ॥

प्रपूर्वस्य संपूर्वस्य च स्त्यायतेर्निष्ठायां परतः सम्प्रसारणं भवति । प्रस्तीतः प्रस्तीतवान् । (प्रसंस्तीतः, प्रसंस्तीतवान्) सम्प्रसारणे कृते (यण्वत्ता) वि(हि ? ह)तेति निष्ठानत्वं न भवति । 'प्रस्त्यो म' इति तु पाक्षिकं मत्वं भवति । प्रस्तीमः प्रस्तीमवान् । सोपसर्गनिर्देशः किम् । स्त्यानः स्त्यानवान् ॥

### स्पर्शद्रवमूर्त्योः श्यः ॥ ३४ ॥

स्पर्शे द्रवमूर्तौ च 'श्यैङ् गतावि'त्यस्य धातोर्निष्ठायां परतः सम्प्रसारणं भवति । शीतं वर्तते । शीतो वायुः । गुणमात्रे तद्वति चार्थे स्पर्शविषयो भवति । शीनं घृतम् । शीनवद् घृतम् । द्रवावस्थायां काठिन्यं गतमित्यर्थः । स्पर्शद्रवमूर्त्योरिति किम् । संश्यानो वृश्चिकः । शीतेन संकुचित इत्यर्थः ॥

प्रतेः ॥ ३५ ॥

प्रतेरुत्तरस्य श्यायतेर्निष्ठायां परतः सम्प्रसारणं भवति । प्रतिशीनः । प्रतिशीनवान् । प्रतिपूर्वोऽयं रोगे वर्तते इति पूर्वेण (न) प्राप्नोति ॥

वाऽभ्यवाभ्याम् ॥ ३६ ॥

अभि अव इत्येताभ्यामुत्तरस्य श्यायतेर्निष्ठायां परतः सम्प्रसारणं वा भवति । अभिशीनः अभिशीनवान् । अभिश्यानः, अभिश्यानवान् । अवशीनः, अवशीनवान् । अवश्यानः, अवश्यानवान् । स्पर्शद्रवमूर्त्योरप्यनेन परत्वाद्विकल्पो भवति । अभिशीतो वायुः । अभिश्यानः । अवशीतमुदकम् । अवश्यानम् । अभिशीतं घृतम् । अभिश्यानम् । अवशीनं हिमम् । अवश्यानम् । 'श्योऽस्पर्शे' इति । केचिदभ्यवाभ्यामिति तृतीयां वाचक्षाणाः तद्योगे सगा व्यवधाने विकल्पमिच्छन्ति । अभिसंशीनः, अभिसंशीनवान् । अभिसंश्यानः, अभिसंश्यानवान् इति ॥

*स्फायः स्फी ॥ ३७ ॥

स्फायतेर्निष्ठायां परतः स्फी इत्ययमादेशो (वा) भवति । स्फीतः । स्फीतवान् । स्फातः स्फातवान् । निष्ठायामित्येव । स्फातिः ॥

श्रातेः शृतं क्षीरहविषोः ॥ ३८ ॥

श्रातेर्धातोः क्तप्रत्यये परतः क्षीरे हविषि चाभिधेये शृतं वा निपात्यते । शृतं क्षीरम् । शृतं हविः । क्षीरहविषोरिति किम् । श्राणा यवागूः ॥

श्रपेश्चैकत्र हेतौ ॥ ३९ ॥

श्रपेरेकस्मिन् प्रयोजकव्यापारे सति क्तप्रत्यये परतः क्षीरहविषोरर्थयोः शृतं वा निपात्यते । शृतं क्षीरं देवदत्तेन । श्रातिरयमकर्मकः । कर्मकर्तृविषयस्य पचेरर्थे वर्तते । स ण्यन्तः आकृतं पच्यर्थमाह । यदा तु वाह्ये प्रयोजके द्वितीयो णिजुत्पद्यते तदा न भवति । श्रपितं क्षीरं देवदत्तेन यज्ञदत्तेन वेति । क्षीरहविषोरिति किम् । श्रपिता यवागूः ॥

---

*वाभ्यवाभ्यामिति सूत्रानन्तरमस्य पाठादयमादेशो वैकल्पिक एतन्मते । पाणिनिमते तु विभाषाभ्यवपूर्वस्येति सूत्रात् प्राग् निर्देशामित्य इति विशेषः ।

प्यायः पीरनुपसर्गस्य ॥ ४० ॥

'ओप्यायी वृद्धावि'त्यस्य धातोरनुपसर्गस्य निष्ठायां परतः पी इत्ययमादेशो भवति। पीनं मुखम्। पीनौ बाहू। पीनमुरः। पीनौ स्तनौ। पीना श्रोणिः। पीनो देवदत्तः। अनुपसर्गस्येति किम्। प्राप्यानो मेघः। प्राप्यानश्चन्द्रमाः ॥

आङोऽन्धूधसोः ॥ ४१ ॥

आङ उत्तरस्य प्यायतेरन्धावूधसि चार्थे निष्ठायां परतः पी इत्ययमादेशो भवति। आपीनोऽन्धुः। आपीनमूधः। आङ इति किम्। प्रप्यानोऽन्धुः। परिप्यानमूधः। अन्धूधसोरिति किम्। प्राप्यानश्चन्द्रमाः। आङ एवेति नियमात् प्राप्यानमूध इत्यत्र न भवति। अनुपसर्गस्य पूर्वेण भवत्येव। पीनोऽन्धुः। पीनमूधः ॥

लिड्यङोः ॥ ४२ ॥

प्यायतेर्लिटि यङि च परतः पी इत्ययमादेशो भवति। आपिप्ये आपिप्याते आपिप्यिरे। आपेपीयते। प्रपेपीयते। परत्वात् पीभावे कृते पुनः प्रसङ्गविज्ञानाद् द्विर्वचनम् ॥

वा श्वेः ॥ ४३ ॥

श्वयतेर्धातोर्लिड्यङोः परतः सम्प्रसारणं वा भवति। शुशाव शुशुवतुः शुशुवुः। शिश्वाय शिश्वियतुः शिश्वियुः। शोशूयते, शेश्वीयते। लिट्यपिति यजादित्वात् प्राप्ते पिति लिटि यङि चाप्राप्त इत्युभयत्रविभाषेयं भवति ॥

णौ संश्चङोः ॥ ४४ ॥

श्वयतेर्धातोः सनि परे, चङि परे (च) णौ परतः सम्प्रसारणं वा भवति। शुशावयिषति। अशूशवत्। (शिश्वाययिषति। अशिश्वयत्) ॥

ह्वः ॥ ४५ ॥

*सम्प्रसारणं सम्प्रसारणाश्रयं च बलीयो भवति (इति शाच्छासाह्वेपामिति) युङ् न भवति। इति। योगविभागो नित्यार्थः (?) ॥

* अत्र कियांश्चिद् व्याख्याभागो गलितः प्रतिभाति।

द्वित्वे ॥ ४६ ॥

ह्वयतेर्धातोर्द्वि(व? र्व)चनविषये सम्प्रसारणं भवति । जुहाव जुहुवतुः जुहुवुः । जोहूयते । जुहूषति । 'द्वित्वे ह्व' इत्येव सिद्धे प्राग्योगस्य पृथक्करणं णिचोऽन्यस्मिन् द्विर्वचननिमित्तप्रत्ययस्य विधायके सम्प्रसारणं मा भूदिति । तेनेह न भवति । ह्वायकमिच्छति ह्वायकीयति । ततः सन् । जिह्वायकीयिषति ॥

न तस्मिन् ॥ ४७ ॥

तस्मिन्निति सम्प्रसारणं निर्दिश्यते । सम्प्रसारणे परतः पूर्वस्य य(ण): सम्प्रसारणं न भवति । विद्धः । विचितः । संवीतः । वृक्णः । एकयोगलक्षणमपि सम्प्रसारणमत एव वचनात् प्रथमं परस्य यणः क्रियते । पूर्वस्य च प्रसक्तं प्रतिषिध्यते ॥

लिटि वयो यः ॥ ४८ ॥

वेञादेशस्य वयो यकारस्य लिटि परतः सम्प्रसारणं न भवति । ऊयतुः । ऊयुः ॥

वेञः ॥ ४९ ॥

वेञो लिटि परतः सम्प्रसारणं न भवति । ववौ (विविधः?) ॥

अपिति वा ॥ ५० ॥

अपिति लिटि परतो वेञः सम्प्रसारणं न वा भवति । ऊवतुः ऊवुः । ववतुः ववुः ॥

ल्यपि ॥ ५१ ॥

वेञो ल्यपि परतः सम्प्रसारणं न भवति । प्रवाय । उपवाय ॥

ज्यः ॥ ५२ ॥

जिनातेर्ल्यपि परतः सम्प्रसारणं न भवति । प्रज्याय । उपज्याय ॥

व्यः ॥ ५३ ॥

व्येञो ल्यपि परतः सम्प्रसारणं न भवति । प्रव्याय । उपव्याय ॥

परेर्वा ॥ ५४ ॥

स्फुरस्फुलोर्घञि ॥ ५७ ॥

स्फुर स्फुल इत्येतयोर्धात्वोर्घञि परत एच आत्वं भवति । विष्फारः विष्फालः । 'स्फुरस्फुलोर्निर्निविभ्य' इति षत्वम् ॥

दीङ एज्झेतौ ॥ ५८ ॥

दीङ् क्षय इत्यस्य धातोरेज्झेतौ प्रत्यये विषयभूते ए(ङः ? चः) प्रसङ्गे आत्वं भवति । उपदाता उपदातुम् । उपदातव्यम् । उपा(दा)स्त । विषयसप्तमीनिर्देशात् पूर्वमेवात्वे सति 'ई(ष)दुपदानः' 'उपदायो वर्तत' इति आकारान्तलक्षणो युज् भवति । घञन्तलक्षणश्चाद् भवति । एज्झेताविति किम् । दीनः । उपदीयते । उपदेदीयते । उपदिदीषते ॥

ल्यपि च ॥ ५९ ॥

ल्यपि च परतो दीङ आत्वं भवति । उपदाय । अनेज्झेतुत्वात् पूर्वेण न प्राप्नोति ॥

मिम्योरखलचि ॥ ६० ॥

मिम्योरिति मिनोतेर्मीनातेर्मीयतेश्च ग्रहणम् । तयोर्ल्यपि परे खलज्वर्जिते एज्झेतौ च प्रत्यये विषयभूते एचः प्रसङ्गे आत्वं भवति । निमाय । निमाता । निमातुम् । निमातव्यम् । न्यमासीत् । अखलचीति किम् । ईषन्निमयः । दुष्प्रमयः । निमयो वर्तते । मिनोति मीनाति मीयते वा मयः । एज्झेताविति किम् । प्रमितः । निमेमीयते । मिनोतिमीनातिमीयतेः सनीसादेशाद्विशेषाभावः । निमित्सति । प्रमित्सति ॥

लियो वा ॥ ६१ ॥

लीयतेर्लिनातेश्च ल्यपि परे खलज्वर्जिते एज्झेतौ च विषयभूते एचः प्रसङ्गे वा आत्वं भवति । विलाय, विलीय । विलाता, विलेता । विलातुं, (विलेतुम्) । विलातव्यं, विलेतव्यम् । व्यलासीत् । अखलचीत्येव । ईषद्विलयो भवता । विलयो वर्तते । लयः । आलयः । प्रलयः । एज्झेतावित्येव । लीनः । विलीनः । लेलीयते । लिलीषति । लिनाति । लीयते ॥

सानि दीङः ॥ ६२ ॥

'दीङ् क्षय' इत्येतस्य सनि परतो वा आत्त्वं भवति । उपदित्सते । उपदिदीषते । अनेज्हेतुत्वादप्राप्ते केषाञ्चिन्मतेन विकल्पोऽयमारभ्यते ॥

अपगुरो णमुलि ॥ ६३ ॥

'गुरी उद्यमन' इत्यस्यापपूर्वस्य णमुलि परत एच आत्त्वं वा भवति । अपगारमपगारम् । अपगोरमपगोरम् । आभीक्ष्ण्ये णमुलि द्विर्वचनं च । अस्यपगारम् अस्यपगोरं युध्यन्ते । 'द्वितीयायाम्'(२-४-२७०) इति णमुल् ॥

चिस्फुरोर्णौ ॥ ६४ ॥

चिनोतेः स्फुरतेश्च णौ परत एच आद् वा भवति । चापयति । चाययति । स्फारयति । स्फोरयति ॥

प्रजने वियः ॥ ६५ ॥

'वी गतिप्रजनकान्त्यसनखादनेष्वि'त्यस्य धातोः प्रजने प्रथमगर्भग्रहणलक्षणेऽर्थे वर्तमानस्य णौ परत एच आत्त्वं वा भवति । पुरोवातो गां प्रवापयति । प्रवाययति । गर्भं ग्राहयतीत्यर्थः ॥

भियो हेतुभये[1] ॥ ६६ ॥

हेतोः स्वतन्त्रप्रयोजकाद् भयं हेतुभयं, तद्वृत्तेः 'ञिभी भय' इत्यस्य धातोर्णौ परत आत्त्वं वा भवति । मुण्डो भापयते । मुण्डो भीषयते । जटिलो भापयते । जटिलो भीषयते । *'भीस्म्योर्हेतुभये' (१-३-६८) इत्यात्मनेपदम् । 'भियो हेतुभये षुग्' इत्यनात्त्वपक्षे षुक् । हेतुभय इति किम् । करणाद् भये मा भूत् । कुञ्चिकयैनं भाययतीति ॥

स्मेः[2] स्मये नित्यम् ॥ ६७ ॥

स्मयतेर्धातोर्यः स्मयस्तस्मिन् वर्तमानस्य णौ परतो नित्यमेव आत्त्वं भवति । मुण्डो विस्मापयते । जटिलो विस्मापयते । हेतोरित्येव । तपसैनं विस्माययति ॥

---

१. 'तोर्भये' ख. ग. पाठः. २. 'स्मे स्मयतेर्नित्यं' ख. ग. पाठः.

---

* इदं पाणिनीयसूत्रम् । 'भीस्मिभ्यां हेतुभययेऽस्तदर्थे' (३-१-११६) इति तु सरस्वतीकण्ठाभरणस्थसूत्रपाठः.

स्मिङः [illegible] ॥ ६८ ॥

स्मिङो धातोः पुकादिषु [illegible] णौ परतो नित्यमेव आत्वं भवति । [illegible] । [illegible] । [illegible] । वञ्चयतीत्यर्थः । [illegible] ॥

क्रीङ्जीनाम् ॥ ६९ ॥

क्रीङ्[illegible] जयतेश्च णौ परतो नित्यमेव आत्वं भवति । क्रापयति । अध्यापयति । विजापयति ॥

सिध्यतेरपारलौकिके ॥ ७० ॥

परलोकः प्रयोजनमस्य पारलौकिकः । [illegible] वर्तमानस्य 'षिधू* संराद्धौ' इत्येतस्य णौ परतो नित्यमेव आत्वं भवति । अन्नं साधयति । ग्रामं साधयति । [illegible] इति किम् । [illegible] सेधयति । सिध्यति तापसः । [illegible] । तं तपः प्रयुङ्क्ते इत्यर्थः । एवं स्वान्येवैनं कर्माणि सेधयन्ति । कथमन्नं साधयति [illegible] दास्यामीति । अत्रापि सिध्यतेर्निष्पत्तिमात्रमैहिकमेवार्थः । पारलौकिकत्वं तु [illegible] प्रतीयते । कथं तपः साधयति । धर्मं साधयति । ज्ञानं साधयति । साधिना भविष्यति । कथमन्नं सेधयति ग्रामं सेधयति । सेधतिना गौणादिकेन भविष्यति । एवं तर्हि धातुभेदेनोभयत्र [illegible] । सिध्यतेरपारलौकिके ग्रामं सेधयति [illegible] मा भूत् । गौणादिकस्य तु गत्याद्यर्थस्य सिध्यत्यर्थो न सम्भवति ॥

अष्ठिवुष्वष्केरादेः षः सः ॥ ७१ ॥

ष्ठिवुष्वष्किवर्जितस्य धातोरुपदेशे आदिषकारस्य सकारादेशो भवति । 'षह सहने' 'षिध [illegible]' । षह — सहते । षिध — सेधति । षुञ् — सुनोति । अष्ठिवुष्वष्केरिति किम् । ष्ठीवति । ष्ठीव्यति । ष्वष्कते । आदिग्रहणं किम् । कषति । लषति । [illegible] न भवति । षोडीयति । षण्डीयति ॥

* [illegible]

सृपिसृजिस्तृस्त्यैसेकृवर्जं स्मिङ्स्विदिस्वदिस्व-ञ्जिस्वपयः षोपदेशाः ।

'इण्कुभ्यामादेशप्रत्यययोः सः षः' इत्यादिषत्वव्यव-स्थार्थं सादयो धातवः केचित् षोपदेशाः केचित्सोपदेशाः पठ्यन्ते । तानाचार्यः सुहृद् भूत्वोपदिशति । सृप्यादिवर्जिताः अज्दन्त्यपराः सका-रादयः स्मिङादयश्च षोपदेशाः प्रत्येतव्याः । अच्पराः — षहषिचषु-आदयः । दन्त्यपरास्तु — ष्टादयः । 'ष्मिङ् ईषद्धसने' । 'ष्विदा गात्रप्रक्षरणे' । 'ष्वद आस्वादे' । 'ष्वञ्ज परिष्वङ्गे' । 'ञिष्वप् शये' । एतेषामेषाम् इणादिनिमित्तसद्भावे षत्वं भवति । विषहते । नि-षिञ्चति । अभिषुणोति । अभिष्टौति । तिष्ठासति । विसिष्मिये । सिष्वेद । असिष्वदत् । परिष्वजते । सुष्वाप । अजदन्त्यपरा इति किम् । सुस्राव । सुस्रूषति । सृप्यादिवर्जमिति किम् । 'सृप्लृ गतौ' । सिसृप्सति । 'सृज विसर्गे' सिसृक्षति । 'सृ गतौ' सिसीर्षति । 'स्तृञ् आच्छादने' । तिस्ती-र्षति । 'स्तृञ् आच्छादने' क्र्यादिकः । तिस्तीर्षति । 'स्त्यै शब्दसङ्घाते' तिस्त्यासति । 'सेकृ गत्यर्थः' । सिसेकिषते । ष्विदादीनां षोपदेशत्वादानाद् वकारस्य दन्त्योष्ठस्य दन्त्यग्रहणेन ग्रहणं न भवति । '(षु ? सु)शब्दे' । सुषूर्षति । 'स्व(स ?)न—' असि(ष्वनः ? स्वनत्) ॥

णो नः ॥ ७२ ॥

धातोरुपदेश य आदिणकारस्तस्य नकारः अन्तादेशो भवति । णम—नमति । णीञ्—नयति । णू—नौति । आदिरित्येव । अणति । र(ण)ति । ष्ठिवुष्वष्किसृष्टग्रहणादिह (न) भवति । णकारमिच्छति णकारीयति । णकार इवाचरति णकारायते ॥

नृतिनन्दिनर्दिनक्किनाटिनाधृनाथृवर्जं नादयो णोपदेशाः ॥

'उपसर्गादसमासेऽपि णोपदेशस्य' (इति) णत्वव्यवस्थार्थं नादयो धातवः केचिण्णोपदेशाः पठ्यन्ते । तानाचार्यः सुहृद् भूत्वोपदिशति । नृत्यादीन् वर्जयित्वा सर्व एव (णा ? ना)दयो णोपदेशाः प्रत्येतव्या इति । प्रणमति । प्रणयति । प्रणौति । नृत्यादिवर्जमिति किम् । 'नृती गात्रविक्षेपे' प्रनृत्यति । 'टुनदि समृद्धौ' प्रनन्दति । 'नर्द शब्दे' प्रनर्दति । 'नक्क नाशने' प्रनक्क-

यति । 'नट अवस्कन्दने' । चुरादिरिदन्तः । प्रनाटयति । 'नाधृ नाथृ याच्ञोपतापैश्वर्याशीःषु' । प्रनाधते । प्रनाथति । (न ? ना)टिग्रहणाद् 'नट नृत्ताविति' ति भौवादिको णोपदेशः । प्र(न ? ण)टति प्र(ना ? णा) टयति ॥

य्वोर्वलि लोपः ॥ ७३ ॥

यकारवकारयोर्वलि परतो लोपो भवति । क्नूयी—क्नोपयति । ऊयी—ऊतम् । 'गोवायाः हृक्' । गौधेरः । पचेत् । दिदिवान् । शिशिवान् । 'आस्त्रेमाणम्' । (किरदद्वः' ? जीरदानुः) । वलीति किम् । कुप्यन्ति । दिवयते ॥

वेरनचः ॥ ७४ ॥

विरित्येतस्यानच्कस्य लोपो भवति । विच् शुभंयाः । किन्—घृतस्पृक् । विधृक् । क्विप्—ग्रामणीः । (विपः ?) अश्वाति । अनच इति किम् । दर्विः । जागृविः ॥

हलस्तिप्सिपः ॥ ७५ ॥

हल उत्तरस्य तिपः सिपश्चानच्कस्य लोपो भवति । अविभर्भवान् । अजागर्भवान् । अभिनोऽत्र । '(दा ? दो) रुरि'ति रुत्वम् । हल इति किम् । अपचत् । अपचः । तिप्सिप इति किम् । अभैत्सीत् । अरौत्सीत् । अनच इत्येव । जागर्ति । जागर्षि । विचे अटेटिथ (?) ॥

सोः ॥ ७६ ॥

हल उत्तरस्यानच्कस्य सोर्लोपो भवति । राजा । तक्षा । दृषत् । विद्युत् । हल इत्येव । वृक्षः । अनच इत्येव । दृषत्सु ॥

ङ्यापो दीर्घात् ॥ ७७ ॥

दीर्घात् ङ्यन्ताद् दीर्घादाबन्ताच्च परस्यानच्कस्य सोर्लोपो भवति । ङीप्—कुमारी । ङीष्—गौरी । ङीन्—शार्ङ्गरवी । टाप्—खट्वा । डाप्—बहुराजा । चाप्—कारीषगन्ध्या । ङ्याप इति किम् । स्त्री ग्रामणीः । कीलालपाः । शुभंयाः । दीर्घादिति किम् । निष्कौशाम्बिः । अतिखट्वः । अनच इत्येव । कुमारीषु । खट्वासु ॥

एङ्ह्रस्वात् सम्बुद्धेरनतः ॥ ७८ ॥

एङन्ताद् ह्रस्वान्ताच्च परस्य सम्बुद्धिसंज्ञकस्य सोरनकारभाविनो लोपो भवति । हे अग्ने ! । हे वायो ! । हे प्रभो ! । हे नदि ! । हे वधु ! । हे कुण्ड इति परत्वादम्भावाल्लोपः । एङ्ह्रस्वादिति किम् । हे श्रीः । हे भ्रूः । सम्बुद्धेरिति किम् । वृक्षः । अग्निः । अपृक्त इति किम् । हे कतरत् । नित्यत्वात् परत्वाच्च सम्बुद्धिलोपो बलीयानित्येङ्ग्रहणं क्रियते ॥

ह्रस्वस्य पिति कृति तुक् ॥ ७९ ॥

ह्रस्वान्तस्य धातोः पिति कृति प्रत्यये परतस्तुगागमो भवति । जगत् अग्निचित् सोमसुत् । पुण्यकृत् । आगत्य । विजित्य । प्रस्तुत्य । प्रहृत्य । ह्रस्वस्येति किम् । ग्रामणीः । आलूय । पितीति किम् । चितं भृतम् । हृतम् । कृतीति किम् । पचति । भवति । पटु पटुतरः । ग्रामणि कुलमिति बहिरङ्गस्य ह्रस्वस्यासिद्धत्वात् , (वृत्र ? ब्रह्म)कुलमिति च न-लोपस्य पूर्वत्रासिद्धत्वान्न भवति ॥

संहितायां छे ॥ ८० ॥

परः सन्निकर्षः, संहिता । तस्यां विषये छे परतो ह्रस्वस्य तुगागमो भवति । गच्छति । इच्छति । ऋच्छति । राजच्छत्रम् । वृक्षच्छाया । संहितायामिति किम् । वृक्षस्य छाया । ब्राह्मणस्य छत्रम् । क्व पुनरियं संहिता भवति । उच्यते —

"संहितैकपदे नित्या नित्या धातूपसर्गयोः ।
नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥"

इति । ह्रस्व एवागमी, न तदन्तः । तेन चिच्छिदतुः चिच्छिदुरित्यत्र तुगभ्यासग्रहणेन न गृह्यत इति 'हलोऽनादेरि'ति तस्य लोपो न भवति ॥

आङ्माङोः ॥ ८१ ॥

आङो माङश्च छे परतस्तुगागमो भवति । आच्छाया । आच्छिनत्ति । आच्छायायाः । मा च्छैत्सीत् । माच्छिदत् । ङिता ग्रहणं किम् । आच्छायां मन्यसे, आ छायाम् । आच्छाया मा भूत्, आ छाया । माच्छिदत्, मा छिदत् भवान् । प्रमाच्छन्दः, प्रमाछन्दः । 'पदान्तस्य वे'ति विकल्प एव भवति ॥

दीर्घस्य ॥ ८२ ॥

दीर्घस्य छे परतस्तुग्भवति । ह्रीच्छति । म्लेच्छति । चाच्छायते । चोच्छुप्यते ॥

पदान्तस्य वा ॥ ८३ ॥

पदान्तस्य दीर्घस्य छे परतस्तुगागमो वा भवति । शिंशपाच्छाया, शिंशपाछाया । बदरीच्छाया बदरीछाया । जम्बूच्छाया, जम्बूछाया ॥

इको यणचि ॥ ८४ ॥

इकः स्थानेऽचि परतः संहितायां विषये यणादेशो भवति । 'स्थानेऽन्तरतम' (१-२-२९) इतीवर्णस्य यकारः । दध्यत्र । नद्येषा । उवर्णस्य वकारः । मध्वत्र । वध्वानयम् । ऋवर्णस्य रेफः । कर्त्रर्थम् । क्रादयः । ऌवर्णस्य लकारः । अनुबन्धः(?) लाकृतिः । संहितायामित्येव । दधि अत्र । मधु अत्र ॥

एचोऽयवायावः ॥ ८५ ॥

एचः स्थानेऽचि परतो यथासङ्ख्यम् अय् अव् आय् आव् इत्येते आदेशा भवन्ति । चयनम् । लवनम् । चायकः । लावकः ॥

यि प्रत्ययेऽवावौ ॥ ८६ ॥

यकारादौ प्रत्यये परे एचो यथासङ्ख्यमवावादेशौ भवतः । गव्यति । नाव्यति । गव्यम् । नाव्यम् । बाभ्रव्यम् । शङ्कव्यम् । यीति किम् । गोभ्यां, नौभ्याम् । प्रत्यय इति किम् । गोयानम् । नौयानम् । अवावाविति किम् । रायमिच्छति रैयति ॥

धातोस्तन्निमित्तस्यैव ॥ ८७ ॥

धातोः सम्बन्धिन एव यकारादिप्रत्ययनिमित्तस्यैव यिप्रत्यये परतो यथास्नमवावादेशौ भवतः । लव्यम् । पव्यम् । अवश्यलाव्यम् । धातोरिति किम् । प्रातिपदिकस्य नियमो मा भूत् । तथा सति बाभ्रव्यः शङ्कव्य इत्यत्रैव स्यात्, न तु गव्यं नाव्यमिति । तन्निमित्तस्येति किम् । उपोयते । औयत । लौयमानिः । एवकार इष्टतोऽवधारणार्थः । विपरीतावधारणे बाभ्रव्य इति न स्यात् । अ(वावावि)त्येव । चेयं जेयम् ॥

गव्यूतिरित्यध्वमाने ॥ ८८ ॥

गव्यूतिरित्यध्वमाने निपात्यते । गवां यूतिः गव्यूतिः, क्रोशयुगम् । अध्वमान इति किम् । गोयूतिः । कथं शरव्यम् । शरशब्दात् शरसमानार्थाद् उवर्णान्तलक्षणो यत् । शरान् व्ययतीति वा कर्मोपपदः को भविष्यति ॥

शक्ये क्षिज्योरय्[२] ॥ ८९ ॥

क्षिज्योः सम्बन्धिनः एचः शक्यार्थे यो यकारादिप्रत्ययस्तस्मिन् परतः अय् इत्ययमादेशो भवति । शक्यः क्षेतुं, क्षय्यो व्याधिः । शक्यो जेतुं, जय्यः । शक्य इति किम् । क्षेयं पापम् । जेयो वृषलः । क्षिज्यो-रिति किम् । शक्यश्चेतुं चेयोऽग्निः ॥

क्रियः[३] क्रियार्थे ॥ ९० ॥

क्रीणाते(रचि?रेचो यि) प्रत्यये परतः अयादेशो भवति, क्रियाप्रयो-जनं चेत् समुदायार्थो भवति । क्रय्यो गौः । क्रय्यः कम्बलः । क्रयार्थं यः प्रसारितः स एवमुच्यते । क्रियार्थ इति किम् । क्रेयं नो धान्यं, न चास्ति क्रय्यम् ॥

एकः पूर्वपरयोः ॥ ९१ ॥

द्वयोः स्थाने एक आदेशो भवतीति वेदितव्यम् । वक्ष्यति 'आद्-गुणः' (६-१-९६) । तत्रा(चि) पूर्वस्यावर्णस्यावर्णात् परस्य (वा ? चा) चः स्थान एको गुणो भवति । देवेन्द्रः । गङ्गोदकम् । पूर्वपरग्रहणं द्वयोरपि युगपदादेशप्रतिपत्त्यर्थम् । एकैकस्यैव हि स्यात्, नोभे सप्तमीपञ्च-म्यौ युगपत् प्रकल्पिके च भवत इति ॥

अन्तादिवच्च ॥ ९२ ॥

योऽयं पूर्वपरयोर्गुणादिक आदेशः स पूर्वस्यान्तवद् भवति । (परस्या-दिवद् भवति ।) द्वादशान्यिकः । अत्र सवर्णदीर्घस्य पूर्वं प्रत्यन्तवद्भावात् 'बह्वच्पूर्वपदात्'(४-४-१२३)इति बहुवद्भवति(?) । क्षीरपेणेत्यादगुणः* ।

१. 'त्यूर्ध्वमा' M. U. S. पाठः. २. 'ज्योरय्' ख. ग. पाठः. ३. 'या' M. U. S. पाठः

* इतः परं कियांश्चित् ग्रन्थो गलितः प्रतिभाति ।

पूर्वं प्रत्यन्तवद्भावात् 'उदके सिञ्चे' (८-४-१०९) इति पूर्वपदान्तोदात्तत्वं भवति । प्राणितति गतिङ्(? इन्त)योरेकादेशस्य पूर्वं प्रत्यन्तवद्भावात् 'गत्युपपदकारकेभ्यः' (८-४-१५५) इति पूर्वपदप्रकृतिस्वरत्वं भवति ॥

नाभ्यासोपसर्जनसम्बुद्धिनपुंसकह्रस्वत्वोभयाश्रयवर्णविधिषु ॥ ९२ ॥

सुखप्रतिपत्यर्थमारभ्यमाणेऽन्तादिवद्भावेऽतिप्रसङ्गो मा भूदिति प्रतिषेध आरभ्यते । अभ्यासादीनां ह्रस्वविधौ (उभयाश्रयविधौ वर्णविधौ) चान्तादिवद्भावो न भवति । उपेयाज । उपोवाह । अत्रोप(देशा ? शब्दा)भ्यासयोरेकादेशस्याभ्यासं प्रत्यादि(ना ? वद्)भावाद्, 'ह्रस्वः '(७-२-१२३)इति ह्रस्वो न भवति । निष्कौशाम्बीदं, निर्वाराणसीदम् । उपसर्जनेदमोरेकादेशस्य पूर्वं प्रत्यन्तवद्भावादुपसर्जनह्रस्वो न भवति । अम्बात्र कुमारीदमिति सम्बुद्धिपरपदयोरेकादेशस्य पूर्वं प्रत्यन्तवद्भावाद् अम्बार्थानां ह्रस्वो न भवति । पद्मारागश्रीदं, ग्रामणीदं कुलमिति पूर्वं प्रत्यन्तवद्भावान्नपुंसकह्रस्वो न भवति । प्रोह्यते । उपोह्यते । अभीयात् । परीयादिति । धातूपसर्गयोरेकादेशे कृते 'उपसर्गादूहो ह्रस्वः', (७-२-७३) (एतेर्लिङि ? लिङीणः) (७-२-७४) इति च धातुमुपसर्गं चाश्रित्य प्रत्ययेवर्तमाने उभयाश्रयह्रस्वो न भवति । अथ वर्णविधयः— खट्वाभिर्मालाभिरित्यादावकारयोरेकादेशस्य पूर्वं प्रत्यन्तवद्भावाद् 'अतो भिस ऐस्' (३-१-१५७) न भवति । जुहावेति ह्वयतेः सम्प्रसारणाकारयोरेकादेशस्य परं प्रत्यादिवद्भावाद् 'आत औ णलः' (३-१-१२)इत्यौत्वं न भवति । (अस्या अश्व इति) (तुध्योरेका-देशस्य ? स्यच्तुर्थ्योरेकादेशस्य) (परं) प्रत्यादिवद्भावाद् 'एङोऽति पदादौ' (६-१-१२९) इति प्ररपूर्वत्वं न भवति । एतदपि न वक्तव्यम् । उपेयाजेत्यादिग्रामणीदमितिपर्यन्तेषु द्विपदाश्रयत्वादेकादेशो बहिरङ्गः, ह्रस्वोऽन्तरङ्गः । तत्र 'असिद्धं बहिरङ्गमन्तरङ्गे' (१-२-८४) इत्येकादेशस्यासिद्धत्वाद्ध्रस्वो न भवति । प्रोह्यते उपोह्यते अभीयात् परीयादित्येकस्योभ(यापेक्षायां) पारतन्त्र्यविरोधादेवान्तादिवद्भावो न भविष्यति । तथाहि— अन्तादिशब्दाववयवविशेषवाचिनौ । तत्र यदि पूर्वं प्रत्यवयवबुद्ध्या एकादेश आश्रीयते, तदा तस्यैव परं प्रति कथमादिवत्ता च

स्यात् । एवं परं प्रत्यादिवत्त्वे पूर्वं प्रत्यन्तवद्भा(वभा)वात् अत आत एङ इति वर्णविशिष्टरूपाश्रया ऐसादयोऽन्तादिवद्भावस्य रूपातिदेशादन्तवद् (न) भविष्यन्ति । रूपातिदेशे चास्य तुक्यसिद्धवचनं ज्ञापकम् । यदि हि वर्णरूपाश्रयो वि(धे? धि)रनेनातिदिश्येत, तदाधीत्य प्रेत्यादावेकादेशस्य ह्रस्वं प्रत्यादिवद्भावात् तुकः सिद्धत्वात् तुकमसिद्धत्वं न ब्रूयात् । तदेतदपि इमं न्यायमप्रतीनां प्रत्ययं(?)मुपदिश्यते ॥

षत्वतुकोरसिद्धः ॥ ९४ ॥

षत्वे तुकि च कर्तव्ये एकादेशोऽसिद्धो भवति । कोऽसिचत् । कोऽस्वपत् । अत्र 'एङोऽति पदांदौ'(६-१-१२९) इति एकादेशस्य परं प्रत्यादिवद्भावादिण उत्तरस्यादेशसकारस्य षत्वं प्राप्नोति । तदसिद्धत्वान्नभवति । एवं कोऽस्य योऽस्य इति प्रत्ययसकारस्य । उपेत्य अधीत्येत्येकादेशस्यासिद्धत्वात् 'ह्रस्वस्य पिति कृति तुग्'(६-१-७१) इति तुग् भवति । एतदपि न वक्तव्यम् — द्विपदाश्रयस्यैकादेशस्य बहिरङ्गस्यान्तरङ्गयोः षत्व तुकोरसिद्धत्वात् । एवन्तर्ह्येतदेव ज्ञापयति अचोरानन्तर्ये 'असिद्धं बहिरङ्गमन्तरङ्गे'(१-१-८४)'इति परिभाषा नोपतिष्ठते । तेनाक्षद्यूः हिरण्यद्यूरित्यत्र ऊठोऽसिद्धत्वाभावाद् यणादेश उपपन्नो भवति ॥

न सम्प्रसारणङीट्सु ॥ ९५ ॥

सम्प्रसारणे ङौ इटि च एकादेशः (नयकारो ?) असिद्धो न भवति । सम्प्रसारणे— शकहूषु । परिवीषु । अत्र सम्प्रसारणपूर्वकैकादेशस्यासिद्धवद्भावप्रतिषेधादिण उत्तरस्य प्रत्ययसकारस्य षत्वं भवति । (वृक्षेच्छत्रं) वृक्षे छत्रं, पचेच्छत्रं पचे छत्रमिति सप्तम्येकवचने आत्मनेपदोत्तमैकवचने (चा ? च) गुणैकादेशस्यासिद्धत्वप्रतिषेधाद् दीर्घस्य 'पदान्तस्य वा' (६-१-८३)इति तुग्विकल्पः सिद्धो भवति ॥

आद्गुणः ॥ ९६ ॥

अचीत्यनुवर्तते । अवर्णात् परो योऽच् अचि पूर्वो योऽवर्णस्तयोः पूर्वपरयोरवर्णाचोः स्थाने (गुण) एकादेशः । तत्र स्थानेऽन्तरतम इवर्णावर्णयोरेकारः, (उवर्णावर्णयोरोकारः) शेषे अकारः । तवेदम् । तवेह ।

खट्वेयम् । खट्वेदृशी । तवोदकम् । (तवौदनं?) खट्वोदकम् । प्रश्नोहते । तवर्षभः । खट्वर्कारः । तवल्कारः । खट्वल्कारः । अवर्णे दीर्घं वक्ष्यति, एचि वृद्धिमित्यचामिक एवावशिष्यन्ते । अचीति किम् । देवगृहम् । गङ्गा वहति । 'अदेङ्गुणः' (१-१-८१) इति गुणसंज्ञाविधौ तपरकरणात् त्रिमात्रचतुर्मात्राणां स्थानिनां त्रिमात्रचतुर्मात्रा आदेशा न भवन्ति ॥

## वृद्धिरेवाद्यटः ॥ ९७ ॥

पदादेरटः परो योऽच् अचि च पूर्वो योऽट्-तयोः पूर्वपरयोरडचोः स्थाने वृद्धिरेवैकादेशो भवति । तत्राप्यन्तरतम्यादिवर्णे एकारैकारयोश्च ऐकारः, उवर्णे ओकारौकारयोश्चौकारादेशो भवति । शेषेष्वाकारः । ऐच्छद् ऐच्छ(त ? ताम्) ऐच्छन् । ऐश्वर्यमैच्छन् । औहिष्ट । औणिणत् । औषध(मि ? मै)च्छत्, औषधीयत् । आटत् । आस्थत् । आध्नोत् । 'ऋ गतौ' (क्रैया ? सौवा) दिकः । आर्षीत् । एवकारः किम् । (उ ? ओ) ङ्कारमैच्छत् । औङ्कारीयत् । ओढामैच्छत्, औढीयत् । (औ ? उ)स्रामैच्छत्, औस्रीयत् । (आसीयम् ?) ऐजत् । 'ओमाङोः' (६-१-११३) 'उस्यपदादौ' (६-१-११४) 'अतो गुण' (६-१-११५) इति पररूपं (बाधित्वा) आदिवृद्धिरेव भवति । आदिग्रहणं किम् । अस्वपोऽत्र । अश्वसोऽत्र । 'रुदिस्वपिश्वस्यनिजक्षिभ्योऽट् च' (७-२-३४) इत्यस्य न भवति । कथमायन् आसन् इति । अत्र हीणस्त्योर्यणल्लोपयोः कृतयोरनजादित्वाद् वृद्धिर्न प्राप्नोति । अन्तरङ्गत्वात् प्रागेव भविष्यति ॥

## एचि[1] ॥ ९८ ॥

अवर्णाद्य परो य एच् तयोः पूर्वपरयोर्वृद्धिरेकादेशो भवति । आद्गुणस्यापवादः । कहैडका । स्वपैडका । ब्रह्मौदनः । खट्वौदनः । ब्रह्मैतिकायनः । खट्वैतिकायनः । ब्रह्मौपगवः । खट्वौपगवः । वृक्षौ । भवयौ । खट्वायै । सर्वस्यै । (अवर्णादि)त्येव । दध्येतत् । दध्यैच्छत् । दध्योदनः । साध्वौषधम् ॥

१. 'चि प्राङेङो वृद्धिः । अ' क. पाठः.

इणेधोः ॥ ९९ ॥

अवर्णात् परो य इणेधत्योरेच् तस्मिन् पूर्वं यदवर्णं तयो- र्वृद्धिरेकादेशो भवति । उपैति । उपैधते । एचीत्येव । उप इतः, उपेतः । 'पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते न परान्' (१-२-१०३) इति 'एङि पररूपम्' (६-१-१०८) एवानेन बाध्यते न तु 'ओमाङोः' (६-१-११३) इति । आ इहि, एहि, उप एहि, उपेहि ॥

ऊठि ॥ १०० ॥

अवर्णात् परो य ऊठ् तस्मिन् ऊठि पूर्वं यदवर्णं तयोर्वृद्धिरेकादेशो भवति । धौतः । धौतवान् ॥

अक्षादूहिन्याः ॥ १०१ ॥

अक्षादूहिन्यां परतः अवर्णाचोर्वृद्धिरेकादेशो भवति । अक्षौहिणी सेना ॥

स्वादीरेरिणोः ॥ १०२ ॥

स्वशब्दादीरेरिणोः परतः अवर्णाचोर्वृद्धिरेकादेशो भवति । स्वैरः । स्वैरी । स्वैरिणी । स्वैरशब्दान्मत्वर्थीयेन हि (इ)ना[1] सिद्धे पृथगीरि- ग्रहणं ताच्छीलिकादिनन्ते गुणो मा भूदिति ॥

प्रादूढोढ्येषैष्येषु ॥ १०३ ॥

प्राद् ऊढ ऊढि एष एष्येषु परतः अवर्णाचोर्वृद्धिरेकादेशो भवति । गुणपररूपयोरपवादः । प्रौढः । प्रौढिः । प्रैषः । प्रैष्यः ॥

ऋते तृतीयासमासे ॥ १०४ ॥

ऋतशब्दे परतो यदवर्णं तस्मात् परो योऽच् तयोस्तृतीयासमासे वृद्धिरेकादेशो भवति । सुखेन ऋतः, सुखार्तः । दुःखार्तः । ऋत इति किम् । सुखेतः । तृतीयाग्रहणं किम् । परमर्तः । समास इति किम् । सुखेनर्तः ॥

प्रवत्सतरकम्बलवसनार्णदशानामृणे ॥ १०५ ॥

१. 'इ' ख. ग. पाठः.

ऋणे परतो ये प्रादयस्तेभ्यश्च परो य ऋवर्णस्तत्रावर्णाचोर्वृद्धिरेकादेशो भवति । प्रगतमृणं, प्रार्णम् । दशार्णं, दशानामृणम् । दश ऋणान्यस्य दशार्णः क्षत्रियः, तस्यापत्यानि दशार्णाः, तेषां निवासो दशार्णो जनपदः । दश ऋणानि जलदुर्गाणि य (स्य ? स्याः) दशार्णा नदी । ऋणे ऋणमृणार्णम् । वसनानामृणं वसनार्णम् । एवं कम्बलार्णं, वत्सतरार्णम् ॥

## उपसर्गादृति धातौ ॥ १०६ ॥

अवर्णान्तादुपसर्गादृकारादौ धातौ परतः पूर्वपरयोरवर्णाचोर्वृद्धिरेकादेशो भवति । प्रार्च्छति । परार्च्छति । प्रार्ध्नोति । उपार्ध्नोति । उपसर्गादिति किम् । खट्वर्च्छति । आदित्येव । (परप्रर्च्छति ? पर्यृच्छति) ऋतीति किम् । प्रेजति । तपरकरणं किम् । उप ऋकारमिच्छति, उपकारीयति । उत्तरसूत्रेण विकल्पः । 'यत्क्रियायुक्ताः प्रादयस्तत् प्रत्युपसर्गाः' । तेनेह न भवति । प्रगता ऋच्छका अस्मात् प्रर्च्छको देशः । उपसर्गसम्बन्धादेव धातौ लब्धे पुनर्धातुग्रहणं 'ऋद्लत्यकः'(६-१-१४३) समासेऽपी'ति पक्षे प्रकृतिभावो ह्रस्वश्च धातोर्मा भूदिति ॥

## वा सु(ब्ल्यु ? ब्लृ)ति च ॥ १०७ ॥

सुब्धातौ ऋकारादौ लृकारादौ च परतः यः अवर्णान्त उपसर्गस्तयोरवर्णाचोर्वृद्धिरेकादेशो वा भवति । प्रार्षभीयति । प्रर्षभीयति । उपाल्कारीयति । उपल्कारीयति ॥

## एङि पररूपम् ॥ १०८ ॥

अवर्णान्तादुपसर्गादेङादौ धातौ परत एङवर्णयोः पररूपमेकादेशो भवति । प्रेलयति । प्रोषति । प्रोखति । वा सुपीत्येव । उपेडकीयति, उपैडकीयति । उपोदनीयति । उपौदनीयति ॥

## अनियोग एवे ॥ १०९ ॥

1. 'प्यनुचीति' क. 'ल्युति' ग, M. U. S. पाठः.

नियोजनं नियोगो व्यापारणम् । अनियोगोऽव्यापारणं तस्मिन् गम्यमाने अ(वृत्ता ? वर्णा)न्तादेवशब्दे परत एङवर्णयोः पररूपमेकादेशो भवति । अद्येव यास्यसि । इहेव स्थास्यति । अनियोग इति किम् । अद्यैव गच्छ । इहैव तिष्ठ । 'स्वस्यैवैतन्मतं न पाणिनिभाष्यकारयोरि'ति केचित् । तथा हि तत्प्रयोगा दृश्यन्ते— 'अमैवाव्ययेन'(पा० २-२-२०) 'धातोस्तन्निमित्तस्यैव' (पा० ६-१-८०) 'तपस्तपःकर्मकस्यैव' (पा० ३-१-८८) 'लङः शाकटायनस्यैव' (पा० ३-४-१११) येनैव हेतुना वाक्यं भवति तेनैव वृत्तिः प्राप्नोति । 'यथैव तर्हि इजैव स्यात्' इति । नच लौकिकेष्वपि प्रयोगेषु क्वचित् पररूपं दृश्यते । तद्यथा— यदैव पूर्वं ज्वलने शरीरम्.... ... चोरुः र(?) अद्येव वा रणरणमुपागतरसैव कोपि वने .... .... .... .... पुरुषः स्थास्यतीति ॥

ओष्ठोत्वोः समासे वा ॥ ११० ॥

अवर्णादोष्ठोत्वोः परतः (य ? ओ)दवर्णयोः पररूपमेकादेशः समासे वा भवति । बिम्बोष्ठः, बिम्बौष्ठः । स्थूलोतुः, स्थूलौतुः । समास इति किम् । हे छात्रौष्ठं पश्य । अद्यौतुं पश्य ॥

शककुलपतादिभ्योऽन्धटाञ्जल्यादिषु ॥ १११ ॥

शकादिभ्योऽकारान्तेभ्योऽन्ध्वादिषु परतः पूर्वपरयोः पररूपमेकादेशो भवति । शकानामन्धुः शकन्धुः । कुलान्यटतीति कुलटा । पतोऽञ्जलेः, पतञ्जलिः । आदिग्रहणाद्धलीषा लाङ्गलीषा मनीषा इत्यादिभ्यो भवन्ति । कथं त्वै तुवै इति । निपातान्तरत्वाद् भविष्यति ॥

सीमन्तः केशेषु ॥ ११२ ॥

केशविषये सीमशब्दादन्तशब्दे परतः पररूपं निपात्यते । सीमन्तः । केशेष्विति किम् । ग्रामसीमान्तः ॥

ओमाङोः ॥ ११३ ॥

अवर्णादोमाङोः परतः पररूपमेकादेशो भवति । अद्य ओम् अद्योम् । का ओम् इत्यवोचत् , कोमित्यवोचत् । आ ऊढा ओढा । अद्य ओढा अद्योढा । (ओमाङोरिति किम् ।) सा ऊढा । सोढा । आ ऋ-

श्यात्, अर्श्यात्। खट्वा (ऋ?अ)श्यात् खट्वश्यात्। दीर्घत्वमपि बाधते। आङि पररूपवचनमन्तरङ्गबलीयस्त्वं ज्ञापयति॥

उस्यपदादौ॥ ११४॥

अवर्णादुस्यपदादौ परतः पररूपमेकादेशो भवति। भिन्द्युः। छिन्द्युः। अदुः। अधुः। अपदादाविति किम्। का उस्रा, कोस्रा। का उषिता, कोषिता। आदित्येव। चक्रुः। अबिभयुः॥

अतो गुणे॥ ११५॥

अकारादपदादौ गुणे परतः पूर्वपरयोः पररूपमेकादेशो भवति। पचन्ति। दीव्यन्ति। पचे। सम्पद्ये। अत इति किम्। यान्ति गुण इति किम्। वृक्षे। अपदादाविति किम्। दण्डाग्रम्॥

अव्यक्तानुकरणस्यानेकाचोऽत इतौ॥ ११६॥

अव्यक्तस्यापरिस्फुटवर्णस्य शब्दस्य यत् परिस्फुटवर्णमनेकाच्करणं तस्याच्छब्दस्य इतौ परतः पूर्वपरयोश्चा(चै?दि)कारयोः पररूपमेकादेशो भवति। पटत् इति, पटिति। टसत् इति, टसिति। अव्यक्तानुकरणस्येति किम्। जगदिति। अनेकाच इति किम्। स्रदिति। अत इति किम्। मरुदिति। तकारः किम्। दकारान्तस्य मा भूत्। इताविति किम्। पटदत्र॥

न द्वित्वे॥ ११७॥

अव्यक्तानुकरणस्य शब्दस्य इतौ परतः द्विर्वच(नं?ने) न भवति। पटत्पटदिति। आभीक्ष्ण्ये द्विर्वचनम्। समुदायानुकरणस्य द्विर्वच(न?ना)भावान्न प्रतिषेधः। पटत्पटेति करोति॥

तो वा॥ ११८॥

अव्यक्तानुकरण(स्य चरा? स्याच्छ)ब्दान्तस्यानेकाचो द्वित्वे सति योऽन्त्यस्तकारस्तस्येतौ परतः पररूपमेकादेशो वा भवति। (पटत्पटेति)। पटत्पटदिति करोति॥

कारः । होतॄकारः । समुदायान्तरतमस्य वर्णस्य च दीर्घाभावाद् ॠकारः क्रियते ॥

शसि पूर्वसवर्णः ॥ १२४ ॥

अकः शसि परतः पूर्वपरयोः पूर्वसवर्णदीर्घ एकादेशो भवति । वृक्षान् । अग्नीन् । कर्तॄन् । खट्वाः । मालाः । वधूः । नदीः । मातॄः । दुहितॄः । अक इति किम् । रायः । वनानि ॥

ततः शसो नः पुंसि ॥ १२५ ॥

तस्मात्(शसि ?) पूर्वात् सवर्णदीर्घादुत्तरस्य(शसो) वर्णस्य पुंसि नकारादेशो भवति । वृक्षान् । अग्नीन् । वायून् । कर्तॄन् । तत इति किम् । (एतद् गायस्य ! ? एतान् गाः पश्य ।) पुंसीति किम् । बुद्धीः । धेनूः ॥

आज्जसि ॥ १२६ ॥

अवर्णाज्जसि परतः पूर्वपरयोः पूर्वसवर्णदीर्घ एकादेशो भवति । वृक्षाः । खट्वाः । आदिति किम् । नद्यः । वध्वः । 'अतो गुणे'(६-१-११५) इति पररूपं बाध्यते ॥

इदुद्भ्यामौति ॥ १२७ ॥

इकारादुकाराच्च प्रथमाद्वितीययोरौकारे परतः पूर्वपरयोः पूर्वसवर्णदीर्घं एकादेशो भवति । अग्नी तिष्ठतः । वायू तिष्ठतः । इदुद्भ्यामिति किम् । वृक्षौ । खट्वे । कुण्डे । तपरकरणं किम् । नद्यौ । वध्वौ । 'लक्षण-(प्रतिपदोक्तयोः) प्रतिपदोक्तस्य' (१-२-७५) इति वचनादिह न भवति । सख्यौ । पत्यौ ॥

अणोऽमि पूर्वः ॥ १२८ ॥

अणोऽमि परतः पूर्वपरयोः स्थाने पूर्व एकादेशो भवति । वृक्षम् । खट्वाम् । अग्निम् । नदीम् । वायुम् । वधूम् । बुद्धिम् । धेनुम् । अण इति किम् । रायम् । नावम् ॥

सम्प्रसारणात् ॥ १२९ ॥

सम्प्रसारणादचि परतः पूर्वपरयोः पूर्वरूपमेकादेशो भवति । इष्टम् ।

गृहीतम् । अन्तर(ङ्गौ ? ङे) सिद्ध्यर्थं पूर्वत्वं बाह्ये पश्चात् सन्निपतिते न भवति । परिव्ययँ, व्यकह्रूयँमिति ॥

एङोऽति पदादौ ॥ ११० ॥

पदस्यादिभूते (ए ? अ)कारे परतः एङः पूर्वपरयोः स्थाने पू(र्व) एकादेशो भवति । तेऽत्र । यजन्तेऽत्र । कोऽर्थः । एङ इति किम् । दध्यत्र । अतीति किम् । वायविति । तपरः किम् । वायवायाहि । पदादाविति किम् । वयनम् । लवनम् ॥

ङसिङसोः ॥ १११ ॥

एङो ङसिङसोरति परतः पूर्वपरयोः पूर्वरूपमेकादेशो भवति । अग्नेरागच्छति । वायोरागच्छति । अग्नेः स्वम् । वायोः स्वम् ॥

ऋत उत् ॥ ११२ ॥

ऋकारान्ताद् ङसिङसोरति परतः पूर्वपरयोः स्थाने उकार एकादेशो भवति । पितुरागच्छ । पितुः स्वम् । उभयोः स्थाने यो भवति, लभते सोऽन्यतरव्यपदेशमिति रपरत्वम् । 'रात् सः' (६-३-६१) इति सलोपः । उदिति तपरकरणं द्विमात्रस्य समुदायस्य स्थाने द्विमात्रो मा भूदिति । 'एकः पूर्वपरयोः' (६-१-९१)इत्यस्य पूर्वोऽपवादः ॥

ख्यत्यात् परस्य ॥ ११३ ॥

ख्यत्यात् परयोः(?) [illegible] कृतयणादेशयोरिदं ग्रहणं ख्यत्यादिति । ताभ्यामुत्तरस्य ङसिङसोरकारस्योकारादेशो भवति । सख्युरागच्छति । सख्युः स्वम् । सखीयतेः पतीयतेः क्विबन्तात् सख्युरागच्छति, सख्युः स्वम् । पत्युरागच्छति, पत्युः स्वम् । एवं लूनीयतेः पूनीयतेश्च नत्वस्यासिद्धत्वात् लून्युः पून्युरिति भवति । विकृतिनिर्देशः किम् । यत्र यणादेशस्तत्र (त ? य)था स्यात् । इह मा भूत् । अतिसखेरागच्छति, अतिसखेः स्वम् । अधिपतेरागच्छति, अधिपतेः स्वम् ॥

[1]हशि चातो रोः ॥ ११४ ॥

1. 'हाशिस्चातो' M. U. E. पाठः

प्रकृत्या भवति । न सन्धीयत इत्यर्थः । अग्नी इति । वायू इति । अमू आसाते । अ अपेहि । इ इन्द्रं पश्य । उ उत्तिष्ठ । आ एवं त्वं मन्यसे । आ एवं किल तत् । अहो आश्चर्यम् । उताहो (अ?)त्र । आनो इ(ह? ति) पटो इति । उ इति ॥

प्लुतोऽनितौ ॥ १४० ॥

(प्लुतः) इतिशब्दादन्यस्मिन्नचि परतः प्रकृत्या भवति । देवदत्त*३ इ(ह) । (अत्र?) यज्ञदत्त*३ इह । अनिताविति किम् । सुश्लोक ३ इति (सुश्लोकेति) । सुमङ्गल ३ इति (सुमङ्गलेति) । रोहत्न इव प्लुतस्याश्रयात् सिद्धत्वमिति ॥

ई३ वा[1] ॥ १४१ ॥

ई इति प्लुतोऽचि परतो वा प्रकृत्या भवति । इतावप्राप्ते अन्यत्र प्राप्ते उभयत्र विभाषेयम् । अस्तु ही ३ इति । अस्तुहीति । चिनुही ३ इदम् । चिनुहीदम् ॥

आ ३ च क्वचित् ॥ १४२ ॥

आ ३ इत्ययं प्लुतः क्वचिदेव प्रकृत्या भवति । वशा ३ इयम् । वशेयम् । क्वचिद्वचनादन्यत्र नित्यमेव प्रकृतिभावो भवति ॥

अप्लुतादीनामिकोऽसवर्णे ह्रस्वश्चासमासे[2] ॥

प्लुतादीनामन्ये इकोऽसव(र्णा? र्णे) अचि परतोऽसमासे प्रकृत्या ह्रस्वाश्च वा भवन्ति । कुमारि अत्र । कुमार्यत्र । दधि अत्र । दध्यत्र । मधु अत्र मध्वत्र । अप्लुतादीनामिति किम् । हे कुमारी ३ अत्र । अग्नी ३ अत्र । वायू ३ अत्र । अमू ३ अत्र । इक इति किम् । खट्वेह । असवर्ण इति किम् । कुमारी इयं कुमारीयम् । असमास इति किम् । वाप्यश्वः । नद्यादिः ॥

१. 'ईति वा' ख. ग पाठः. २. 'ह्रस्वश्च' ख. M. U. S. पाठः ।

* ३ इत्यस्य स्थाने मातृकायां 'न्य' इत्यक्षरं दृश्यते । इदं त्रित्वसङ्ख्याबोधकतया तालपत्रात्मकग्रन्थेषु स्वीकृतं चिह्नम् । एवमुपर्यपि ।

ऋदॢत्यकः ॥ १४४ ॥

ऋति ॡति (च) परतः अकः प्रकृत्या, ह्रस्वश्च वा भवति। (खट्व ऋच्छति)। ख(ट्वे ? ट्व)र्च्छति। ख(ट्वा ? ट्व) ऋश्यः। खट्वर्श्यः। होतृऋषभः। होतृषभः। ख(ट्वा ऌ ? ट्व ऌ)कारः। ख(ट्वा ? ट्वल्)-कारः। ऋदॢ(तो ? )ति किम्। खट्वोदनः। अक इति किम्। (खट्-वेकः ?)। वृ(ो ? ऋ)क्षः। मत्वृक्षः। सवर्णार्थमनिगर्थं समासार्थं च वचनम् ॥

तदः सोर्लोपोऽचि पादपूरणं चेद ॥ १४५ ॥

तद उत्तरस्य सोरचि परतो लोपः पादः पूर्यते चेत्।
सैष दाशरथी रामः, सैष राजा युधिष्ठिरः।
सौ(व ? ष)धीरनुरुध्यसे। पादपूरणं चेदिति किम्। स एवायं गौः ॥

एतदश्चानक्चोऽनञ्समासे हलि ॥ १४६ ॥

(हलि ?) (एतदः) तदश्चाकज्वर्जितानञ्समासवृत्तेः परस्य सोर्हलि परतो लोपो भवति। एष ददाति। स ददाति। एष भुङ्क्ते। (य ? एत)त्तदो-रिति किम्। को भुङ्क्ते। यो भुङ्क्ते। यो ददाति। सुग्रहणं किम्। (तौ) तिष्ठतः। एतौ गच्छतः। तदनुबन्धग्रहणादिह न भवति — एतेषु चरति। तेषु गच्छति। अनकच इति किम्। एषको ददाति। (स)को गृह्णाति। 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते'(१-२-८०) इति साकच्कौ रूपभेदेऽपि एतत्तदावेवेति प्रतिषेधः। अनञ्समास इति किम्। अ(नयो-ई ? नेषो ददाति)। असो गच्छति। नञ्समासस्योत्तरपदार्थप्रधानत्वादेतत्ता-(दावे ?दोरे)वायं सुरिति लोपः स्याद् (इति) प्रतिषेधः। हलीति किम्। एषोऽत्र। सोऽत्र ॥

पदान्ते दिव उत् ॥ १४७ ॥

(पदान्ते) दिवोऽवयव उकारादेशो भवति। द्युकामः। द्युयानम्। द्यु(मान्)। विमलद्यु दिनम्। द्यूयानम्। (दिवश्रायः ?)। उत्त्वे कृते

१ 'त' क. पाठः

सवर्णदीर्घो यणादेशश्च भवति । 'सुपि वलि तद्वत्' (७-३-६७) इत्यतिदेशात् द्युभ्यां द्युषु द्युमान् द्युकल्पः इति ततो भवति । दिवि भवं दिव्यम् । अ(न्य ? त्र) तु न भवति । पदान्त इति किम् । दिवौ दिवः । दिवमिच्छति दिव्यति, द्यौरिवाचरति दिव्यते इत्यादौ तु सुबन्तत्वेऽपि 'क्ये' (७-३-६४) इति नियमान्न भवति । निरनुबन्धग्रहणादिह न भवति — अक्षद्यूभ्याम् । अक्षद्यूः तपरकरणं किम् । द्युभ्यां द्युभिरित्यादौ परत्वात् कृतेऽप्यूठि मात्राकालो यथा स्यादिति ॥

सम्परिभ्यां कृञः सुट् ॥ १४८ ॥

सम्परिभ्यामुत्तरस्य करोतेः सुडागमो भवति । संस्करोति । संस्कृतम् । संस्कारः । परिष्करोति । परिष्कृतम् । परिष्कारः । 'पूर्वं धातुरुपसर्गेण युज्यते पश्चात् साधनेन' इति द्विर्वचनादडागमाच्च पूर्वं सुडेव भवति । सञ्चस्कार । परिचस्कार । (सं ? सम) स्करोत् । पर्यस्करोत् । समस्कार्षीत् । पर्यस्कार्षीत् । समचिस्करत् । पर्यचिस्करत् ।

'अडादीनां व्यवस्थार्थं पृथक्त्वेन प्रवर्तनम् ।
धातूपसर्गयोः शास्त्रे धातुरेव तु तादृशः ॥'

संकृतिरिति गर्गादिपाठात् । संकरः परिकर इति किरतेरचा भविष्यति । कथं संकारः । अत एव बहुलाधिकारात् (य ? घञ्) ॥

उपात् भूषणसमवायप्रतियत्नविकृतवाक्याध्याहारेषु* ॥

उपात् परस्य करोतेर्भूषणाद्यर्थवृत्तेः सुडागमो भवति । भूषणे-उपस्करोति । समवाये — तत्र न उपस्कृतम् । समुदाय इत्यर्थः । सतो गुणान्तराधानमाधिक्याय, वृद्धस्य वा तादवस्थ्याय (स)मीहा प्रतियत्नः । काण्डगुणस्योपस्कुरुते । वैकृते — उपस्कृतं भुङ्क्ते, विकृतं भुङ्क्त इत्यर्थः । वाक्याध्याहारे — सोपस्कारं ब्रूते । एतेष्विति किम् । उपकरोति ॥

किरतौ लवने ॥ १५० ॥

उपात् परस्य किरतेर्धातोः सुडागमो भवति । लवनविषयश्चेत् तदर्थो भवति । उपस्कारं मद्रका लुनन्ति । विक्षिपन्तो लुनन्तीत्यर्थः ।

* इतः उत्तरं 'किरतौ लवने, हिंसायां प्रतेश्च, अपाच्चतुष्पाच्छकुनिष्वालेखने, ...कुस्तुम्बुरुणि जातिः...' ... मार्थेषु' इति त्रीणि सूत्राणि स्वपाठे न दृश्यन्ते ।

'उपात् किरो लवने' (२-४-२६३) इति णमुल् । लवन इति किम् । उपकिरति ॥

हिंसायां प्रतेश्च ॥ १५१ ॥

प्रतेरुपात् परस्य च किरतेर्हिंसायां गम्यमानायां सुडागमो भवति । प्रतिस्कीर्णं ह ते वृषल भूयात् । हिंसानुबन्धी विक्षेपस्ते भूयादित्यर्थः । हिंसायामिति किम् । प्रतिकीर्णम् ॥

अपाच्चतुष्पाच्छकुनिहृष्टान्नकुलायार्थिषु ॥ १५२ ॥

अपात् परस्य किरतेश्चतुष्पाच्छकुनिकर्तृके अर्थे वर्तमानस्य सुडागमो भवति । ते चेच्चतुष्पाच्छकुनय हृष्टा अन्नार्थिनः कुलायार्थिनश्च भवन्ति । अपस्किरते कुक्कुटो भक्षार्थी । अपस्किरते(श्वा)निवासार्थी । चतुष्पात्—अपस्किरते वृषभो हृष्टः । हृष्टान्नकुलायार्थिष्विति किम् । अपकिरति श्वा ओदनपिण्डं चूर्णितः ॥

अपरस्पराः क्रियासातत्ये ॥ १५३ ॥

अपस्परा इति निपात्यते क्रियासातत्यं चेत् गम्यते । अपरस्पराः सार्था गच्छन्ति । अबन्धेन गच्छन्तीत्यर्थः । क्रियासातत्य इति किम् । अपरपराः सङ्गच्छन्ति । अपरे (परे) चाप्रतिबन्धेन गच्छन्तीत्यर्थः ॥

पारस्करो देशे ॥ १५४ ॥

पारस्कर इति देशेऽभिधेये सुट् निपात्यते । पारस्करो नाम देशः । पार(:?) करोऽन्यः ॥

कारस्करो वृक्षे ॥ १५५ ॥

कारस्कर इति निपात्यते वृक्षेऽभिधेये । कारस्करो नाम वृक्षः । कार(:?)करोऽन्यः ॥

वनस्पतिश्च ॥ १५६ ॥

वनस्पतिरिति वृक्षेऽभिधेये सुण्णिपात्यते । वनस्पतिर्वृक्षः । यः पुष्परहितः फलति । वनपतिरन्यः ॥

रथस्या नद्याम् ॥ १५७ ॥

रथस्येति नद्यर्थे सुण्णिपात्यते । रथस्या नदी । रथयान्या ॥

किष्कुः प्रमाणे ॥ १५८ ॥

किष्कुरिति प्रमाणेऽर्थे निपात्यते । किमः कोष्कुड्मलोपश्च, वितस्तौ हस्ते वा । किमः परस्य कैकाचः (सुट्) षत्वं मलोपश्च निपात्यते ॥

किष्किन्धा गुहायाम् ॥ १५९ ॥

किष्किन्धेति गुहायामर्थे निपात्यते । किमप्यन्तर्दधातीति किमो द्विर्वचनं पूर्वस्य मलोपः, उत्तरस्य सुण्णिपात्यते । किष्किन्धा गुहा ॥

गोष्पदं सेवितासेवितप्रमाणेषु ॥ १६० ॥

सेविते असेविते प्रमाणविषये गोष्पदमिति सुट्, अस्य च षत्वं निपात्यते । सेविते — गावः पद्यन्तेऽस्मिन्निति गोष्पदो देशः । असेविते—अगोष्पदान्यरण्यानि । असेवितग्रहणं नञ्समासार्थम् । तेन यानि महारण्यानि येषु गवामत्यन्तासम्भवस्तान्येवमुच्यन्ते । प्रमाणे— गोष्पदमात्रं क्षेत्रम् । गोष्पदपूरं वृष्टो देवः । नात्र गोष्पदं स्वार्थप्रतिपादनार्थमुपादीयते, किन्तर्हि क्षेत्रस्य वृष्टेश्च परिच्छेत्तुमियत्ताम् । सेवितासेवितप्रमाणेष्विति किम् । गोः पदं (गोपदम्) ॥

आस्पदं प्रतिष्ठायाम् ॥ १६१ ॥

आत्मनो (यापनाय) स्थानं प्रतिष्ठा । तस्यामर्थे आङः परस्य (पदेः) सुण्णिपात्यते । आस्पदमनेन प्राप्तमित्यर्थः । प्रतिष्ठायामिति किम । आपदात्, आपदम् ॥

आश्चर्यमद्भुते ॥ १६२ ॥

आश्चर्यमित्यद्भुतेऽर्थे निपात्यते । आश्चर्यमद्भुतम् । आचर्यमन्यत् ॥

अवस्करो वर्चस्के[1] ॥ १६३ ॥

कुत्सितं वर्चो वर्चस्कम्, अन्नमलम् । कना निर्देशो (दिव्यादि१

---

१. वर्चस्के:' M. U. S. सूत्रपाठः'

दीप्त्याद्यर्थनि)वृत्त्यर्थः । तस्मिन्नर्थे अवस्कर इति सुणिपात्यते । अवकीर्यत इत्यवस्करः, पुरीषम् । तत्सादृश्यात् तत्साहचर्याच्च देशादिरपि तथोच्यते । वर्चस्क इति किम् । अवकरः ॥

अपस्करो रथाङ्गे ॥ १६४ ॥

रथावयवेऽर्थे अपस्कर इति निपात्यते । अपस्करो रथाङ्गं, यत्र युगं वध्यते । रथाङ्ग इति किम् । अपकरः ॥

मस्करमस्करिणौ वेणुपरिव्राजकयोः ॥ १६५ ॥

वेणौ परिव्राजके चार्थे यथासङ्ख्यं मकरमकरिशब्दयोः सुणिपात्यते । मस्करो वेणुः । मस्करी परिव्राजकः । वेणुपरिव्राजकयोरिति किम् । मकरो ग्राहः । मकरी समुद्रः । अन्ये तु — मा क्रियते, प्रतिषिध्यतेऽनेनेति निपातनात् करणे सुट्, माङश्च ह्रस्वत्वम् । मस्करो वेणुः, दण्डो वा । तथा मा(ङ्वे ? ङ्ये)व करोतेस्ताच्छीलिके णिनि सुटं ह्रस्वत्वं च निपातयन्ति । माकरणशीलो मस्करी परिव्राजकः । स ह्येवमाह— 'मा कृत कर्माणि भवान्, शान्तिर्वः श्रेयसी' इति ॥

प्रस्कण्वहरिश्चन्द्रावृषी ॥ १६६ ॥

प्रस्कण्वहरिश्चन्द्रयोः सुणिपात्यते, ऋषी चेत् तौ भवतः । प्रगतं कण्वं पापमस्मात् प्रस्कण्वः, ऋषिः । हरिश्चन्द्र इवाह्लादकः हरिश्चन्द्रः, ऋषिः । (ऋषी इति किम् । प्रकण्वो देशः) । हरिचन्द्रो माणवकः ॥

कास्तीराजस्तुन्दे नगरे ॥ १६७ ॥

कास्तीरमजस्तुन्दमित्येतौ नगरेऽर्थे निपात्येते । ईषत् तीरमस्य, कास्तीरं नगरम् । कातीरमन्यत् । अजस्येव तुन्दमस्य, अजस्तुन्दं नगरम् । अजतुन्दमन्यत् ॥

कुस्तुम्बुरुरोषधौ[1] ॥ १६८ ॥

कुस्तुम्बुरौ सुणिपात्यते । कुस्तुम्बुरुरोषधिः । धान्यकम् । तत्फलानि कुस्तुम्बुरूणि । ओषधाविति किम् । कुत्सितानि तुम्बुरूणि फलानि कुतुम्बुरूणि ॥

---

१. 'धी' क. पाठः.

शष्कुली कृतान्नम् ॥ १६९ ॥

शष्कुलीति शष्कुलशब्दस्य कृतान्नेऽर्थे सुण्णिपात्यते । शष्कुली कृतान्नम् । गौरादित्वात् ङीष् । कृतान्नमिति किम् । शकुली मत्स्यविशेषः ॥

वौ विष्किरो वा ॥ १७० ॥

(नृ?) वौ शकुनावर्थे विष्किर इति वा सुण्णिपात्यते । वि(कं ? किर)-तीति विष्किरः, शकुनिः । विकिरः शकुनिः । *शकुनेरन्यत्रास्य प्रयोगो नास्ति ॥

प्रतिष्कशः प्रष्ठसहायदूतेषु ॥ १७१ ॥

प्रष्ठादिष्वर्थेषु प्रतिपूर्वस्य कशेराचि सुण्णिपात्यते । प्रति(किर ?-कश)तीति प्रतिष्कशः । अग्र(ग्रा ? गा)मी सहायो दूतो वा । प्रष्ठादिष्विति किम् । प्रतिगतः कशां प्रतिकशोऽश्वः ॥

तस्करबृहस्पती चोरदेवतयोः ॥ १७२ ॥

.... .... .... .... .... देवता ।
... .... .... चोरदेवतयोरिति किम् । तत्करः । बृहत्पतिः ।

प्रात् तुम्पतेर्गवि ॥ १७३ ॥

प्रात् परस्य तुम्पतिशब्दस्य गव्यभिधेये सुडागमो भवति । प्रस्तुम्पतिर्गौः । प्रतुम्पतिरन्यः । अन्ये — प्रात् परस्य तुम्पतेर्धातोर्गवि कर्तरि सुट् भवतीति व्याचक्षते । प्रस्तुम्पति गौः । प्रस्तुम्पति वत्स इति । (गवीति किम् ।) प्रतुम्पति वनस्पतिः ॥

प्रायश्चित्तिचित्तयोः ॥ १७४ ॥

प्रायशब्दादुत्तरयोश्चित्तिचित्तयोः सुडागमो भवति । प्रायश्चित्तिः । प्रायश्चित्तम् ॥

---

* वृत्तिकारमतानुरोधेनेदमुक्तम् । वस्तुतस्तु 'विष्किरः शकुनौ वा' (६-१-१५०) इति सूत्रस्थभाष्यादन्यत्राप्यर्थे प्रयोगोऽस्तीत्यवगम्यते । तथा च 'विकिरं वैश्वदेविकम्' इति वैदिकप्रयोगोऽप्युपलभ्यते ।

परश्शतपरस्सहस्रादयश्च ॥ १७१ ॥

परश्शतपरस्सहस्रादयः शब्दाः समुदिताः साधवो भवन्ति । शतात् परे, परश्शताः । सहस्रात् परे, परस्सहस्राः । राजदन्तादिषु पाठात् पूर्वनिपातः । आदिग्रहणाद्वचोवचपरोवरादयो भवन्ति ॥

इति श्रीदण्डनाथनारायणभट्टलघुवृत्तौ सरस्वतीकण्ठाभरणस्य व्याकरणस्य लघुवृत्तौ हृदयहारिण्यां षष्ठस्याध्यायस्य प्रथमः पादः ॥

## अथ द्वितीयः पादः ।

अलुगुत्तरपदे ॥ १ ॥

अधिकारोऽयम् । अलुगिति प्रागानङः उत्तरपद इत्यापादपरिसमाप्तेः ॥

पञ्चम्याः स्तोकान्तिकदूरार्थकृच्छ्रेभ्यः ॥ २ ॥

स्तोकाद्यर्थेभ्यः कृच्छ्रशब्दात् (च) परस्याः पञ्चम्याः उत्तरपदे परतः अलुग् भवति । स्तोकान्मुक्तः । अल्पान्मुक्तः । कतिपयान्मुक्तः । अन्तिकादागतः । समीपादागतः । दूरादागतः । विप्रकृष्टादागतः । कृच्छ्रान्मुक्तः । 'स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन' (२-२-५४) इति समासः । तत्र 'सुपो लुगैकार्थ्ये'(२-१-१९७) इति प्राप्तो लुङ्निषिध्यते । समासे सङ्ख्याविशेषानवगमात् स्तोकाल्पकृच्छ्रकतिपयेभ्यस्सत्त्ववचनेभ्य एव करणे पञ्चमीविधानात् तस्य वचनसमानाम्बना (?) ........... द्विवचनं बहुवचनं च भवति । उत्तरपद इति किम् । निष्क्रान्तः स्तोकात्, निःस्तोकः ॥

ब्राह्मणाच्छंसी ॥ ३ ॥

ब्राह्मणाच्छंसीत्यत्र पञ्चम्या अलुङ्निपात्यते । ब्राह्मणादादाय शंसतीति ब्राह्मणाच्छंसी, ऋत्विग्विशेषः । उपात्तविषयमेतदपादानम् । यथा-कुसूलात् पचति । अत एव निपातनात् समासः ॥

१. 'त्' क. पाठः.

खितीच एकाचोऽमः ॥ ४ ॥

खिदन्त उत्तरपदे परत एकाच इकारान्तात् परस्यामोऽलुग् भवति । गांमन्यः । नावंमन्यः । स्त्रियंमन्यः । श्रींमन्यः । भ्रुवंमन्यः । (भ्रूंमन्यः ।?) अथेह कथं भवितव्यम् । श्रियमात्मानं मन्यते । ब्राह्मणकुलं श्रियंमन्यमिति । श्रीशब्दस्यात्मसमानाधिकरणस्य हूस्वभावात् ङीप्लिङ्गत्वाच्च श्रिमन्यमित्यपरे । अत्र विषये यथा प्रष्ठादयः पुंयोगात् स्त्रियां वर्तमानाः स्वलिङ्गं विहाय स्त्रीलिङ्गमुपाददते, तथा श्रीशब्दो ब्राह्मणकुले (प्व ? स्व)लिङ्गपरित्यागेन वर्तते इति । न चायं स्वमोर्लुकोऽपवादः । उत्तरपदाधिकारादैकार्थ्यलुक एवानेन बाधनात् । खितीति किम् । श्रीमानी । इच इति किम् । आमन्यः । क्ष्यम्मन्यः(?) । स्वन्मन्यः । स्वङ्मन्यः । एकाच इति किम् । हरिणींमन्याम् ॥

ओजस्सहोम्भस्तमोञ्जसेभ्यस्तृतीयायाः ॥ ५ ॥

ओजस्प्रभृतिभ्यः परस्यास्तृतीयाया उत्तरपदे परतः अलुग् भवति । ओजसाकृतम् । सहसाकृतम् । अम्भसाकृतम् । तमसाकृतम् । अञ्जसाकृतम् ॥

मनसः संज्ञायाम् ॥ ६ ॥

मनसः परस्यास्तृतीयाया उत्तरपदे परतः संज्ञायामलुग् भवति । मनसादेवी । मनसागुप्ता । मनसादत्ता । संज्ञायामिति किम् । मनोदत्ता कन्या ॥

आज्ञायिनि[1] ॥ ७ ॥

आज्ञायिन्युत्तरपदे मनसः परस्यास्तृतीयाया अलुग् भवति । मनसा अज्ञातुं शीलमस्य, मनसाज्ञायी ॥

पुंजनुषोरनुजान्धयोः ॥ ८ ॥

पुंजनुर्भ्यां परस्यास्तृतीयाया यथासङ्ख्यमनुजान्धयोरुत्तरपदयोरलुग् भवति । पुंसा अनुजः, पुंसानुजः । जनुषा जन्मना अन्धः, जनुषान्धः ॥

1. 'ना' M. U. S. सूत्रपाठः.

आत्मनः पूरणे ॥ ९ ॥

आत्मनः परस्यास्तृतीयायाः पूरणप्रत्ययान्त उत्तरपदे अलुग् भवति। आत्मनातृतीयः। आत्मनापञ्चमः। आत्मनाषष्ठः। प्रकृत्यादित्वात् तृतीया। 'कर्तृकरणे कृता बहुलम्' (२-२-४४)इति बहुलवचनात् समासः॥

पराच्च वैयाकरणाख्यायां चतुर्थ्याः ॥ १० ॥

परशब्दादात्मनश्च परस्याश्चतुर्थ्या उत्तरपदे परतः वैयाकरणाख्यायामलुग् भवति। परस्मैपदम्। परस्मैभाषा। (आत्मनेपदं) आत्मनेभाषा। तादर्थ्ये चतुर्थी। अस्मादेव वचनात् प्रकृतिविकारभावादन्यत्र समासः॥

सप्तम्यास्तत्पुरुषे कृति बहुलम् ॥ ११ ॥

तत्पुरुषे समासे कृदन्त उत्तरपदे परतः सप्तम्या बहुलमलुग् भवति। स्तम्बेरमः। कर्णेजपः। गोषुचरः। अप्सुचरः। हृदिस्पृक्। पात्रेसमितः। गेहेनर्दी। गेहेक्ष्वेडी। अम्भसिहुतम्। प्रवाहेमूत्रितम्। उदकेविशीर्णम्। अवततेनकुलस्थितम्। क्वचिन्न भवति। कुरुचरः। क्वचिद्विकल्पः। खचरः, खेचरः। पङ्करुहं (पङ्केरुहम्)। द्युसत्, (द्यो ? दिवि)षत्। तत्पुरुष इति किम्। कल्याणाभिनिवेशः। धर्मरुचिः। कृतीति किम्। अक्षशौण्डः। अक्षकितवः॥

हलदन्तात् संज्ञायाम् ॥ १२ ॥

हलदन्ताच्च परस्याः सप्तम्या उत्तरपदे परतो बहुलमलुग् भवति। (संज्ञायां गम्यमानायाम्।) गविष्ठिरः। युधिष्ठिरः। अरण्येतिलकाः। अरण्येमाषाः। वनेकशेरुहाः। वनेबल्वजकाः। कूपेपिशाचिकाः। मध्याह्नेस्फोटकाः। बहुलाधिकारात् क्वचिद्विकल्पः। त्वचिसारः, त्वक्सारः। क्वचिद् (न) भवति। जलकुक्कुटः। ग्रामसूकरः। हलदन्तादिति किम्। भूमिपाशः। नदीकुक्कुटिका। संज्ञायामिति किम्। तीर्थवायसः। नगरवायसः। तपरकरणं किम्। [illegible]। [illegible]॥

प्राचां कारे हलादौ ॥ १३ ॥

राजलक्ष्म्यो रक्षानिवेशः कारः। तस्मिन् प्राचां देशे या संज्ञा

तस्यां विषये हलादावुत्तरपदे हलदन्तात् परस्याः सप्तम्या अलुग् भवति। सूपेशाणः। मुकुटेकार्षापणः। दृषदिमाषकः। हलेद्विपदिका। प्राचामिति किम्। यूथपशुः। कार इति किम्। *अभ्याहकुपशुः। हलादाविति किम्। अविकटोरणः। हल(द)न्तादित्येव। नद्यां दोहनी-नदीदोहनी॥

मध्यान्ताभ्यां गुरौ॥ १४।

मध्यान्तशब्दाभ्यां परस्याः सप्तम्या गुरावुत्तरपदे परतः अलुग् भवति। मध्येगुरुः। अन्तेगुरुः। केचित् बहुलग्रहणानुवृत्त्या मध्यगुरुरन्तगुरुरित्यपीच्छन्ति॥

अमूर्धमस्तकात् स्वाङ्गादकामे। १५॥

मूर्धमस्तकवर्जितात् हल(द)न्तात् स्वाङ्गवाचिनः परस्याः सप्तम्याः कामशब्दादन्यस्मिन्नुत्तरपदे परतः अलुग् भवति। कण्ठेकालः। उरसिलोमा। उदरेमणिः। स्कन्धेपुत्रः। वहेगडुः। अमूर्धमस्तकादिति किम्। मूर्धशिखः, मस्तकशिखः। स्वाङ्गादिति किम्। [illegible]। अकाम इति किम्: मुखकामः। हल(द)न्तादिति किम्। अङ्गुलिव्रणः। जङ्घावलिः॥

अपो योनियन्मतिषु॥ १६॥

अप्शब्दात् परस्याः सप्तम्या यत्प्रत्यये योनिमत्योश्चोत्तरपदयोरलुग् भवति। अप्सु भवः, अप्सव्यः। अप्सुयोनिः। अप्सुमतिः॥

घुप्रावृट्वर्षाशरत्कालेभ्यो जे॥ १७॥

दिवादिभ्यः परस्याः सप्तम्या जे उत्तरपदे अलुग् भवति। दिविजः। प्रावृषिजः। (वर्षासुजः। शरदिजः। कालेजः।) बहुलग्रहणस्यैवायं प्रपञ्चः॥

वर्षक्षरशरवराप्सरःप्रभृतिभ्यो वा॥ १८॥

वर्षादिभ्यः परस्याः सप्तम्या जे उत्तरपदे परतः अलुग्वा भवति। वर्षेजः, वर्षजः। क्षरेजः, क्षरजः। शरेजः, शरजः। वरेजः, वरजः। अप्सुजः अब्जः। सरसिजः, सरोजः। प्रभृतिग्रहणान्मनसिजः। (मनोजः) उरसिजः। उरोजः। इत्यादयो भवन्ति। अयमपि प्रपञ्चः॥

---

* 'अभ्यर्हितपशुः कारादन्यस्यैतद् देयस्य नाम' इति काशिका।

बन्धे घञि ॥ १९ ॥

बन्धशब्दे घञन्त उत्तरपदे हल(द)न्तात् परस्याः सप्तम्या अलुग् वा भवति । चक्रेबन्धः, चक्रबन्धः । हस्तेबन्धः, हस्तबन्धः । बन्ध इति किम् । पुटपाकः । मनोरोगः । घञीति किम् । अजबन्धः, चक्रबन्धः । हल(द)न्तादित्येव । गुप्तिबन्धः । ताराबन्धः ॥

घतनकालेषु कालनाम्नः ॥ २० ॥

(घसंज्ञकतनदेहेलन्तात् परस्यास्सप्तम्या ?) घप्रत्यये (तनप्रत्यये) कालशब्दे चोत्तरपदे हलदन्तात् कालनाम्नः परस्याः सप्तम्या अलुग् भवति वा । पूर्वाह्णेत(रा ? रे) पूर्वाह्णतरे पूर्वाह्णेत(माः ? मे) पूर्वाह्णतमे । (पूर्वाह्णेतने पूर्वाह्णतने ।) पूर्वाह्णेकाले (पूर्वाह्णकाले ।) कालनाम्न इति किम् । शुक्लतरे, शुक्लतमे । हलदन्तादित्येव । रात्रितरायां निशातमायाम् । रात्रिकाले । उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तग्रहणं न भवति । 'हृद्-यस्य हृल्लेखेषु' इति लेखग्रहणाल्लिङ्गात् । तेनात्र घतनयोः पूर्वत्र घयत्युत्तर- ... ... .... ... अप(?) स्वरूपेणैव ग्रहणं भवति ॥

शयवासवासिष्वकालात् ॥ २१ ॥

शयादिषूत्तरपदेषु परतः (अ)कालवाचिनः परस्याः सप्तम्या अलुग् (वा) भवति । बिलेशयः (बिलशयः ।) खेशयः । (खशयः) । ग्रामेवासः । ग्रामवासः । वनेवासः । वनवासः । ग्रामेवासी, ग्रामवासी । अन्तेवासी, अन्तवासी । बहुलग्रहणानुवृत्तेर्मनसिशयः । (उशे ? खेश)य इत्यलुक् । हृच्छयः चित्तशय इति तु नित्यं लुग् भवति । अकालादिति किम् । पूर्वाह्णेशयः अपराह्णेशयः । हल(द)न्तादित्येव । भूमिशयः । गुहाशयः ॥

नेन्बन्धिसिद्धशस्थेषु ॥ २२ ॥

इन्प्रत्ययान्ते बन्धिप्रकृतौ च सिद्धश(स्ते[१] ? स्थे)षूत्तरपदेषु अलुग् न भवति । स्थण्डिलवर्ति, स्थण्डिलशायि । *चक्रबन्धः, चरकबन्धः । बध्नाति ।

१. 'स्ते' क. पाठः.

* पचाद्यजन्तमिदम् ।

सांकाश्यसिद्धः । काम्पिल्यसिद्धः । गिरिशः । (कुशः ? ।) समस्थः । कथं परमेष्ठी दिविष्ठ इति । बहुलवचनाद् भविष्यति ॥

षष्ठ्या आक्रोशे ॥ २३ ॥

आक्रोशे गम्यमाने उत्तरपदे परतः षष्ठ्या अलुग् भवति । चोरस्य-कुलम् । दासस्यभार्या । वृषल्याःपतिः । आक्रोश इति किम । ब्राह्म(ण)-कुलं, दासभार्या, वृषलीपतिरिति तत्त्वाख्याने न भवति ॥

पुत्रे वा ॥ २४ ॥

पुत्रे उत्तरपदे आक्रोशे गम्यमाने षष्ठ्या अलुग् वा भवति । दास्याःपुत्रः, दासीपुत्रः । वृषल्याःपुत्रः, वृषलीपुत्रः । आक्रोश इति किम् । ब्राह्मणपुत्रः ॥

वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु ॥ २५ ॥

वाक् दिक् पश्यत् इत्येतेभ्यः परस्याः षष्ठ्या यथासङ्ख्यं युक्ति-दण्डहर इत्येतेषु पदेषु परतोऽलुग् भवति । वाचोयुक्तिः । दिशोदण्डः । पश्यतोहरः ॥

अदसः फग्वुञोः ॥ २६ ॥

अदसः परस्याः षष्ठ्याः फकि वुञि च प्रत्यये परतः अलुग् भवति । अमुष्यापत्यमामुष्यायणः । नडादित्वात् फक् । आमुष्यकुलिका । आमुष्य-पुत्रिका । मनोज्ञादित्वाद् वुञ् । अदसः परो वुञ् नास्तीति व्यवधानेऽपि वचनाद् भवति ॥

देवानांप्रियः ॥ २७ ॥

देवानांप्रिय इति षष्ठ्या अलुङ्निपात्यते । देवानांप्रियः ॥

शुनः शेपपुच्छलाङ्गूलेषु संज्ञायाम् ॥ २८ ॥

श्वन्शब्दात् परस्याः षष्ठ्याः शेपादिषु उत्तरपदेषु परतः संज्ञाया मलुग् भवति । शुनश्शेपः । शुनःपुच्छः । शुनोलाङ्गूलः । संज्ञायामिति किम् । श्वपुच्छः ॥

दिवोदासदिवस्पतिवाचस्पतिवास्तोष्पतयः ॥ २९ ॥

दिवोदासादयः शब्दा अलुक्षष्ठीसमासाः संज्ञायां साधवो भवन्ति । दिवोदासः । दिवस्पतिः । वाचस्पतिः । (वास्तोष्पतिः ।) संज्ञायामित्येव । द्युदासः । द्युपतिः । वाक्पतिः । वास्तुपतिः ॥

ऋतो विद्यायोनिसम्बन्धिनस्तास्मिन् ॥ ३० ॥

ऋकारान्ताद्विद्यासम्बन्धिनो योनिसम्बन्धिनश्च परस्याः षष्ठयास्तस्मिन्नेव विद्यायोनिसम्बन्धिन्येवोत्तरपदेऽलुग् भवति । होतुःपुत्रः । होतुरन्तेवासी । पितुःपुत्रः । पितुरन्तेवासी । ऋत इति किम् । आचार्यपुत्रः । मातुलान्तेवासी । विद्यायोनिसम्बन्धिन इति किम् । दातृपुत्रः । गन्त्रन्तेवासी । तस्मिन्निति किम् । होतृधनम् । पितृगृहम् ॥

स्वसृपत्योर्वा ॥ ३१ ॥

ऋतो विद्यायोनिसम्बन्धिनः परस्याः षष्ठ्याः स्वसृपत्योरुत्तरपदयोः परतः अलुग्वा भवति । मातुस्स्वसा, मातृष्वसा । दुहितुःपतिः, दुहितृपतिः ॥

आनङ् ऋतो द्वन्द्वे ॥ ३२ ॥

ऋकारान्तानां यो द्वन्द्वस्तस्मिन्नुत्तरपदे परतः पूर्वस्यानङादेशो भवति । होतापोतारौ । नेष्टोद्गातारौ । प्रशास्ताप्रतिहर्त्तारौ । मातादुहितरौ । स्वसाभ्रातरौ । ननान्दायातरौ । अथेह प्रथमयोः कस्मान्न भवति । होतृपोतृने (ष्टुद्गो ? ष्टोद्गा)तार इति । अन्त्यस्यैवोत्तरपदत्वात् । कथं तर्हि होतापोतानेष्टोद्गाता (र) इति । द्वयोर्द्वयोर्द्वन्द्वे पुनर्द्वन्द्वो भविष्यति ऋत इति किम् । पतिभ्रातरौ । पितृपितामहौ । मातुलस्वसारौ । द्वन्द्व इति किम् । मातृष्वसा । विद्यायोनिसम्बन्धिनामित्येव । दातृभ्रातरौ । पितृभोक्तारौ । कर्तृ — कारपितरौ(?) । नकारो रत्वनिवृत्त्यर्थः । ङकारोऽन्तादेशार्थः ॥

पुत्रे ॥ ३३ ॥

पुत्रशब्द उत्तरपदे द्वन्द्वे समासे ऋकारान्तानामानङादेशो भवति । मातापुत्रौ । पितापुत्रौ । दुहितापुत्रौ ॥

मातुः पितर्यरङ् च ॥ ३४ ॥

द्वन्द्वे समासे पितर्युत्तरपदे मातृशब्दादरङ्, चकाराद् आनङ् चादेशो भवति । मातरपितरौ । मातापितरौ ॥

देवतानामवायूनां वेदे सहश्रुतानाम् ॥ ३५ ॥

देवतावाचिनां वायुवर्जितानां वेदे सहश्रुतानां यो द्वन्द्वस्तत्रोत्तरपदे परतः पूर्वपदस्यानङादेशो भवति । इन्द्रासोमौ । सोमारुद्रौ । सूर्याचन्द्रमसौ । मित्रावरुणौ । देवतानामिति किम् । यूपच(षा)लौ । उलूखलमुसलौ । अवायूनामिति किम् । अग्निवायू । वाय्वग्नी । वेद इति किम् । शिववैश्रवणौ । स्कन्दविशाखौ । ब्रह्मप्रजापती । सहेति किम् । विष्णुशक्रौ । श्रुतानामिति किम् । चन्द्रसूर्यौ । दिवाकरनिशाकरौ ॥

अग्नेः सोमवरुणयोरीत् ॥ ३६ ॥

अग्निशब्दस्य देवतानां द्वन्द्वे सोमवरुणयोरुत्तरपदयोरीकारोऽन्तादेशो भवति । अग्नीषोमौ । अग्नीवरुणौ ॥

इद् वृद्धिमत्यविष्णौ ॥ ३७ ॥

विष्णुवर्जिते वृद्धिमत्युत्तरपदे परतः देवतानां द्वन्द्वे अग्निशब्दस्येकारः अन्तादेशो भवति । ईदानङोरपवादः । आग्निवारुणीमनड्वाहीमालभेत । आग्निमारुतं कर्म । वृद्धिमतीति किम् । अग्नामरुतौ । अविष्णाविति किम् । आग्नावैष्णवं चरुं निर्वपेत् ॥

दिवो द्यावा ॥ ३८ ॥

दिव्शब्दस्य देवताद्वन्द्वे तूत्तरपदे परतः द्यावा इत्ययमादेशो भवति । द्यावाभूमी ॥

दिवस् पृथिव्यां वा ॥ ३९ ॥

दिव् इत्येतस्य पृथिव्यामुत्तरपदे देवताद्वन्द्वे दिवस् इत्ययमादेशो (वा) भवति । दिवस्पृथिव्यौ, द्यावापृथिव्यौ । सकार (स्य वृकस्य ? स्याविकृतस्य) निर्देशो रुत्वबाधनार्थः ॥

उषासोषसः ॥ ४० ॥

देवताद्वन्द्वे उत्तरपदे परत उषस्शब्दस्य उषासा इत्ययमादेशो भवति। उषाश्च नक्तं च उषासानक्तम्। उषासासूर्यम् ॥

गुणः स्त्र्यनूङ् पुंवत् स्त्रियामेकाधिकरणे ॥ ४१ ॥

विशेषणं गुणः तद्वचनः शब्दोऽपि गुणः यस्याश्रयतो लिङ्गवचनानि भवन्ति। गुणवचनः स्त्रीलिङ्ग ऊङ्वर्जितः स्त्रीलिङ्गे समानाधिकरणे उत्तरपदे परतः पुंवद् भवति। पुंशब्दस्येवास्य रूपं भवतीत्यर्थः। कुमारी भार्या अस्य कुमारभार्यः। पटुभार्यः। दर्शनीयभार्यः। प्रसूतभार्यः। प्रजातभार्यः। गर्भिभार्यः। दीर्घजङ्घः। युवजानिः। गुण इति किम्। खट्वाभार्यः। कुटीभार्यः। ग्रामणीभार्यः। स्त्रीति किम्। ग्रामणिकुलं दृष्टिरस्य ग्रामणिदृष्टिः। अनूङिति किम्। ब्रह्मबन्धूभार्यः। करभोरूभार्यः। स्त्रियामिति किम्। कल्याणी प्रधानमेषां कल्याणीप्रधानाः। गृहिणीनेत्राः। एकाधिकरण इति किम्। खट्वाभार्यः। कल्याण्या माता कल्याणीमाता। दर्शनीयामाता ॥

त्रल्तस्चरट्घकल्पप्देश्यरूपप्पाशप्शस्थ्यन्क्यङ्मानिषु ॥ ४२ ॥

(त्रिता ? त्रल्तसा)दिषु प्रत्ययेषु मानिशब्दे चोत्तरपदे परतो गुणवचनः स्त्रीलिङ्गशब्दोऽनूङ् पुंवद् भवति। त्रल् — तस्यां तत्र। तस् — तस्याः ततः। चरट् — भूतपूर्वा पट्वी पटुचरी। घः — इयमनयोरतिशयेन दर्शनीया दर्शनीयतरा। इयमासामतिशयेन दर्शनीया दर्शनीयतमा। कल्पप् — प्रदर्शनीयकल्पा। देश्यः — दर्शनीयदेश्या। रूपप् — दर्शनीयरूपा। पाशप् — दर्शनीयपाशा। शस् — बह्वीभ्यो देहि बहुशो देहि। तद्धितसाहचर्याद् विभक्तौ शसि न भवति। थ्यन् — अजाभ्यो हिता अजथ्या। क्यङ् — श्येनी इवाचरति श्येतायते। मानिन् — दर्शनीयां मन्यते दर्शनीयमानिनीति। अयमस्या दर्शनीयमानी।

भाविन्महद्भस्युरसदार्थसमानाधिकरणार्थं च दर्शनीयमात्मानं मन्यते दर्शनीयमानिनीति तु सामानाधिकरण्येनैव भवति ॥

य्यचि तद्धिते ॥ ४३ ॥

यकारादावजादौ च तद्धिते परतो भुक्तवचनः स्त्रीलिङ्गशब्दोऽनूङ् पुंवद् भवति । श्येन्याः भावः श्यैनम् । रोहिण्याः (भावः) रौहित्यम् । कुमारसामान्यैः पट्वी गरिष्ठा । णाविष्ठवद्भावात् श्येनीमाचष्टे श्येतयति । हस्ति(नी)नां समूहो हास्तिकम् । कौण्डिन्यः, भानायदः, सापत्नः, (एन ? वौ)वत्समित्यादौ तु गर्गादौ शिवादौ भिक्षाधादिषु कुण्डिनी(म)नायीसपत्नीयुवत्यादीनां स्त्रीलिङ्गानामेव पाठात् पुंवद्भावो न भवति । तद्धित इति किम् । हस्तिनीमिच्छति हस्तिनीयति हस्तिन्यः । य्यचीति किम् । पट्व्या आगतः पट्वीरूप्यः । पट्वीमयः ॥

ढे अग्नाय्याः ॥ ४४ ॥

ढे अजादौ तद्धिते परत अग्नाय्येव स्त्री पुंवद् भवति । अग्नाय्याः अपत्यमाग्नेयम् । अग्नायी देवता अस्य आग्नेयः स्थालीपाकः । नियमः किम् । श्यैनेयः । रौहिणेयः ॥

न प्रधानपूरण्याम् ॥ ४५ ॥

पूरणप्रत्ययान्ता स्त्री पूरणी तस्यां प्रधानभूतायामुत्तरपदे स्त्री पुंवन्न भवति । कल्याणी पञ्चमी आसां कल्याणीपञ्चमा रात्रयः । कल्याणीदशमाः । अत्रावयवेन विग्रहः समुदायः समासार्थ इत्यन्यपदार्थे पूरण्या अन्तर्भावात् प्राधान्यम् । प्रधानग्रहणं किम् । कल्याणी पञ्चमी अस्मिन् कल्याणपञ्चमीकः पक्षः ॥

भक्तौ च कर्मसाधनायाम् ॥ ४६ ॥

कर्मसाधनायां भक्तौ चोत्तरपदे स्त्री पुंवन्न भवति । गिरितनया भक्तिरस्य गिरितनयाभक्तिः । भवानीभक्तिः । कर्मसाधनायामिति किम् । दृढभक्तिः । स्थिरभक्तिः ॥

प्रियामनोज्ञाकल्याणीसुभगादुर्भगास्वाक्षान्ताकान्तावामावामनासमासचिवाचपलाबालातनयादुहितृषु ॥ ४७ ॥

प्रियादिषूत्तरपदेषु स्त्री पुंवन्न भवति । कल्याणी प्रिया अस्य कल्याणीप्रियः । भव्यामनोज्ञः । प्रियाकल्या(णि ? णी)कः । प्रियासुभगः । कल्याणीदुर्भगः । कल्याणीस्वः । कल्याणीक्षान्तः । दर्शनीयाकान्तः । प्रियावामः । प्रियावामनः । प्रियासमः । प्रियासचिवः । प्रियाचपलः । प्रियाबालः । कल्याणीतनयः । कल्याणीदुहितृकः ॥

वुतद्धितकोपधासंज्ञापूरण्यः ॥ ४८ ॥

वोस्तद्धितस्य च ककार उपधा यासां ताः, संज्ञापूरण्यस्ताः (च)स्त्रियः पुंवन्न भवन्ति । कारिकाभार्यः । पाचिकाभार्यः । कारिकाकल्पा । पाचिकारूपा । पाचिकायते । पाचिकामानिनी । विलेपिकाया धर्म्यं वैलेपिकम् । मद्रिकाभार्यः । वृजिकाभार्यः । लाक्षिकीकन्या । रोचिनिकीरूपा । मद्रिकायते । वृजिकामानिनी । दत्ताभार्यः । गुप्ताभार्यः । दत्तारूपा गुप्तापाशा । दत्तायते । दत्तामानिनी । द्वितीयाभार्यः । पञ्चमीभार्यः । द्वितीयाकल्पा । पञ्चमीयते । द्वितीयामानिनी । कोपधस्य तद्धितविशेषणं किम् । पाकभार्यः । जल्पाकभार्यः । कामुककल्पा । जागरूकरूपा । लुण्टाकायते । कुट्टाकमानिनी ॥

तद्धितोऽज्वृद्धिहेतुररक्तविकारे ॥ ४९ ॥

अच्ख्यानिकाया वृद्धेर्निमित्तं य (त् सिद्धिः ? स्तद्धितः) रक्तविकारवर्जितेऽर्थे विहितस्तदन्तः स्त्रीलिङ्गः पुंवन्न भवति । माथुरीभार्यः । नादेयीभार्यः । वैदर्भीभार्यः । सौतङ्गमीभार्यः । सौघ्नभार्यः माथुरीकल्पा । (ना)देयीरूपा । सौतङ्गमीयते । वैदर्भीमानिनी । तद्धित इति किम् । कुम्भका(री ? र)भार्यः । काण्डलावभार्यः । वृद्धिहेतुरिति किम् । मध्यमा भार्या अस्य मध्यमभार्यः । अर्धप्रस्थे भवा आर्धप्रस्थी भार्या अस्य अर्धप्रस्थभार्यः । 'नातः' (७-१-४५) इति वृद्धिप्रतिषेधः । अज्ग्रहणं किम् । तावद्भार्यः । वैयाकरणभार्यः । अरक्तविकार इति किम् । काषायी बृहतिका अस्य काषायबृहतिकः । लौही ईषा अस्य लौहेषः । खादिरेषः ॥

---

१. 'षु च । न तु' ख, ग. पाठः.

स्वाङ्गाच्चेतोऽमानिनि ॥ ५० ॥

स्वाङ्गात् परो य ईकारस्तदन्तः स्त्रीशब्दोऽमानिनि परतः पुंवन्न भवति । दीर्घकेशीभार्यः । चन्द्रमुखीभार्यः । कलकण्ठीकल्पा । तनुमात्रीरूपा । चन्द्रमुखीयते । कलकण्ठीयते । स्वाङ्गादिति किम् । (पटुभार्यः । ईदिति किम् । अ)केशभार्यः । अमानिनीति किम् । दीर्घकेशमानिनी ॥

जातेश्च ॥ ५१ ॥

जातिशब्दः स्त्रीलिङ्गः अमानिन्युत्तरपदे अयकारादावनजादौ च तद्धिते परतः पुंवन्न भवति । कठीभार्यः । बह्वृचीभार्यः । कठीकल्पा । बह्वृचीरूपा । अयच्तद्धित इति किम् । दरदोऽपत्यं स्त्री दारदी तस्यां साधुः दारदः । औषिज्यः । पुंवद्भावात् ङीषो लुग् भवति । हस्तिनीनां समूहो हास्तिकम् । गार्ग्यायण्याः कुत्सितमपत्यं गार्गो जाल्मः । गार्गिकः । तद्धित इति किम् । कठीयते । बह्वृचीयते । अत्र जातिलक्षणः प्रतिषेधो भवत्येव । चकारः किम् । कठमानिनी ॥

पुंवत्कर्मधारयजातीयदेशीयेषु ॥ ५२ ॥

गुणवचनः स्त्रीलिङ्गशब्दोऽनूङ् स्त्रियामेकाधिकरणे उत्तरपदे कर्मधारये समासे जातीयदेशीययोश्च प्रत्यययोः परतः पुंवद् भवति । प्रतिषिद्धार्थ आरम्भः । कल्याणी चासौ (कल्याणी) पञ्चमी कल्याणपञ्चमी । कल्याणमाक्तिः । कल्याणप्रिया । कल्याणमनोज्ञा । पाचकवृन्दारिका । भद्रकवृन्दारिका । पाचकजातीया । भद्रकजातीया । पाचकदेशीया । भद्रकदेशीया । दत्तवृन्दारिका । गुप्तवृन्दारिका । दत्तदेशीया । गुप्तदेशीया । पञ्चमवृन्दारिका । षष्ठवृन्दारिका । पञ्चमदेशीया । षष्ठदेशीया । स्रौघ्नवृन्दारिका । माथुरवृन्दारिका । स्रौघ्नजातीया । माथुरदेशीया । श्लक्ष्णमुखवृन्दारिका । दीर्घकेशवृन्दारिका । श्लक्ष्णमुखजातीया । दीर्घकेशदेशीया । कठवृन्दारिका । बह्वृचवृन्दारिका । कठजातीया । बह्वृचदेशीया । वतण्डवृन्दारिका । गार्गवृन्दारिका । गार्ग्यवृन्दारिका । वातण्ड्यवृन्दारिका । वातण्ड्यजा-

तीया । गार्ग्यदेशीया । इडविडवृन्दारिका । ऐडविडवृन्दारिका । पृथुवृन्दारिका । पार्थवृन्दारिका । उषिजवृन्दारिका । औषिजवृन्दारिका । ऐडविडजातीया । दारददेशीया । पार्थजातीया । औशिजदेशीया । कपोतपाकवृन्दारिका । कपोतपाक्यवृन्दारिका । कौञ्जायन (वृन्दारिका) कौञ्जायन्यवृन्दारिका । कपोतपाक्यजातीया । कौञ्जायन्यदेशीया । (आतभ्यो वृन्दारिका गार्ग्यीवृन्दारिका (?) । गार्ग्यवृन्दारिका । यञ्ञीञ्प्रकाराः अञ्जातीयाः(?)। ईषदसमाप्ता गार्ग्याः ग(र्गि॰र्गी)देशीयाः। गुण इत्येव। खट्वावृन्दारिका । कुटीजातीया । द्रोणीदेशीया । अनूङित्येव । ब्रह्मबन्धूवृन्दारिका । करभोरूजातीया । मद्रबाहूदेशीया ॥

## त्वतलोर्गुणः ॥ ५३ ॥

गुणवचनः स्त्रीलिङ्गस्त्वतलोः परतः पुंवद् भवति । पट्व्या भावः— पटुत्वं पटुता । मृद्व्या भावः — मृदुत्वं मृदुता । शुक्लायाः — शुक्लत्वं शुक्लता । श्वे(त्याः॰न्याः) श्वेतत्वं श्वेतता । पाचिकायाः — पाचकत्वं पाचकता । मद्रकायाः — मद्रकत्वं मद्रकता । अनुकूलिन्याः — अनुकूलिकत्वं अनुकूलिकता । आक्षिक्याः — आक्षिकत्वम् आक्षिकता । द्वितीयायाः— द्वितीयत्वं द्वितीयता । पञ्चम्याः — पञ्चमत्वं पञ्चमता । माधुर्याः — माधुरत्वं माधुरता । स्रौघ्न्याः — स्रौघ्नत्वं स्रौघ्नता । चन्द्रमुख्याः— चन्द्रमुखत्वं चन्द्रमुखता । गुण इति किम् । क(ठि? ठी)त्वं क(ठि॰ठी)ता । गार्गीत्वं गार्गीता । दन्तत्वं दन्तता (?) रुक्मिणीत्वं रुक्मिणीता । गुणग्रहणेऽनुवर्तमाने गुणग्रहणं जातिसंज्ञानिवृत्त्यर्थं नतु पटुशुक्लादिगुणविशेषप्रतिपत्त्यर्थम् । तेनान्येऽपि समासकृत्तद्धिता विशेषणशब्दास्त्वतलोः पुंवद् भवन्ति । तद्यथा—"कामिनां मण्डनश्रीर्व्रजति हि सफलत्वं वल्लभालोकनेन" । "सैन्याः श्रियामनुपभोगनिरर्थकत्वं मिथ्याप्रवादमसृजन्नगनिम्नगानाम् ।" "बभौ बहुच्छत्रतया पताकिनी ।" "व्याकोशकोकनदतां दधते नलिन्यः ।" "सा भवे चरति दुःखशीलताम् ।" "इयेष सा कर्तुमवन्ध्यसीलताम्" । "यदङ्गनारूपसरूपतायाः" । "रचितामृतभूरिचारवो मन....घनना (?) । "निरीक्ष्य मेने शरदः कृतार्थताम् ।" "वपुरन्वलिप्त परिरम्भसुखव्यवधानभीलुकतया न वधूः" 'भर्तुर्विप्रकृतापि रोषणतया मा स्म प्रतीपं गमः" । "शिष्यतां निधुवनोपदेशिनः

शङ्करस्य रहसि प्रपन्नया"(कुमा० ८.६४।)"बद्धकोपविकृतीरपि रामाश्चारुताभिमततामुपनिन्ये। वश्यतां मधुमदो दयितानामात्मवर्गहितमिच्छति सर्वः" (कि० ९.६४।) "धृष्टता रहसि भर्तृषु *ताभिः क्लीबतामुपगताम्वनुवेलम्"। "गुणपूगपूरितमतृप्ततया। अतिहरनिरमाजि पुष्पश्रियामनुतरतयेव सन्तानकः।" (शिशु० स० ६. श्लो० ६७)

"तव प्रिया सच्चरितापमत्तया विभूषणं धार्यमिहांशुमत्तया।
रतोत्सवामोदविशेषवत्तया न मे फलं किं वनकान्तिमत्तया॥" (?)

इति। त्वतलोरिति किम्। पट्वीरूप्यः। पट्वीमयः। अनूङित्येव। पङ्गूत्वं, पङ्गूता। करभोरूत्वं, करभोरूता॥

## सर्वनामानि वृत्तिमात्रे॥ ५४॥

सर्वनामसंज्ञानि वृत्तिमात्रे पुंवद् भवन्ति। सर्वासां प्रियः सर्वप्रियः। भवत्याः पुत्रः भवत्पुत्रः। तस्या मुखं तन्मुखम्। एकस्याः क्षीरमेकक्षीरम्, एकस्या आगतमेकरूप्यम्। एकमयम्। भवत्या इदं भावत्कं भवदीयम्। सर्वामिच्छति सर्वकाम्यति। भवत्काम्यति। एककाम्यति। तामिच्छति तत्काम्यति। प्रतिषेधविषयेऽपि भवति। सर्विका भार्या अस्य स(र्विका ?-र्वक)भार्यः। विश्वकभार्यः। सर्वा प्रिया अस्य सर्वप्रियः। सर्वमनोज्ञः॥

## कुक्कुट्यादयोऽण्डादिषु वा॥ ५५॥

कुक्कुट्यादयः स्त्रीलिङ्गशब्दा अण्डादिषूत्तरपदेषु पुंवद्वा भवन्ति। कुक्कुट्या अण्डं कुक्कुटाण्डम्, कुक्कुट्यण्डम्। मयूराण्डं, मयूर्यण्डम् काकाण्डं, काक्यण्डम्। मृगपदं मृगीपदम्। मृगक्षीरं, मृगीक्षीरम्। मृगशावः, मृगीशावः। काकशावः, काकीशावः। (मृगीव चपला ?) कुक्कुट्यादयोऽण्डादयश्च प्रयोगतोऽनुगन्तव्याः। स्त्रीपुलिङ्गाद्यर्थभेदेन(?) समासविवक्षायां सूत्रानारम्भे मृगक्षीरादयो न सिध्यन्ति॥

## घरूपकल्पचेलड्ब्रुवगोत्रमतहतेषु ङ्यो ह्रस्वः॥ ५६॥

घादिषु प्रत्ययेषु चेलादिषु चोत्तरपदेषु एकाधिकरणेषु ङीप्रत्ययान्तस्य स्त्रीशब्दस्य ह्रस्वो भवति। ब्राह्मणितरा। गार्गितरा। ब्राह्मणिरूपा।

* "ताभिर्निर्दैवतवामितरैरबलासु" इति शिशुपालवधे पाठः, सर्गः १० श्लोकः ७१

गार्गिरूपा । ब्राह्मणिकल्पा । गार्गिकल्पा । ब्राह्मणिचेली । गार्गिचेली । ब्राह्मणिब्रुवा । (गार्गिब्रुवा) । (ब्राह्मणिगोत्रा) । गार्गिगोत्रा । ब्राह्मणिमता । गार्गिमता । ब्राह्मणिहता । गार्गिहता । परत्वात् पुंवद्भावो बाध्यते । कालि(क ?)तरा । गौरितमा । रोहि(ी ? णि)रूपा । हवि(?)कल्पा । चेलड्ब्रुवगोत्रहतानां 'कुत्सितानि (कुत्सितैः ? स्वार्थकुत्सनैः')' (३-१-८३) इति समासः । मतशब्दस्य *'श्रेण्यादयः कृतादिभिः' इति । ङ्य इति किम् । दत्तातरा । गुप्ततमा । कारिकारूपा, भद्रिकाकल्पा । ग्रामणीतरा । सेनानीतमा । लक्ष्मीतरा । तन्द्रीतमेत्यादावगुणवचनत्वादेव न भवति । गुण इति किम् । आमलकीतरा । आमलकीतमा । बदरीतमा । एकाधिकरण इत्येव । ब्राह्मण्या हता (ब्राह्मणीहता ॥)

**वैकाचः ॥ ५७ ॥**

एकाचः परा या ङीप् तस्या घादिषु प्रत्ययेषु चेलादिषु चोत्तरपदेषु एकाधिकरणेषु वा ह्रस्वो भवति । स्त्रीतरा । (स्त्रितरा । स्त्रीतमा) स्त्रितमा । ज्ञस्य भार्या ज्ञी ज्ञीतरा । (ज्ञितरा । ज्ञीतमा) ज्ञितमा । ईरूपा, इरूपा । ईकल्पा इकल्पा । स्त्रीकल्पा, (स्त्रिकल्पा) । स्त्रीगोत्रा, स्त्रिगोत्रा । ज्ञिमता, ज्ञीमता । इहता, ईहता । एकाच इति किम् । कुटीतरा द्रोणीतमा । ङ्य इत्येव । श्रीतरा, श्रीतमा । विरूपा, विकल्पा(?) । एकाधिकरण इत्येव । स्त्रिया हता स्त्रीहता ॥

**उगितः पुंवच्च ॥ ५८ ॥**

उगितो विहिता या ङी तस्या घादिषु प्रत्ययेषु चेलादिषु चोत्तरपदेषु ह्रस्वः पुंवच्च वा भवति । विदुषीतरा । विदुषितरा विद्वत्तरा । श्रेयस्तरा, श्रेयसितरा श्रेयसीतरा । श्रेयस्तमा, श्रेयसितमा, श्रेयसीतमा । पच(ति?न्ति)-रूपा पचन्तीरूपा पचद्रूपा । गोमतीकल्पा गोमतिकल्पा गोमत्कल्पा । बृहतीचेली बृहतिचेली बृहच्चेली । महतीब्रुवा महतिब्रुवा महद्ब्रुवा । पृथतीगोत्रा पृथतिगोत्रा पृथद्गोत्रा । भवतीमता भवतिमता भवन्मता । द्विषतीहता द्विषतिहता द्विषद्धता । उगित इति किम् । किशोरितमा । कुमा-

*. "श्रेण्येकपूग ---" (३. २. १०२) इति सरस्वतीकण्ठाभरणसूत्रस्थाने पाणिनीयं सूत्रं खण्डनार्थेन अनूदितम् ।

रितरा । विहितविशेषणं किम् । प्राचीतरा । प्राचीतमा । भोगवतरूपा गौरिम(ति ? ती)कल्पा । नात्र 'उगित' (३-४-१६) इति विहितः । अपि तु 'अञ्च' (३-४-१७) इति 'भोगवद्गौरिमतोः संज्ञायाम्' (३-४-१२४) इति च । यस्त्वसंज्ञायामुगित इति विधीयते । तस्य भोगवतीतरा भोगवतितरा भोगवत्तरा । गौरिमतीतरा गौरिमतितरा गौरिमत्तरेत्यादि भवति ॥

ऊङः ॥ ५९ ॥

घादिषु परत ऊङन्तस्य वा ह्रस्वो भवति । ब्रह्मबन्धुतरा, ब्रह्मबन्धूतरा । वामोरुतमा (वामोरूतमा) । मद्रबाहुरूपा, मद्रबाहूरूपा । कमण्डलुकल्पा, कमण्डलूकल्पा । कण्डुचेली, कण्डूचेली । पङ्गुब्रुवा, पङ्गूब्रुवा । श्वश्रुगोत्रा, (श्वश्रूगोत्रा) । कुरुतमा, कुरूतमा । भीरुतमा, भीरूतमा ॥

आन्महतः समानाधिकरणजातीययोरच्व्यर्थे ॥ ६० ॥

महच्छब्द(स्य चा?स्याच्व्य)र्थवृत्तेः समानाधिकरण उत्तरपदे जातीयप्रत्यये च परत आकारोऽन्तादेशो भवति । महादेवः, महादेवी । महाराज्ञी । महाबाहुः । महाकीर्तिः । महाजातीयः । समानाधिकरणजातीययोरिति किम् । महतः पुत्रः महत्पुत्रः । महत्याः पतिर्महतीपतिः । अच्व्यर्थ इति किम् । अमहान् महान् सम्पन्नः महद्भूतश्चन्द्रमाः । अमहती महती सम्पन्ना महद्भूता ब्राह्मणी । ननु चात्र सामानाधिकरण्यमेव नास्ति । च्विविषये प्रकृतिः कर्त्री न विकृतिः । तथा सङ्घीभवन्ति ब्राह्मणाः पटीभवन्ति तन्तव इति प्रकृतिसंख्याश्रयं बहुवचनं दृश्यते, न विकृतिसंख्याश्रयमेकवचनम् । तथा अत्वं त्वं सम्पद्यते त्वद्भवति (अनहमहं संपद्यते मद्भवति) इति प्रकृत्याश्रयः प्रथमपुरुषो दृश्यते, न विकृत्याश्रयौ मध्यमोत्तमाविति । ततश्च भूत इति निष्ठाप्रत्ययो भवनक्रियायाः कर्तर्यमहत्युत्पन्नो न महति । (अतो) वैयधिकरण्यादात्वं न भविष्यतीति नार्थः च्व्यर्थप्रतिषेधेन । नैतदस्ति च्विप्रत्ययो(ऽपि ? हि) परिणामविषयः । परिणामश्च यदैकोऽर्थः प्रकृतिविकारात्मतया ह्यनात्मको विकृत्यात्मना सम्पद्यमान आश्रीयते तदा भवति । यदाह—

"जहद् धर्मान्तरं पूर्वमुपादत्ते यदा परम् ।
तत्त्वादप्रच्युतो धर्मी *परिणामी तदोच्यते ॥"

*. 'परिणामः स उच्यते' इति मुद्रितवाक्यपदीयादिपाठः ।

तत्र विना

"पूर्वावस्थामविजहत् संस्पृश(द्ध ? न् ध)र्ममुत्तरम् ।
संमूर्छित इवार्थात्मा जायमानोऽभिधीयते ॥"

एवञ्च प्रकृतिविकृत्योर्भेदे विकारस्य भूतशब्देन सामानाधिकरण्यम् । अत एव महद्भूता ब्राह्मणीति पुंवद्भावो भवति । तद्वदात्वमपि स्यादिति च्व्यर्थ-प्रतिषेध आरभ्यते । इयं तु प्रकृत्याश्रयं वचनं पुरुषश्च दृश्यत इत्यकृत-च्व्यर्थे तस्य गतित्वेन क्रियाविशेषणत्वम्(?)। तदन्तर्भावे सति सङ्गीभवन-लक्षणायां (तन्म?म) हद्भव(ल्ल ? नल)क्षणायां क्रियायां च प्रकृतेरेव कर्तृत्वमिति युज्यत इति एवं गोमतीभूता महाशूद्रीति पुंवद्भावः । कस्मान्न भवति । उच्यते—घासादिषूत्तरपदेषु द्वयीविवक्षा । कदाचिद् प्रकृतिभागस्यो-द्रेकः कदाचिद् प्रत्ययभागस्य । द्वयमपि क्वचित् दृश्यते । यथा तीव्राः पाका तीव्रः पाक इति । तत्र यदा प्रत्ययार्थविशिष्टप्रकृतिभागोद्रेकविवक्षा तदा विकारेण गतित्वाद् क्रियाविशेषणतामापन्नेन च तस्य सामानाधिकरण्या स्सतीति पुंवद्भावो भवति — यथा महद्भूता ब्राह्मणीति । यदा तु प्रकृत्यर्थविशिष्टप्रत्ययार्थोद्रेकविवक्षा तस्य विकारिणा कर्तृभूतेन सह सामानाधिकरण्ये विकारेण सह वैयधिकरण्यात् पुंवद्भावो न भवति — यथा गोमतीभूता महाशूद्रीति ॥

## घासकराविशिष्टेषु पुंवच्च ॥ ६१ ॥

घासादिषूत्तरपदेषु महत्याः पुंवद्भावश्चकारादाकारोऽन्तादेशो भ-वति । पुंवदिति वचनाद् घासादीनां पुल्लिङ्गत्वादारम्भसामर्थ्याच्च व्यधि करणार्थोऽयमारम्भ इत्यवसीयते । महत्या घासो महाघासः । महत्या करो महाकरः । महत्या विशिष्टो महाविशिष्टः । केचित् पुनरन्वाचये चशब्दं मन्यमाना 'महतो घासो महाघास' इत्यादावप्यात्वं वर्णयन्ति ।

## न पुंवन्निषेधे ॥ ६२ ॥

महतीशब्दस्य पुंवन्निषेधविषय उत्तरपदे आत्वं न भवति । प्राति-पदिकग्रहणे लिङ्गविशिष्टग्रहणप्राप्तौ प्रतिपदनिषेधः । महती प्रिया अस्य महतीप्रियः । महतीमनोज्ञः ॥

### इच्यनचि दीर्घश्च ॥ ६३ ॥

इच्प्रत्ययान्ते अनजादावुत्तरपदे पूर्वपदस्य दीर्घ आत्त्वं च भवति । केशाकेशि । दण्डादण्डि । मुष्टीमुष्टि । बाहूबाहवि । दीर्घत्वात्त्वयोरनका-(रस्ते ? रान्ते)षु विशेषः । दीर्घसाहचर्यादात्त्वमप्यनजन्ता(दा ?)न्न भवति । दोर्दोषि, धनुर्धनुषि । अनचीति किम् । अस्यासि, इष्विषवि ॥

### दशस्यैकस्य ॥ ६४ ॥

दशन्शब्द उत्तरपद एकस्यात्त्वं भवति । एकादश । दशस्येति किम् । एकविंशतिः । एकस्येति किम् । पञ्चदश ॥

### अष्टनः संज्ञायाम् ॥ ६५ ॥

अष्टन्शब्दस्योत्तरपदे परतः संज्ञायामात्त्वं भवति । अष्टावक्रो मुनिः । अष्टापदं हेमादि । संज्ञायामिति किम् । अष्टदंष्ट्रः ॥

### कपाले हविषि ॥ ६६ ॥

(अष्टनः) कपाल उत्तरपदे हविष्यभिधेये आत्त्वं भवति । अष्टसु कपालेषु संस्कृतम् अष्टकपालं हविः । अष्टाकपालः पुरोडाशः । हविषीति किम् । अष्टानां कपालानां समाहारः अष्टकपालम् । पात्रादित्वात् स्त्रीत्वाभावः ॥

### गवि युक्ते ॥ ६७ ॥

अष्टन्शब्दस्य गव्युत्तरपदे तद्युक्तेऽभिधेये आत्त्वं भवति । अष्टागवं शकटम् । अष्टौ गावो युक्ता अस्मिन्निति त्रिपदे बहुव्रीहौ कृते उत्तरपदे परतः द्वयोर्द्विगुः । 'गोरतद्धितलुकि'(५-४-१०८)इति टच् समासान्तः । तत्र दीर्घत्वेन युक्तार्थसम्प्रत्ययात् गतार्थत्वाद् युक्तशब्दस्य गव्युत्तरपदे तद्युक्तेऽभिनिर्वृत्तिः । अथवा समाहारे द्विगुः । तत्र साहचर्यादभेदोपचारादष्टगवेन युक्तं शकटमष्टागवमुच्यते । युक्त इति किम् । अष्टगवं ब्राह्मणधनम् । अष्टगुर्देवदत्तः ॥

### द्व्यष्टनः सङ्ख्यायां प्राक्छतादबहुव्रीह्यशीत्योः ॥ ६८ ॥

द्वेश्चकारादष्टनः प्राक्छताद् या सङ्ख्या तस्यामुत्तरपदे आत्त्वं भवति, न चेद् बहुव्रीहिसमासोऽशीतिर्वोत्तरपदं भवति। द्वादश। द्वाविंशतिः। द्वात्रिंशत्। अष्टादश। अष्टाविंशतिः। अष्टात्रिंशत्। द्वेश्चेति किम्। पञ्चदश। संख्यायामिति किम्। द्वैमातुरः। आष्टमातुरः। प्राक्छतादिति किम्। द्विशतम्। अष्टशतम्। द्विसहस्रम्। अष्टसहस्रम्। अबहुव्रीह्यशीत्योरिति किम्। द्वित्राः। द्विदशाः। अष्टनवाः। द्व्यशीतिः॥

## चत्वारिंशदादौ वा ॥ ६९ ॥

द्वेः अष्टनः (च) प्राक्छताच्चत्वारिंश(तोः ? दादौ) संख्यायामुत्तरपदे अबहुव्रीह्यशीत्योरात्त्वं वा भवति। द्विचत्वारिंशत्। द्वाचत्वारिंशत्। अष्टाचत्वारिंशत्। (अष्टचत्वारिंशत्) द्विपञ्चाशत् द्वापञ्चाशत्। अष्टापञ्चाशत्। अष्टपञ्चाशत्। द्वाषष्टिः, द्विषष्टिः। अष्टाषष्टिः, अष्टषष्टिः। द्वासप्ततिः, (द्विसप्ततिः)। अष्टासप्ततिः, अष्टसप्ततिः। द्वानवतिः, द्विनवतिः। अष्टानवतिः। अष्टनवतिः। अबहुव्रीह्यशीत्योरित्येव। द्विचत्वारिंशत्, द्विचत्वारिंशाः। अष्टौ चत्वारिंशतोऽस्मिन्निति अष्टचत्वारिंशत्। द्व्यशीति। अष्टाशीति॥

## त्रेस्त्रयस्तद्वत् ॥ ७० ॥

द्व्यष्टन्शब्दयोर्यस्मिन् निमित्ते यथात्त्वं भवति तथा त्रिशब्दस्य त्रयसादेशो भवति। कश्चिन्नित्यः। कश्चिद्विकल्पः। क्वचिन्न भवति। तत्र नित्यम्— त्रयोदश। त्रयोविंशतिः। त्रयस्त्रिंशत्। विकल्पः— त्रयश्चत्वारिंशत् त्रिचत्वारिंशत्। त्रयःपञ्चाशत्, त्रिपञ्चाशत्। त्रयष्षष्टिः, त्रिषष्टिः। त्रय स्सप्ततिः, त्रिसप्ततिः। त्रयोनवतिः त्रिनवतिः। (क्वचिन्न भवति—) त्रिचतुराः। त्रिदशाः। त्र्यशीतिः। त्रिशतम्। त्रिसहस्रम्। त्रैमातुरः। इति॥

## हृदयस्य हृद् यदण्लेखलासेषु ॥ ७१ ॥

हृदयशब्दस्य यदणोः प्रत्यययोः परतः लेखलासयोश्चोत्तरपदयोः परतो हृदित्ययमादेशो भवति। हृदयस्य प्रियः हृद्यः। हृदयस्य बन्धनो मन्त्रः हृद्यः। हृदये भवं हृद्यम्। हृदयाय हितं हृद्यम्। हार्दं सौहार्दम्। हृदयं लि(ख ? ख)ति हृल्लेखः। हृदयस्य लासो हृल्लासः। अणसान्निधानाल्लेखशब्दः अणन्तो गृह्यते। तेनेह न भवति— हृदयस्य लेखो

हृदयलेखः । अणीति च सिद्धे लेखग्रहणं ज्ञापकमुत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तग्रहणं न भवतीति ॥

ष्यञ्शोकरोगशूलशल्यादिषु वा ॥ ७२ ॥

ष्यञ्प्रत्यये शोकादिषु चोत्तरपदेषु परतो हृदयस्य हृदादेशो वा भवति । सौहार्द्यं, सौहृदय्यम् । हृच्छोकः । (हृदयशोकः) । हृद्रोगः । हृदयरोगः । हृच्छूलः । (हृदयशूलः) । हृच्छल्यः । हृदयशल्यः । आदिग्रहणाद् हृद्दाहः, हृदयदाहः । हृद्दुःखं, हृदयदुःखम् । इत्या(दयो भवन्ति) ॥*  ....  ....  ....

....  ....  ....  ....  ....

....  ....  ....  ....  ....

हस्तिनोऽपत्याणि ॥ ७३ ॥

....  ....  ....  ...

....  ....  अपत्याणि परतः पदादेशो भवति । हस्तिपादस्यापत्यं हास्तिपदम् । शिवादिपाठादण् ॥

पत् काषिहिमहतिष्ठन्सु ॥ ७४ ॥

काष्यादिषूत्तरपदेषु ष्ठनि च प्रत्यये परतः पादस्य पदित्ययमादेशो भवति । पत्काषी । पद्धिमः । पद्धतिः । पादाभ्यां †  ...

यत्यतदर्थार्हीये ॥ ७५ ॥

...  ....  ....  ...

....  ....  इति किम् । पादार्थमुदकं पाद्यम् । 'पादार्घाभ्याम्' (५-४-६१)इति य(ञ् ? त्)। द्वाभ्यां पादाभ्यां क्रीतं द्विपाद्यम् । 'पण(मा ? पा)दमाषेभ्यो यत्'(५-१-३०)इत्यार्हीयो यत् ॥

---

* क· मातृकायामित उपरि कियांश्चिद् ग्रन्थो लुप्तः ।

† '... इत उत्तरं ग्रन्थपातः सम्भाव्यते ।

सङ्ख्यादेर्वुनि ॥ ७६ ॥

संख्यादेः पादस्य वुन्प्रत्यये परतः पदित्ययमादेशो भवति । द्विपदिकां ददाति । द्विपादिकं कार्षापणं ददाति ॥

ऋचः शसि ॥ ७७ ॥

ऋचः सम्बन्धिनः पादशब्दस्य शसिप्रत्यये परतः पदित्ययमादेशो भवति । पच्छो गायत्रीं शंसति । पादं गायत्र्याः शंसतीत्यर्थः । वाक्यगम्यस्य गायत्र्याः पादसम्बन्धस्य वृत्तौ निवृत्तत्वात् स्वाभाविकमेव शंसनक्रियायां कर्मत्वं भवति । ऋच इति किम् । पादश्लोकं व्याचष्टे पादशः ॥

वा घोषनिष्कमिश्रशब्देषु ॥ ७८ ॥

घोषादिषूत्तरपदेषु परतः पादस्य पदित्ययमादेशो वा भवति । पद्घोषः, पादघोषः । पन्निष्कः, पादनिष्कः । पन्मिश्रः, पादमिश्रः । पच्छब्दः, पादशब्दः ॥

नस् नासिकायास्तस्क्षुद्रयोः ॥ ७९ ॥

नासिकाशब्दस्य तस्प्रत्यये क्षुद्रे चोत्तरपदे परतो नसित्ययमादेशो भवति । नासिकायाः नस्तः । नासिकायां क्षुद्रः नस्क्षुद्रः ॥

यत्यवर्णे ॥ ८० ॥

नासिकाशब्दस्य यति प्रत्यये परतो वर्णादन्यस्मिन्नभिधेये नसित्ययमादेशो भवति । नासिकायां भवं, नासिकायै हितं नस्यम् । अवर्ण इति किम् । नासिक्यो वर्णः । नासिक्यं नगरम् । सङ्काशादित्वाच्चातुरर्थिको ण्यो भवति ॥

शिरसः शीर्षन् ॥ ८१ ॥

शिरश्शब्दस्य यत्प्रत्यये परतः शीर्षन्नित्ययमादेशो भवति । शिरसि भवः शीर्षण्यः । शिरस्यः । शीर्षण्याः केशाः । शिरस्याः इल्वलाः । मृग-

शिर(स्य : सः) शिरस्यास्तारकाः स्थूलाः । चलोऽवेद । शिर इव शिरस्यः । शाखादित्वाद् यः ।

### शीर्षोऽचि तद्धिते ॥ ८२ ॥

अजादौ तद्धिते परतः शिरसः शीर्षादेशो भवति । (हा : हा)स्तिशीर्षिः । पैलुशीर्षिः । स्थौलशीर्षिः । अचीति किम् । अशिरस्कः । शिरस्कः । कथं 'हास्तिशीर्ष्यो पैलुशीर्ष्य' इति । शीर्षादेशे कृते इञः ष्यङादेशो भविष्यति । तद्धित इति किम् । शिरसा शिरः । स्थूलशिरसमाचष्टे स्थूलशिरयति । कथम् 'स्थूलशीर्षोऽयम्' इति । शीर्षशब्दः प्रकृत्यन्तरमस्ति । तद्यथा 'शुनःशीर्षं वीनि' (१. ४. ७६) । (दर्भशीर्षेणोपिनिः सुलाहसं सव्यासमिति ?)

### उदकस्योदः संज्ञायाम् ॥ ८३ ॥

उदकशब्दस्योत्तरपदे परतः संज्ञायां विषये उद इत्ययमादेशो भवति । उदमेघो नाम यस्यौदमेघिः पुत्रः । उदपादः । उदधिः । उदवाहः समुद्रः । संज्ञायामिति किम् । उदकगिरिः । उदकोदञ्चनः ॥

### उत्तरपदस्य च ॥ ८४ ॥

उदकशब्दस्योत्तरपदभूतस्य संज्ञायां विषये उद इत्ययमादेशो भवति । क्षीरोदः समुद्रः । अच्छोदं सरः । शीतोदम् । अरुणोदः । लोहितोदः ॥

### पेषंवासवाहनेषु[1] ॥ ८५ ॥

पेषमादिषूत्तरपदेषु परतः उदकशब्दस्योद इत्ययमादेशो भवति । उदपेषं पिनष्टि । उदवासः । उदवाहनम् । असंज्ञार्थं वचनम् ॥

### एकहलादौ भाण्डे वा ॥ ८६ ॥

एकहलादौ भाण्डवाचिन्युत्तरपदे परतः उदकशब्दस्योद इत्ययमादेशो वा भवति । उदकुम्भः, उदककुम्भः । उदपात्रम्, उदकपात्रम् । एकहलादाविति किम् । उदकस्थालम् । भाण्ड इति किम् । उदकफेनः ॥

### मन्थौदनसक्तुबिन्दुवज्रभारहारवीवधगाहेषु ॥ ८७ ॥

---

१. 'नधिषु च' ख. ग. पाठः.

आग्न्यग्न्योरिन्धे ॥ ९८ ॥

इन्धे उत्तरपदे परतः आग्न्यग्न्योर्मुमागमो भवति । आग्निमिन्धः । अग्निमिन्धः ॥

अगिलस्य गिले ॥ ९९ ॥

गिलशब्द उत्तरपदे परतः अगिलशब्दस्य मुमागमो भवति । तिमिङ्गिलः । अगिलस्येति किम् । गिलस्य गिले गिलगिलः । गिलान्तस्यापि भवति । तिमिङ्गिलगिलः ॥

भद्रोष्णयोः करणे ॥ १०० ॥

भद्रोष्णशब्दयोः करणशब्द उत्तरपदे परतो मुमागमो भवति । भद्रङ्करणम् । उष्णङ्करणम् ॥

मध्यस्य दिने ॥ १०१ ॥

मध्यशब्दस्य दिने उत्तरपदे परतो मुमागमो भवति । मध्यन्दिनम् ॥

श्येनतिलयोः पाते ञे ॥ १०२ ॥

श्येन तिल इत्येतयोः पातशब्द उत्तरपदे ञप्रत्यये परतो मुमागमो भवति । श्येनपातोऽस्यां क्रियायां क्रीडायां वा श्यैनम्पाता । तैलम्पाता । ञ इति किम् । श्येनपातः । तिलपातः ॥

रात्रेः कृत्यखिति वा ॥ १०३ ॥

रात्रिशब्दस्य खितोऽन्यस्मिन् कृदन्त उत्तरपदे परतो मुमागमो वा भवति । रात्रिञ्चरः, रात्रिचरः । रात्रिमटः । रात्र्यटः । अ(चौ? खिती)ति किम् । रात्रिमन्यः ॥

धेनोर्भव्यायाम् ॥ १०४ ॥

धेनोर्भव्यशब्द उत्तरपदे मुमागमो वा भवति । धेनुंभव्या, धेनुभव्या ॥

सरात्रिः। सनाभिः। सबन्धुः। सगन्धः। सपिण्डः। समानः पतिरस्याः सपत्नी। आदिग्रहणात् सलोहितसकुक्षि(स)वेण्यादयो भवन्ति॥

चरणे ब्रह्मचारिणि॥ १२३॥

चरणे गम्यमाने ब्रह्मचारिण्युत्तरपदे परतः समानस्य सादेशो भवति। ब्रह्म वेदः तदध्ययनार्थं व्रतमपि ब्रह्म, तच्चरति ब्रह्मचारी। 'व्रत—' (१-४-१११) इति णिनिः। समानो ब्रह्मचारी सब्रह्मचारी। चरण इति किम्। प्रज्ञादिना समानो ब्रह्मचारी सब्रह्मचारी(?)॥

तीर्थे ये॥ १२४॥

यप्रत्ययान्ते तीर्थशब्द उत्तरपदे परतः समानस्य सादेशो भवति। समानतीर्थे वसति सतीर्थ्यः। 'समानतीर्थाद्यः'(४-४-१३४) इति यः॥

उदरे वा॥ १२५॥

उदरशब्दे यत्प्रत्ययान्त उत्तरपदे परतः समानशब्दस्य सादेशो वा भवति। समानोदरे शयितः सोदर्यः समानोदर्यः। 'समानोदर शयित—' (४-४-१८१) इति यत्॥

नामगोत्ररूपस्थानवर्णवयोवचनधर्मजातीयेषु च॥ १२६॥

समानशब्दस्य नामादिषूत्तरपदेषु परतः सादेशो वा भवति। सनामा समाननामा। सगोत्रः समानगोत्रः। सरूपः समानरूपः। सस्थानः समानस्थानः। सवर्णः समानवर्णः। सवयाः समानवयाः। सवचनः समानवचनः। सधर्मः समानधर्मः। सजातीयः समानजातीयः॥

दृग्दृशदृक्षेषु॥ १२७॥

दृगादिषूत्तरपदेषु समानशब्दस्य स इत्ययमादेशो भवति। पूर्वसूत्रे चानुकृष्टत्वाद्वेतीह नानुवर्तते। समान इव दृश्यते सदृक्। सदृशः। सदृक्षः॥

वतौ चेदंकिमोरीश्की॥ १२८॥

वतौ प्रत्यये चकाराद् दृगादिषूत्तरपदेषु इदं किमित्येतयोर्यथासंख्यमीश् की इत्येतावादेशौ भवतः। इयान्। ईदृ(शः ? क्)। ईदृशः। ईदृक्षः।

'किमिदंभ्यां वो घः' (५-२-६७) इति वतोर्वस्य घादेशः । ईशिति शकारः सर्वादेशार्थः । ईश् की इत्यसन्देहार्थः अविभक्तिको निर्देशः । अपवादत्वादात्वं बाधते ।

आ सर्वनाम्नः ॥ १२९ ॥

वतौ दृगादिषु च परतः सर्वनाम्न आकारोऽन्तादेशो भवति । यावान् । तावान् । एतावान् । यादृक् । यादृशः । यादृक्षः । तादृक् । तादृशः । तादृक्षः । अमूदृक् । अमूदृशः । अमूदृक्षः । अन्यादृक् । अन्यादृशः । अन्यादृक्षः । भवादृक् । भवादृशः । भवादृक्षः । त्वादृक् । त्वादृशः । त्वादृक्षः । मादृक् । मादृशः । मादृक्षः । एतादृक् । एतादृशः। एतादृक्षः ॥

विष्वग्देवयोश्च टेरद्रिरञ्चतौ वौ ॥ १३० ॥

विष्वग्देवयोः सर्वादीनां (त्वार्थ ? चाञ्च) तावप्रत्ययान्त उत्तरपदे परतष्टेः स्थाने अद्रिरित्ययमादेशो भवति । विष्वगञ्चति विष्वद्र्यङ् । देवद्र्यङ् । इदद्र्यङ् । विष्वग्देवयोरिति किम् । अश्वाची विष्वाची । अञ्चताविति किम् । (विष्वग्युक्) देवयुक् । वाविति किम् । विष्वगाश्वि (?) ॥

समः समिः ॥ १३१ ॥

समः अञ्च तावप्रत्ययान्त उत्तरपदे परतः समीत्ययमादेशो भवति । सम्यक् । सम्यञ्चौ । समीचः । समीचीनः ॥

सहस्य सध्रिः ॥ १३२ ॥

सहस्याञ्च तावप्रत्ययान्त उत्तरपदे परतः सध्र्यादेशो भवति। सहा(त्व ? ञ्च)तीति सध्र्यङ् । सध्र्यञ्चौ । सध्रीचः । सध्रीचीनः ॥

तिरसस्तिर्यति ॥ १३३ ॥

तिरश्शब्दस्याञ्चतावकारा(दावति ? दौ व)प्रत्ययान्त उत्तरपदे परतस्तिरि इत्ययमादेशो भवति । तिरोऽञ्चतीति तिर्यङ् । तिर्यञ्चौ ।

---

१. 'समि' ख. ग. पाठः.

तिर्यग्भ्यां तिर्यग्भिः । अतीति किम् । (तिरश्चः ?) तिरश्चः । तिरश्चीनम् ॥

द्व्यन्तरनवर्णान्तोपसर्गेभ्योऽप ईत् ॥ १३४ ॥

द्वि अन्तर् इत्येताभ्यामुपसर्गेभ्यश्चानवर्णान्तेभ्यः परस्याप् इत्येतस्योत्तरपदस्य उत्तरपदादेरी इत्ययमादेशो भवति । द्विर्गता आपोऽस्मिन्निति द्वीपम् । अन्तरीपम् । समीपम् । (सद्वीपम् ?) अनवर्णान्तेभ्य इति किम् । (प्रापम् । उपसर्गेभ्य इति किम् । शोभना आपः स्वापः । पूजिता आपः अत्यापः । स्वती पूजायां नोपसर्गौ । अतः समासान्तो न भवति ॥

ऊदनोर्देशे ॥ १३५ ॥

(अनोःपरस्यापः)देशेऽभिधेये आदेरूकारादेशो भवति । अनुगता आपोऽस्मिन्नित्यनूपो देशः । देश इति किम् । अन्वीपः । दीर्घोच्चारणमवग्रहार्थम् ॥

आत् समो देवयजने ॥ १३६ ॥

समः परस्यापः देवयजनेऽभिधेये आदेराकारादेशो भवति । समापः देवयजनम् । समीपमन्यत् ॥

छकारकयोरन्यस्य दुक् ॥ १३७ ॥

छप्रत्यये कारकशब्दे चोत्तरपदे अन्यशब्दस्य दुगागमो भवति । अन्यस्यायमन्यदी(यः?यः) । गहादित्वाच्छः । अन्यस्य कारकः अन्य(त्) कारकः ॥

अषष्ठीतृतीयास्थस्याशीराशास्थास्थितोत्सुकोतिरागेषु ॥ १३८ ॥

अषष्ठीस्थस्य(अ)तृतीयास्थस्य चान्यशब्दस्य(रागाःआशीरा)दिषूत्तरपदेषु दुगागमो भवति । अ(न्यस्यःन्या)आशीः अन्यदाशीः । अन्या आशा अन्यदाशा । अन्या आस्था अन्यदास्था । अन्य आस्थितः अन्यदास्थितः । अन्यास्मिन् उत्सुकः अन्यदुत्सुकः । अन्या ऊतिः अन्यदूतिः । अन्यस्मिन् रागः अन्यद्रागः । अषष्ठीतृतीयास्थस्येति किम् । अन्यस्य आशीः अन्याशीः । अन्येनास्थितः अन्यास्थितः ॥

अर्थे वा ॥ १९३ ॥

अर्थशब्दे परतोऽन्यस्य दुगागमो भवति वा। अन्यस्मै इदम् अन्यदर्थम् अन्यार्थम् । अन्यः अर्थोऽस्य अन्यदर्थः । (अ)षष्ठीतृतीयास्थस्येत्येव । अन्यस्यार्थः अन्यार्थः । अन्येनार्थः (अन्यार्थः ॥ )

कोः कत् तत्पुरुषेऽचि ॥ १४० ॥

तत्पुरुषे समासेऽजादावुत्तरपदे परतः कुशब्दस्य कदित्ययमादेशो भवति । कुत्सितोऽश्वः कदश्वः । कुत्सितमन्नं कदन्नम् । कदशनम् । कदुष्टः । अचीति किम् । कुब्राह्मणः । तत्पुरुष इति किम् । कूष्ट्रो राजा ॥

त्रिरथवदेषु ॥ १४१ ॥

त्र्यादिषूत्तरपदेषु परतः कुशब्दस्य कदादेशो भवति । कुत्सितास्त्रयः कत्रयः । कद्रथः । कद्वदः । बहुव्रीहावपि भवति । कुत्सितानि त्रीण्यस्य कत्रिः । कद्रथः । कद्वदः ॥

तृणे जातौ ॥ १४२ ॥

कुशब्दस्य तृण उत्तरपदे जातावभिधेयायां कदादेशो भवति । कत्तृणं रौहिषाख्या तृणजातिः । जाताविति किम् । कुत्सितानि तृणानि (कुतृणानि) ॥

का पथ्यक्षयोः ॥ १४३ ॥

पथिन् अक्ष(क्षि?इ)त्येतयोरुत्तरपदयोः कोः का इत्ययमादेशो भवति। कुत्सितः पन्थाः कापथः । कुत्सितः पन्था अस्मिन् कापथो देशः । कुत्सितोऽक्षः काक्षः । कुत्सिते अक्षिणी (का?अ)क्षाणि वा अस्य काक्षः । कथं कुपथं वनमिति । पथिन्शब्दसमानार्थः पथशब्दोऽव्युत्पन्नोऽस्ति । तेन भविष्यति । अनीषदर्थार्थं वचनम् ॥

ईषदर्थे ॥ १४४ ॥

ईषदर्थे वर्तमानस्य कुशब्दस्योत्तरपदे परतः का इत्ययमादेशो भवति । ईषन्मधुरं ( कामधुरम् ) । कालवणम् । अजादावपि परत्वादीषदर्थे काभाव एव भवति । कार्षं ताक्षम् (?) ॥

पुरुषे वा ॥ १४५ ॥

पुरुषशब्द उत्तरपदे परतः कुशब्दस्य का इत्ययमादेशो भवति वा । कुत्सितः पुरुषः कापुरुषः कुपुरुषः । अप्राप्तविभाषेयम् । ईषदर्थे तु पू(र्वे-णै)व नित्यं भवति । ईषत् पुरुषः कापुरुषः ॥

कवं चोष्णे ॥ १४६ ॥

उष्णशब्द उत्तरपदे परतः कुशब्दस्य कादेशः, चकारात् कवादेशश्च वा भवति । ईषत् कुत्सि(तो:तं)वा उष्णं कवोष्णम् । कोष्णम् । कदुष्णम् ।

दिक्छब्दात् तीरस्य तारः ॥ १४७ ॥

दिक्छब्दादुत्तरस्य तीर इत्येतस्य तार इत्ययमादेशो वा भवति । दक्षिणतारं दक्षिणतीरम् । उत्तरतारं उत्तरतीरम् । दिक्छब्दादिति किम् । गङ्गातीरम् ॥

पृषद् उदरोद्धानयोर्लोपः ॥ १४८ ॥

पृषच्छब्दस्योदरोद्धानयोरुत्तरपदयोः परतोऽन्तलोपो भवति । पृष(त्) उदरं पृषोदरम् । पृषद् उदरमस्य पृषोदरः । पृष(द्)उद्धानं (पृषो-द्धानम्) ॥

अवाप्योस्तंसनद्धादिष्वादेर्वा ॥ १४९ ॥

तंसादिषु चोत्तरपदेषु परतः यथासंख्यमवाप्योरादिलोपो वा भवति । वतंसः अवतंसः । वक्रयः अवक्रयः । पिनद्धम् अपिनद्धम् । पिहि-तम् अपिहितम् । पिधानम् अपिधानम् ॥

जीवनस्य मूते वादेः ॥ १५० ॥

मूतशब्द उत्तरपदे परतो जीवनशब्दस्य वकारादेरवयवस्य लोपो भवति । जीवनं जलं तस्य मूतः पुटबन्धः जीमूतो मेघः ॥

वारेर्वो वाहके[२] लश्चोत्तरपदादेः ॥ १५१ ॥

वारिशब्दस्य वाहकशब्द उत्तरपदे परतो व इत्यादेशः उत्तरपदा-देश्च लकारादेशो भवति । वारिणो वाहकः वलाहकः मेघः ॥

१. 'त्था', २. 'के वल' ख. ग. पाठः.

आङो ध्यःष्टुः ॥ १५२ ॥

आङः परस्य ध्य उत्तरपदस्यादेः ष्टु इत्ययमादेशो भवति(?)—

... ... ... ... ... ... ... ... ...

(दुरो दाशनाशदभध्येषूच्च ॥ १५३ ॥

षषो दशसु ॥ १५४ ॥

मह्यां रौति मयूरः ॥ १५५ ॥

शेते महिषः ॥ १५६ ॥

मह्यां शेत इत्यस्मिन्नर्थे महिष इति निपात्यते । महिषो लुलायः । मयूरमहिषशब्दावुणादिष्वन्वाख्यातावपि पुनर्व्युत्पादयन्ननेकधा(?)शब्दानां व्युत्पत्तिर्भवति इति दर्शयति ॥

पिशाचश्मशाने पिशिताशशवशयनयोः॥ १५७ ॥

पिशाचः श्मशा(ने?नम्) इत्येतौ शब्दौ यथासंख्यं पिशिताशः शवशयन(म्)इत्येतयोरर्थयोर्निपात्येते । पिशितभक्षीति पिशाचः । शवानां शयनं श्मशानम् ॥

वाग्वादस्येञि वाड्वलः ॥ १५८ ॥

वाग्वादस्येञि परतो वाड्वलादेशो भवति । वाग्वादस्यापत्यं वाड्वलिः ॥

ब्रुवन्तोऽस्यां सीदन्ति बृसी ॥ १५९ ॥

(ब्रुवन्तः) अस्यां सीदन्तीत्यस्मिन्नर्थे बृसी इति निपात्यते । ब्रुवन्तः प्रवक्तारोऽस्यां सीदन्तीति बृसी ॥

ऊर्ध्वं खमस्योदूखलमुलूखलं वा ॥ १६० ॥

ऊर्ध्वं खमस्यास्तीत्यस्मिन्नर्थे उदूखलमुलूखलमिति वा निपात्यते । ऊर्ध्वं खमस्योदूखलमुलूखलं वा । यत्र बहुव्रीह्यादयः क्षुद्यन्ते ॥

दिव्योक एषां दिवौकसः ॥ १६१ ॥

---

* इतः परं सूत्रत्रयं कमातृकायां न दृश्यते । धनूरेखान्तर्गतानि सूत्रपाठादुद्धृत्य लिखितानि ।

दिव्योक एषामित्यस्मिन्नर्थे दिवौकस इति निपात्यते । दिवि स्वर्गे ओक एषां दिवौकसो देवाः ॥

**कपित्थदधित्थमहित्थाश्वत्थादयश्च ॥ १६२ ॥**

कपित्थादयश्च शब्दाः साधवो भवन्ति । कपयोऽस्मिंस्तिष्ठन्ति कपित्थः । दध्नि तिष्ठति दधित्थः । मह्यां तिष्ठति महित्थः । अश्व इव तिष्ठति अश्वत्थः । आदिग्रहणान्मुहूर्तसिन्धाश्वामनिल्वयन्यादयो(?) भवन्ति ॥

**सङ्ख्याविसायादेरह्नस्याहन् ङौ वा ॥ १६३ ॥**

संख्यादेरह्नशब्दस्य ङौ परतोऽहन्नादेशो वा भवति । द्वयोरह्नोर्भवो द्व्यह्नः । तस्मिन् द्व्यहनि । द्व्यह्नि । द्व्यह्ने । त्र्यहनि । त्र्यह्नि । त्र्यह्ने । विगत-महर्व्यह्नः । तस्मिन् व्यहनि । व्यह्नि । व्यह्ने । सायमह्नः सायाह्नः । तस्मिन् सायाहनि । सायाह्नि । सा(याह्ने)* ॥

**सायं लोह्लतरयोः ॥ १६४ ॥**

**सप्तम्यां वा सा च ॥ १६५ ॥**

**विश्वस्य वसुराटोर्दीर्घः ॥ १६६ ॥**

**नरे संज्ञायाम् ॥ १६७ ॥**

**ऋषौ मित्रे ॥ १६८ ॥**

**कोटरमिश्रकसिध्रकपुरगशारिकाणां वने ॥ १६९ ॥**

**अञ्जनभञ्जनकिंशुककिंलुकसाल्वलोहितकुक्कुटखड्डू-ननलपिङ्गलानां गिरौ ॥ १७० ॥**

**मतौ बह्वचोऽनजिरखदिरखपुरस्थविरपुलिनमलयकार-ण्डवचक्रवाकादीनाम् ॥ १७१ ॥**

**शरवंशशुचिकुशधूमाहिकविहनुमुन्यादीनां च ॥१७२॥**

---

*त्रयोदशसूत्राणि तद्वृत्तयश्च क मातृकायां न दृश्यन्ते । सूत्रपाठानुसारेण सूत्राणि परं लिखितानि ।

वलष्यनुत्साहभ्रातृपितॄणाम् ॥ १७३ ॥

चितेः कपि ॥ १७४ ॥

ढ्लोपे पूर्वस्याणः ॥ १७५ ॥

सहिवहोरोदवर्णस्य ॥ १७६ ॥

कर्णे चिह्नस्याविष्टाष्टपञ्चभिन्नच्छिन्नच्छिद्रस्रुवस्वस्तिकस्य ॥ १७७ ॥

कर्णशब्द उत्तरपदे परतश्चिह्नवाचिनो विष्टादिवर्जितस्य दीर्घो भवति। यत् पश्वादीनां स्वामिविशेषसम्बन्धज्ञानाय लक्षणं क्रियते तच्चिह्नम्। दात्राकर्णः। द्विगुणाकर्णः। द्व्यङ्गुलाकर्णः। त्र्यङ्गुलाकर्णः। चिह्नस्येति किम्। (गोत?शोभ)नकर्णः। लम्बकर्णः। आविष्टादेरिति किम्। विष्टकर्णः अष्टकर्णः। पञ्चकर्णः। भिन्नकर्णः। छिन्नकर्णः। छिद्रकर्णः। स्रुवकर्णः। स्वस्तिककर्णः॥

नहिवृतिवृषिव्यधिरुचिसहितनिषु क्वौ ॥ १७८ ॥

नह्यादिषु क्विबन्तेषूत्तरपदेषु परतः पूर्वपदस्य दीर्घो भवति। उपानत्। परीणत्। नीवृत्। उपावृत्। प्रावृट्। परीवृट्। श्वावित्। मर्मावित्। नीरुक्। अभीरुक्। ऋतीष(हकं?ट्)। परीतत्। 'गमयमतनादीनां क्वौ' (६-३-४७) इत्यनुनासिकलोपः। क्वाविति किम्। (उपतध्वं वित? परिणहनम्।)··· ···

उपसर्गस्य घञि बहुलम् ॥ १७९ ॥

(उपसर्गस्य) घञन्त उत्तरपदे परतः बहुलं दीर्घो भवति। प्रतिवेशः। प्रतीवेशः। प्रतिबोधः प्रतीबोधः। प्रतिहारः प्रतीहारः। प्रतीकारः प्रतिकारः। अतिसारः अतीसारः। क्वचिद् भिन्नविषये। प्राकारः प्रकारः। प्रासादः प्रसादः। विमार्गः वीमार्गः। अपामार्गः। अपमार्गः। क्वचिन्न भवति।

वेषादः । निषादः । प्रतापः । प्रमादः । क्वचिद् भवत्येव — नीवारः । नीहारः । नीसारः । प्रावारः ॥

इकः काशे ॥ १८० ॥

इगन्तस्योपसर्गस्य काशशब्द उत्तरपदे दीर्घो भवति । नीकाशः । प्रतीकाशः । इक इति किम् । प्रकाशः । बहुलमित्येव । निकाशः । अ(य?ज)र्थ आरम्भः ॥

दस्ति ॥ १८१ ॥

दा इत्येतस्य यस्तकारादिरादेशस्तस्मिन् परत इगन्तस्योपसर्गस्य दीर्घो भवति । नीत्तम् । वीत्तम् । परीत्तम् । तीति किम् । (शदन्त ? सुदत्तम्) । इक इत्येव । प्रत्तम् । अवत्तम् । दं इति किम । विकीर्णः । (अचः)'उपसर्गाद(ज ? च)स्तः' (७- ३- ९८) इति यद्यप्यन्त्यस्य तकारः क्रियते तथापि चर्त्वस्याश्रयात् सिद्धत्वमिति तकारादिरादेशो भवति ॥

अपीलुदार्वादेर्वहे ॥ १८२ ॥

वहशब्द (स्यो ? उ)त्तरपदे परतः पीलुदार्वादिवर्जितस्य पूर्वपदस्य दीर्घो भवति । कपीवहः । ऋषीवहः । मुनीवहः । अपीलुदार्वादेरिति किम् । पीलुवहः । दारुवहः । आदिग्रहणाच्चारुवहमित्यादावपि न भवति । इक इत्येव । पिण्डवहम् । काष्ठवहम् ॥

अन्येषामपि दृश्यते ॥ १८३ ॥

अन्येषामपि शब्दानां बहुलमुत्तरपदेऽनुत्तरपदे च दीर्घो भवति । श्वादन्तः । श्वादंष्ट्रा । श्वाकर्णः । क्वचिन्न भवति — श्वफल्कः । श्वमुखः । क्वचिद् विकल्पः — श्वपुच्छः, श्वापुच्छः । क्वचिद्विषयान्तरे — श्वपदं, श्वापदम् । क्वचिदनुत्तरपदे—पुरुषः, पूरुषः । नरकः, नारकः । दृशिग्रहणं प्रयोगानुसारार्थम् । तेनायं विषयविभागो भवति ॥

चौ ॥ १८४ ॥

चावित्यञ्चतिर्लुप्ताकारनकारो गृह्यते । तस्मिन्नुत्तरपदे परतः पूर्वस्य दीर्घो भवति । दधीचः पश्य । दधीचा । दधीचे । मधूचः पश्य । मधूचा ।

मधूचे । प्राची । (प्रा॰प्र)तीची । अन्तरङ्गोऽपि यणादेशो विधानसामर्थ्याद् दीर्घेण बाध्यते ॥

**सम्प्रसारणस्य ॥ १८५ ॥**

सम्प्रसारणान्तस्योत्तरपदे परतो दीर्घो भवति । कारीषगन्धीपुत्रः । कारीषगन्धीपतिः । कारीषगन्धीबन्धुः । कौमुदगन्धीबन्धुः ॥

इति श्रीदण्डनाथनारायणभट्टसमुद्धृतायां सरस्वतीकण्ठाभरणस्य
व्याकरणस्य लघुवृत्तौ षष्ठस्याध्यायस्य
द्वितीयः पादः ॥

---

## अथ तृतीयः पादः।

### प्रकृतेः ॥ १ ॥

अधिकारोऽयम्, 'पदस्य वीप्सायां द्वे'(७-३-१)इति यावत्। ततः प्राग् यदित ऊर्ध्वमनुक्रमिष्यामः, प्रकृतेरित्येवं तद्वेदितव्यम्। वक्ष्यति — हलादेरन्त्यस्य' (६-३-२)— हूतः। जीनः। प्रकृतेरिति किम्। निरुतम्। दुरुतम्। 'नामि–'(६-३-३)–अग्नीनाम्। वायूनाम्। प्रकृतेरिति किम्। क्रिमिणां पश्य। पामनां पश्य। 'वा संयोगादे(व ? रस्थः)' (६-३-७८)– ग्लेयात्। ग्लायात्। प्रकृतेरिति किम्। निर्यायात्। (पुङ्क्ष्व क्ष्यधमाय्व्योङे ? 'लुङ्लङ्लृङ्क्ष्वडमाड्योगे') (६-३-८?)– अकार्षीत्। (एहि ? येहि(ह))। प्रकृतेरिति किम्। प्राकरोत्। उपैहि(ह)। 'अचि श्नुधातुभ्रुवां य्वोरियुवौ' (६-३-८२)— श्रियः। भ्रुवः। प्रकृतेरिति किम्। श्र्यर्थम्। भ्र्वर्थम्। ('के तद्धितेऽणो ह्रस्वः') (७-२-६९) — कुमारिका। प्रकृतेरिति किम्। कुमा(रीय ? री)कायति कुमारीकः। *'युवोरनाकावुपदेशे'- नन्दनः। कारकः। प्रकृतेरिति किम्। (प्रकृती ?)। दीव्यन्। 'उरत्' (७-२-१२३)– वव्रश्च। वव्रश्चतुः। अतुसि सति उत्तरस्य प्रत्ययस्य निमित्तत्वात् 'अचः परस्मिन् —' (१-२-४४) इति स्थानिवद्भावे वकारस्य 'न तस्मिन्' (६-१-४७) इति संप्रसारणप्रतिषेधः सिद्धो भवति। प्रकृतेरिति (किम् ?) सम्बन्धसामान्ये षष्ठी। सा यथायथं प्रदेशवाक्येषु सम्बन्धविशेषानुपस्थापयति। 'अष्टनो वा (स्या)त्' (६-४-५३), 'त्यदादीनां तसादिषु चा(र्थे ध ? द्वेरः) (६-४-७१) इति स्थानषष्ठी। 'हलादेरन्त्यस्य' (६-३-२) † 'ऊर्णोतेश्चोपधायाः' (?) इत्यवयवषष्ठी। ‡ 'अष्टनोर निज्झलि'(?) * युवोरनाकावुपदेशे' इति निमित्तषष्ठीति ॥

### हलादेरन्त्यस्य ॥ २ ॥

सम्प्रसारणस्य दीर्घ इति चानुवर्तते। हलादिप्रकृतिसम्बन्धिनोऽन्त्यस्य संप्रसारणस्य दीर्घो भवति। हूतः। जीनः। संवीतः। (शु ? शू) नः।

---

*'युवोरनाकावस:' (६-४-१) इत्येवोपरिष्टादानुपूर्वी दृश्यते। † 'ऊद् गोहोऽचः' (६-३-९२) 'उपधायाश्च' (६-४-८) इति स्यात्. ‡ 'अज्झनो: सनि झलि' (६-३-११) इति स्यात्.

हलादेरिति किम् । उतः । उतवान् । (कान्त?अन्त्य)स्येति किम् । विद्धः । (नि ? वि)चितः । प्रकृतेरित्येव । निरुतम् । दुरुतम् ॥

### नाम्यतिसृचतस्रोः ॥ ३ ॥

नामिति षष्ठीबहुवचनमागतनुट्कं गृह्यते, तस्मिन् तिसृचतसृवर्जितायाः प्रकृतेरन्त्यस्याचो दीर्घो भवति । वृक्षाणाम् । अग्नीनाम् । वायूनाम् । कर्तॄणाम् । अतिसृचतस्रोरिति किम् । तिसृणाम् । चतसृणाम् (ओः ? सनुट्)-कस्य निर्देशः कृते नुटि दीर्घप्रतिपत्त्यर्थम्, अन्यथा नुडभावः स्यात् । उत्तरार्थश्च ॥

### *नुर्वा ॥ ४ ॥

### न उपधायाः ॥ ५ ॥

नान्तायाः प्रकृतेर्या उपधा तस्या नामि परतो दीर्घो भवति । पञ्चानाम् । सप्तानाम् । नवानाम् । दशानाम् । न इति किम् । चतुर्णाम् । षण्णाम् । नामीत्येव । चर्मणाम् । पर्वणाम् ॥

### शिसुट्यशीसम्बुद्ध्योः ॥ ६ ॥

शौ सुटि च शीसम्बुद्धिवर्जिते परतो नान्तायाः प्रकृतेः उपधाया दीर्घो भवति । सामानि तिष्ठन्ति । सामानि पश्य । वेमानि । लोमानि । पामाविह नान्तत्वं 'तान्येकवचनद्विवचनबहुवचनानि–' (१· १· २२) इति लिङ्गात् (?)। कुण्डानि । वनानि । वारीणि । दधीनि । मधूनि । त्रपूणि । राजा । राजानौ । राजानः । राजानम् । राजानौ । सीमा सीमानौ । सीमानः । सीमानम् । सीमानौ । अशीसम्बुद्ध्योरिति किम् । चर्म(णि?णी) तिष्ठतः । चर्म(णि?णी) पश्य । वारिणी । मधु (नि ? नी । हे राजन् । हे सीमन् ॥

### स्महतोर्नुमि ॥ ७ ॥

सान्ताया महतः प्रकृतेः शौ सुटि चाशीसम्बुद्ध्योः परतस्तन्निमित्ते नुम्युपधाया दीर्घो भवति । श्रेयांसि तिष्ठन्ति । श्रेयांसि पश्य । पयांसि । यशांसि । महान्ति तिष्ठन्ति । महान्ति पश्य । श्रेयान् । श्रेयांसौ । श्रेयांसः । श्रेयांसम् । श्रेयांसौ । महान् । महान्तौ । महान्तः । परममहान् । 'प्रकृ-

---

* सूत्रमिदं वृत्तिश्च क. मातृकायां न दृश्यते ।

त्यधिकारे महदादिभिः'(१- ४- २२) इति तदन्तविधिः । नुमीति किम् अप्सरसः । सुमनसः । झिलुणिनिमित्तस्य नुमो ग्रहणादिह न भवति । सुहिंसौ । सुहिंसः । सुकंसौ । सुकंसः । अशीसम्बुद्ध्योरित्येव । हे श्रेयन् । हे महन् ॥

अप्तृंस्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृप्रस्तोतृ-न्नेतृद्गातृप्रतिहर्तृप्रतिप्रस्थातृणाम्[1] ॥ ८ ॥

तृ(न्नि ? इ)ति तृन्तृचोर्ग्रहणम् । अप्शब्दस्य तृन्नन्तस्य तृजन्तस्य च स्वस्रादीनां च शौ सुटि च शीसम्बुद्धिवर्जिते परत उपधाया दीर्घो भवति । आपः । स्वापः । स्वाम्पि । समासान्तविधेरनित्यत्वादज् न भवति । नित्यमपि नुममकृत्वा दीर्घत्वमिष्यते । पूर्ववत् तदन्तविधिः । एवं कर्त्तारौ । परमकर्त्तारौ । परमस्वसारौ । जामातारौ । अशीसम्बुद्ध्योरित्येव । कर्तॄणि । हे कर्त्तः । हे स्वसः ॥

अत्वसन्तस्याधातोः सौ ॥ ९ ॥

अत्वन्तस्यासन्तस्य च धातुवर्जितस्य सावसम्बुद्धौ परतः उपधाया दीर्घो भवति । भवान् । कृतवान् । गोमान् । यवमान् । मतुपः ... .. .... न पुनः अन्यशब्दश्चेत्यत्रापि भवन्ति (?) । अत्व .... ... सत्वात् कृते दीर्घे नुमागमः । असन्तस्य — अप्सराः । अङ्गिराः । चन्द्रमाः । स्थूलशिराः । सुमनाः । अधातोरिति किम् । पिण्डं ग्रसते पिण्डग्र(ह ?)ः । चर्म वस्ते चर्मवः । 'अर्थवद्ग्रहणे नानर्थकस्य'(१-२-७३) इति सिद्धे अधातोरिति वचनम् *'अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ती'ति परिभाषाज्ञापनार्थम् । तेनात्रापि भवति — खरणाः । खुरणाः । असम्बुद्धावित्येव । हे भवन् । हे सुमनः ॥

इन्हन्पूषार्यम्णां शौ च ॥ १० ॥

इन्नन्तस्य हनादीनां च (शौ) सावेव चासम्बुद्धौ परत उपधाया दीर्घो भवति । दण्डीनि । छत्रीणि । दण्डी । छत्री । भ्रूणहा । बहुपूषाणि । पूषा । बह्वर्यमाणि । (अर्यमाणि ?) । अर्यमा । सौ (शौ)चेति किम् । दण्डिना ।

---

1. 'प्तृन्तृच्स्व' क. पाठः.

---

* इयं च पाणिनीया परिभाषा । 'न वर्णानिनस्मन् ग्रहणेषु' (१-२-७४) इति दर्थानुवादकं भोजसूत्रम् ॥

दण्डिनः । वृत्रहणम् । असम्बुद्धावित्येव । हे दण्डिन् । हे (पुत्र ? वृत्रह) न् । हे पूषन् । हे अर्यमन् ॥

अज्झनोः सनि झलि ॥ ११ ॥

अजन्तायाः प्रकृतेः हन्तेश्च झलादौ सनि परतोऽचो दीर्घो भवति । चिचीषति । तुष्टूषति । चिकीर्षति । जिघांसति । झलीति किम् । पिपविष- (ति ? ते ।) प्रकृतेरित्येव । दधि.... .... .... सनोति ॥

इङो गमः ॥ १२ ॥

इङादेशस्य गमेर्झलादौ सनि परतः अचो दीर्घो भवति । अधि- जिगांसते वेदम् । इङ इति किम् । सञ्जिगंसते वत्सो मात्रा ॥

तनोर्वा ॥ १३ ॥

तनोतेर्झलादौ सनि परतो वा दीर्घो भवति । तितांसति तितंसति । झलीत्येव । तितनिषति । 'सनि 'इवन्तर्ध—' (६. ४. १२६) इत्यादिना इड्विकल्पः ॥

क्रमः क्त्वि ॥ १४ ॥

क्रमः प्रकृतेः क्त्वाप्रत्यये झलादौ परतो वा दीर्घो भवति । क्रान्त्वा क्रान्त्वा । झलीत्येव । क्रमित्वा । 'उदितो वा' (६-४-१२४) इतीड्विकल्पः । प्र(क्रत्ये ? क्रम्ये) त्यादौ 'भाविनि —' (६- ४- ६) इति वचनात् बहि- रङ्गोऽपि ल्यबन्तरङ्गान् विधीन् बाधित्वा (पत्व ? प्रथम)मेव भवति ॥

अहन्ञमस्तिक्त्यपिति किति वौ च ॥ १५ ॥

ञमन्तायाः प्रकृतेः हन्वर्जितायाः वौ झलादौ च ति(क्त्यपि)ति (किति) प्रत्यये परतः दीर्घो भवति । प्रशान् । प्रतान् । (प्रद्यु ?) । झलादौ— शान्तः । शान्तवान् । शान्त्वा । शान्तिः । (ञम इति किम् ।) पक्त्वा । हन्- प्रतिषेधः किम् । वृत्रहणि । भ्रूणहनि । कितीति किम् । गन्ता । (कृती(?)झली) त्येव । गम्यते । शंशान्तः (शंशा ? दंदा) न्त इति य(ङ ? ङ्लुग)न्तस्य छान्दसत्वाद् दीर्घो भविष्यति ॥

ञमि च च्छ्वोः शूठौ ॥ १६ ॥

ञमादौ वौ झलादौ च प्रत्यये परतः सतुक्कस्य (छकारस्य) वका- रस्य च यथासङ्ख्यं श ऊठ् इत्येतावादेशौ भवतः । प्रश्नः । विश्नः । शब्दप्राट् ।

१. "वौ" का ख. ग. पाठः.

गोविद्। पृष्टः। पृष्टवान्। प्रष्टा। (पृ ? प्र)ष्टुम्। स्योनः। स्योमा। सिवेरौ णादि (के ? कौ)नमनिन्प्रत्य(येन ? यौ)। लघूपधाश्रयत्वात्(न)वार्णात् प्राकृतं बलीयो भवति। अक्षद्यूः। हिरण्यष्ठूः। 'असिद्धं बहिरङ्गमन्तरङ्गे' (१-२-८४) इति 'नाजानन्तर्ये' (१-२-८५) इति प्रतिषिध्यत इति यणादेशो भवति। द्यूतः। द्यूतवान्। दुद्यूषति। कथं द्युभ्यां द्युभिरिति। (ऊठि कृते 'पदान्ते दिव उत्' (६-१-१४७) इति तपरत्वान्मात्राकालो) भविष्यति। ञमि चेति किम्। (प्रच्यते ? पृच्छ्य)ते। दीव्यते। ठकार 'ऊठि' (६-१-१००)इति विशेषणार्थः॥

## स्रिव्यविमविज्वरित्वरामुपधायाश्च॥ १७॥

स्रिव्यादीनां ञमादौ वौ झलादौ च प्रत्यये परतः वकारस्योपधाया-श्चोठादेशो भवति। (स्योमामो ? स्रोमा ओमा) मोमा। जूर्मा। तूर्मा। स्रूः। स्रुवौ। (धूर्मद्रूः ?) स्रुवः। ऊः। उवौ। उवः। (मूः। मुवौ। मुवः।) जूः। जूरौ। जूरः। तूः। तूरौ। तूरः। स्रूतः। स्रूतवान्। स्रूतिः। ऊतिः। मूतिः। जूर्तिः। '(तितु ? श्रेर)ग्रह-' (६-४-१३६) इत्यादिना इट्प्रतिषेधः। तूर्णम्। तूर्णवान्। तूर्तिः॥

## राल्लोपः॥ १८॥

रेफात् परयो(श्वेत्वा ? श्छ्वोः) ञमादौ वौ झलादौ च प्रत्यये परतः लोपो भवति। हूर्मा। मूर्मा। तूर्मा। धूर्मा। हूः। हुरौ। हुरः। मूः। मुरौ। मुरः। तूः। तुरौ। तुरः। धूः। धुरौ। धुरः। हूर्णः। हूर्णवान्। हूर्तिः।) मूर्तः। मूर्तवान्। मूर्तिः। तूर्णः। तूर्णवान्। तूर्तिः। धूर्णः। धूर्णवान्। धूर्तिः। ञमि चेत्येव। मूर्छा धुर्विता॥

## प्राग्युवोरयुगवुगसिद्धं समानाश्रये॥ १९॥

(गु ? यु)वोरिति संशब्दनात् प्रा… …. …. …. रवर्जितं कार्यं समानाश्रये प्रत्यये कार्यान्तरे कर्तव्ये असिद्धं भवति। असिद्ध-वचनमुत्सर्गलक्षणभावार्थमादेशलक्षणप्रतिषेधार्थं च। एधि। शाधि। अस्ति-शास्त्योरेत्वशाभावयोः कृतयोर्झलक्षणं धित्वं न प्राप्नोति। असिद्धत्वाद् भवति। जहि गतवानिति जभावे अनुनासिकलोपे च कृते आदेशलक्षणौ (नि ? हि)लुगल्लोपौ प्राप्नुतः। असिद्धत्वान्न भवतः। तत्र तस्य च भावात् स(ता ? माना)श्रयत्वमेतेषाम्। समानाश्रयलक्षणश्चात्र विधिः। न(ल्या ?

व्या)श्रयलक्षणप्रतिषेधः । प्राग्युवोरिति किम् । अभाजि । रागः । वृद्धौ कर्तव्यायां नलोपः सिद्ध एव । अयुगवुगिति किम् । बभूवतुः । उपदिदीये । (वुग्)युकोः सिद्धत्वाद् (वुग् ? उव्) यणादेशौ (न) भवतः । समानाश्रय इति किम् । पपुषः पश्य । चिच्युषः पश्य । लुलुवुषः पश्य । वसोः सम्प्रसारणं विभक्त्याश्रयं त(दा ? दिना)श्रयाल्लोपयणुवङादेशेषु कर्तव्येषु नासिद्धं भवति । अस्मादेव वचनाद् असिद्धं बहिरङ्गमन्तरङ्गे' (१-२-८४)इति परिभाषाप्यत्र नोपतिष्ठते । अन्तरङ्गबहिरङ्गयोर्युगपत् समवस्थानाभावात् ॥

श्नान्नः ॥ २० ॥

श्नमः परस्य नकारस्य लोपो भवति । भनक्ति । व्यनक्ति । हिनस्ति । शकारः किम् । यज्ञानाम् । यत्नानाम् । प्र(त्ना ? श्ना) नां विश्नानामिति लाक्षणिकत्वादनर्थकत्वाच्च न भवति ॥

हलोऽनिदितः क्ङित्युपधायाः ॥ २१ ॥

हलन्तायाः प्रकृतेरनिदितः क्ङिति प्रत्यये परतो नकारस्योपधाया लोपो भवति । स्रस्तः । स्रस्तवान् । स्रस्यते । ध्वस्तः । ध्वस्तवान् । ध्वस्यते । हल इति किम् । नीयते । नेनीयते । अनिदित इति किम् । नन्दितः । न(न्द ? न्द्य)ते । नानन्द्यते । क्ङितीति किम् । स्रंसिता । ध्वंसिता । उपधाया इति किम् । नह्यते । नानह्यते ॥

शित्यपिति ॥ २२ ॥

शित्यपिति प्रत्यये परतः हलन्तायाः अनिदितः प्रकृतेरुपधाया नकारस्य लोपो भवति । द...ति । (पुष्णाति । अश्नाति )। अपितीति किम् । स्रंसते । ध्वंसते । अनिदित इत्येव । शिञ्जानः । का....नः ॥

श्रन्थिग्रन्थिष्वञ्जीन्धीनां लिटि ॥ २३ ॥

श्रन्थ्यादीनां प्रकृतीनामपिति लिटि प्रत्यये परतो नकारस्योपधाया लोपो भवति । श्रेथतुः । श्रेथुः । ग्रेथतुः । ग्रेथुः । परिषस्वजे । समीधे । समीधाते । अपितीत्येव । शश्रन्थ । जग्रन्थ ॥

दम्भेः सि सनि च ॥ २४ ॥

दम्भेः सकारादौ सनि लिटि चापिति परतो नकारस्य लोपो भवति । धिप्सति, धीप्सति । देभतुः । देभुः । सीति किम् । दिद(यगि ? म्भि)षति ॥

दंशिषञ्जिष्वञ्जां शपि ॥ २५ ॥

दंशादीनां प्रकृतीनां (सनि ? शपि) प्रत्यये परतो नकारस्य लोपो भवति । दशति । व्यतिषजति । परिष्वजते ॥

*रञ्जेः ष्वुन्घिनुण्ल्युट्क्तुञ्जनिषु च ॥ २६ ॥

णौ मृगरमणे ॥ २७ ॥

रजयति मृगान् व्याधः । मित्त्वाद्ध्रस्वत्वम् । मृग(लक्ष ? रमण)इति (किम् ।) रञ्जयति सभां नटः ॥

घञि भावकरणयोः ॥ २८ ॥

भावकरणवाचिनि घञि परतो रञ्जेर्नकारस्य लोपो भवति । भावे — आश्चर्यो रागः । विचित्रो रागः । करणे — रज्यतेऽनेनेति रागः । भावकरणयोरिति किम् । रज्यन्त्यस्यामिति रङ्गः ॥

स्यदो जवे ॥ २९ ॥

स्यद इति स्यन्देर्घञि नलोपो वृद्ध्यभावश्च निपात्यते जवेऽभिधेये । गोस्यदः । अश्वस्यदः । जव इति किम् । तैलस्यन्दः । घृतस्यन्दः ॥

अवोदैधोद्मप्रश्रथहिमश्रथाः ॥ ३० ॥

अवोदादयः शब्दा निपात्यन्ते । अवोद इति उन्देरवपूर्वस्य घञि नलोपः । (एध इति इन्धेर्घञि नलोपो गुणश्च ।) उद्म इति उन्देरौणादिके म(निन्)प्रत्यये नलोपः । प्रश्रथः हिमश्रथ इति प्रपूर्वस्य हिमपूर्वस्य च श्रन्थेर्घञ् नलोपो वृद्ध्यभावश्च ॥

१. 'स' ख. ग. पाठः. २. रञ्जेष्वुन् ॥ २५ ॥ घिनुण् ॥ २६ ॥ ल्युट्क्तुञ्जनिषु च ॥ २७ ॥ 'मा' M. U. S. पाठः.

* सूत्रमिदं सवृत्तिकमुपरितनं च क. मातृकायां लुप्तम् ।

लङ्गिकम्प्योरुपतापशरीरविकारयोः ॥ ३१ ॥

लङ्गिकम्प्योः प्रकृत्योरुपतापे शरीरविकारे च गम्यमाने नलोपो भवति । विलगितः । विकापितः । उपतापशरीरविकारयोरिति किम् । विलङ्गितः । विकम्पितः । बृंहरच्यानिटीति न वक्तव्यम् । (बृं ? बृ)हिः प्रकृत्यन्तरमस्ति । तेनैव बर्हयति निबर्हक इति भविष्यति । कथं ज्ञायते (बृं-बृ)हिः प्रकृत्यन्तरमस्तीति । अचीति लोप उच्यते । अनजादावपि दृश्यते । नि(बर्ह्य ? बृह्य)ते । (नि-ह्यति ?) अनिटीत्युच्यते । इडादावपि दृश्यते । निबर्हिता । निबर्हितुम् । अचीत्युच्यते । अजादावपि (न) दृश्यते । नि(बर्ह ? बृह)यति निबृहकः ॥

वनातितनाद्यानिटां ल्यपि ञमः ॥ ३२ ॥

वनतेस्तनोत्यादीनामनिटां च प्रकृतीनां ल्यपि परतः ञमो लोपो भवति । प्रवत्य । प्र(क ? त)त्य । प्र(क्ष ? क्ष)त्य । प्रसत्य । प्रहत्य । प्रमत्य । एषामिति किम्* । पद्यते । (अ ?)क्षण्यते, हन्यते ॥

मो वा ॥ ३३ ॥

मान्तायाः प्रकृतेः ल्यपि प्रत्यये परतो वा लोपो भवति । प्र(य)-त्य, प्र(वत्य ? यम्य) । प्रणत्य, प्रणम्य । आगत्य, आगम्य ॥

झलि तिङ्यपिति ॥ ३४ ॥

झलादावपिति तिङ्प्रत्यये परतो वनत्यादीनां प्रकृतीनां लोपो भवति । (अवत । अवथाः) अतत । अतथाः । अमत । अमथाः । हतः । हथः । झ(ल्वी ? ली)ति किम् । घ्नन्ति । तिङीति किम् । हन्ता । मन्ता । अपितीति किम् । ह(सि ? न्ति) ॥

क्ङिति ॥ ३५ ॥

झलादौ (ति ? क्ङि)ति प्रत्यये परतो वनतितनाद्यनिटां प्रकृतीनां लोपो भवति । वतिः । ततिः । क्तिचि प्रतिषेधं वक्ष्यति । अन्यत्र झलादाविटा भवितव्यम् । ततः । ततवान् । सनोतेरात्वं वक्ष्यति । क्षतः । क्षतवान् । (झ ? घृ)तः । (झ ? घृ)तवान् । यतः । यतवान् । रतः । रतवान् । गतः ।

१. 'तनोत्याद्यनिटां'मिति M. U. S. पाठः. * अत्र किञ्चिल्लुप्तमिव भाति ।

गतवान् । (गमः ? मतः) मतवान् । क्ङितीति किम् । यन्ता । रन्ता । झलीत्येव । (पश्य ? वन्य)ते । रम्यते । वननितनाद्यनिटामित्येव । शान्तः । शान्तवान् । कान्तः । कान्तवान् । (स ? म)म इत्येव । पक्कः । पक्कवान् । उक्तः । उक्तवान् ॥

जनसनखनामात् ॥ ३६ ॥

जनादीनां प्रकृतीनां झलादौ क्ङिति (ङिति) प्रत्यये परतो ञम आत्वं भवति । जातः । जातवान् । जातिः । सातः । सातवान् । सातिः । खातः । खातवान् । खातिः । झलीत्येव । जनित्वा ॥

सनि ॥ ३७ ॥

जनादीनां सनि झलादौ प्रत्यये परतो ञम आत्वं भवति । सि-(सा ? षा)सति । जनखनोरिटा भवितव्यम् इति झलादिः सन् न भवति । झलीत्येव । सिसनिषति ॥

ये वा ॥ ३८ ॥

जनादीनां प्रकृतीनां यकारादौ प्रत्यये परतो ञम आत्वं वा भवति । जायते, जन्यते । जाजायते, जञ्जन्यते । प्रजाय, प्रजन्य । सायते । सन्यते । सासायते, संसन्यते । प्रसाय, प्रसन्य । खायते, खन्यते । चाखायते, चङ्खन्यते । प्रखाय(ते ?) प्रखन्य ॥

तनोतेर्यकि ॥ ३९ ॥

तनोतेर्यकि प्रत्यये परतो ञम आत्वं वा भवति । तायते । तन्यते । यकीति किम् । तन्तन्यते ॥

सनः क्तिचि लोपश्च ॥ ४० ॥

सनोतेः क्तिचि प्रत्यये परतो ञमो लोप आत्वं च वा भवति । सतिः, सातिः, सन्तिः ॥

गमेर्लिङ्यात्मनेपदे ॥ ४१ ॥

आत्मनेपदरूपे लिङि परतो गमे(र्न ? र्म) लोपो वा भवति । सङ्-सीष्ट, सङ्गसीष्ट । लिङीति किम् । सञ्जग्मे । आत्मनेपद इति किम् । गम्यात् ॥

सिचि च ॥ ४२ ॥

सिच्यात्मनेपदपरे परतो गमेः (सो ? मो) लोपो वा भवति । समगत, समगंस्त ॥

हनो नित्यम् ॥ ४३ ॥

हनेः प्रकृतेरात्मनेपदपरे सिचि परतो लोपो नित्यं भवति । आहत । आहसाताम् । आहसत ॥

यमः सूचने ॥ ४४ ॥

सूचनं गन्धनं परदोषाविष्करणं, तस्मिन् वर्तमानस्य यमेरात्मनेपदपरे सिचि परतो लोपो नित्यं भवति । उदायत । उदायसाताम् । उदायसत । सूचन इति किम् । व्यायंस्त[1] । झलि तिपि न भवति । सि(चा ? चो) व्यवधानात् । आत्मनेपद इत्येव । अयंसीत् ॥

वोद्वाहे ॥ ४५ ॥

उद्वाहे वर्तमानस्य यम आत्मनेपदपरे सिचि परतो लोपो वा भवति । उपायत कन्याम्, उपायंस्त ॥

गमयमतनमनादीनां क्वौ ॥ ४६ ॥

गमादीनां प्रकृतीनां क्वौ परतो (ज)मो लोपो भवति । जनगत् । कलिङ्गगत् । संयत् । वियत् । परीतत् । उपा(ना ? त)त् । सम्मत् । विमत् । आदिग्रहणात् सनत् (विकृत् ?)इत्यादयो भवन्ति ॥

गमेरू च ॥ ४७ ॥

गमेः प्रकृतेः क्वौ प्रत्यये परतो मो लोप ऊकारः अन्तादेशो भवति । अग्रे गच्छति अग्रेगूः । (इम्लो ? मलो)पापवादो मा विज्ञायीति चकारः क्रियते । तेन कृते मो लोपे अकारान्तस्योकारो भवति ॥

नाञ्चेः पूजायाम् ॥ ४८ ॥

अञ्चतेः पूजायां वर्तमानस्य नमो लोपो न भवति । अञ्चितमिव शिरो वहति । अञ्चिता अस्य गुरवः । पूजायामिति किम् । अ(रनः ? क्तः) ॥

---

1. 'वा' क. ग. पाठः.

क्तिचि दीर्घश्च ॥ ४९ ॥

क्ति(च्)प्रत्यये परतः प्रकृते(र्ने)मो लोपः (क्तिचि?) दीर्घश्च न भवति । 'तनादिनिद्यामि'ति लोपस्य, गमः 'क्विति वा चे'ति दीर्घस्य च प्रतिषेधः। दीर्घप्रतिषेधसन्नियोगेन लोपप्रतिषेधविधानात् संज्ञादीनां प्रतिषेधो न भवति । (शक्तिः भक्तिः ? वन्तिः तन्तिः) (चितो ? क्तिचो) ग्रहणं किम् । रतिः ॥

क्त्व स्कन्दस्यन्दोः ॥५०॥

क्त्वाप्रत्यये परतः स्कन्दस्यन्दोर्नमो लोपो (न) भवति । स्कन्त्वा, स्यन्त्वा । प्रस्कन्द्य । प्रस्यन्द्य । केचित् (क्वि ? क्त्वी)ति द्वितकारनिर्देशेन ल्यपि प्रतिषेधं नेच्छन्ति । प्रस्कद्य । अवस्कद्य । प्रस्यद्य । अवस्यद्य । अनिडर्थं वचनम् । सेटि तूत्तरसूत्रेण स्यन्दित्वेति भवति ॥

सेटि ॥५१ ॥

सेटि त्वाप्रत्यये परतोऽनमो लोपो (न) भवति । अंहित्वा । ध्वंसित्वा ॥

थफान्तवञ्चिलुञ्चीनां वा ॥ ५२ ॥

थकारफकारान्तानां प्रकृतीनां वञ्चिलुञ्च्योश्च सेटि त्वाप्रत्यये अनमो लोपो वा भवति । श्रथित्वा, श्रन्थित्वा । ग्रथित्वा, ग्रन्थित्वा । गुफित्वा, गुम्फित्वा । (रि ? र)फित्वा, (रि ? र)म्फित्वा । वचित्वा, वञ्चित्वा । लुचित्वा, लुञ्चित्वा । कृते नलोपे लघूपधगुणः 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' (१-२ ८२) इति न भवति । (अ?) लघूपधानां तु सेटि त्वाप्रत्यये गुणो भवत्येव ॥

ञान्तनशामनिटि ॥ ५३ ॥

ञान्तानां प्रकृतीनां नशेश्चानिटि त्वाप्रत्यये परतो अनमो लोपो वा भवति । रक्त्वा, रङ्क्त्वा । भक्त्वा, भङ्क्त्वा । नष्ट्वा, नंष्ट्वा ।

'नशो झलि' (६-४-१२) इति नुम्। अनिटीति किम्। अशित्वा॥

भञ्जेश्चिणि॥ ५४॥

भञ्जेश्चिणि प्रत्यये परतो ञ्नो लोपो वा भवति। अभाजि, अभञ्जि॥

क्वावाशास इदुपधायाः॥ ५५॥

'आङः शासु इच्छायामि'त्यस्य क्विप्प्रत्यये उपधाया इदादेशो भवति। आशीः आशिषौ आशिषः। क्वीति किम्। आशास्ते। आशास्यमानः। तपरकरणं तत्कालार्थम्॥

शासः क्ङिति॥ ५६॥

'शासु अनुशिष्टावि'त्यस्य क्ङिति प्रत्यये परत उपधाया इदादेशो भवति। शिष्टः। शिष्टवान्। अनुशिष्टिः। शिष्यते। आर्यशीः। क्षत्रशीः। अशिषत्। शेशिष्यते। क्ङितीति किम्। शास्ता। शासनः॥

तिङि हल्यपिति॥ ५७॥

हलादावपिति तिङि प्रत्यये परतः शास उपधाया इदादेशो भवति। शिष्टः। युवां शिष्टः। (यूयं शिष्ठ?)। आवां शिष्वः। वयं शिष्मः। तिङीति किम्। शासनः। हलीति किम्। शशासतुः। अपितीति किम्। शास्ति॥

शा हौ॥ ५८॥

उपधाया इति निवृत्तम्। तेन शास इति स्थानषष्ठी, नावयवषष्ठी। हौ परतः शासः शा इत्ययमादेशो भवति। शाधि। प्रशाधि॥

हनो जः॥ ५९॥

हन्तेर्हौ परतो ज इत्ययमादेशो भवति। जहि शत्रून्॥

आर्धधातुके॥ ६०॥

अधिकारोऽयं 'न ल्यपि'(६-३-७९) इति यावत्। प्रागेतस्माद्यदित

ऊर्ध्वमनुक्रमिष्याम आर्धधातुक इत्येवं तद्वेदितव्यम् । यथावसरमुदाहरिष्यामः ॥

अ(ङि ? क्ङि)ति भ्रस्जो भर्ज् वा ॥ ६१ ॥

भ्रस्जः प्रकृतेरार्धधातुके (अक्ङिति) प्रत्यये परतो भर्ज् इत्ययमादेशो (वा) भवति । बभर्ज । बभर्जतुः । बभर्जुः । बभ्रज्ज । बभ्रज्जतुः । बभ्रज्जुः । भर्ष्टि, भ्रष्टि । भ्रष्टा, भर्ष्टा । बिभर्जिषति, बिभ्रज्जिषति । भर्जनं, भ्रज्जनम् । अक्ङिती(ति) किम् । भृष्टः, भृष्टवान् । भृज्यते । बरीभृज्यते । भृट् । आर्धधातुक इत्येव भृज्जति ॥

लोपोऽतः ॥ ६२ ॥

आर्धधातुके प्रत्यये परतः अदन्तायाः प्रकृतेर्लोपो भवति । चिकीर्षाञ्चकार । लोलूयाञ्चक्रे । चिकीर्षिता । चिकीर्षितुम् । पूर्वविप्रतिषेधेन वृद्धिदी(घ ? र्घाभ्या)मलोपो भवति । चिकीर्षकः । चिकीर्ष्यात् । तपरः किम् । याता । वाता । आर्धधातुक इत्येव । भवति । करिष्यति । पुत्रकाम्यति वृक्षः ॥

यंकि ॥ ६३ ॥

यकि प्रत्यये परतः (वा ? अ)तः प्रकृतेर्लोपो भवति । कुषुभ्यति । (गम ? मग)ध्यति । ककारः किम् । श्येनायते काकः । प्रातिपदिकप्रत्ययत्वादार्धधातु(कं ? कत्वं) नास्तीति वचनम् ॥

यस्य हलः ॥ ६४ ॥

हल उत्तर(स्य) प्रकृतेर्यशब्दस्यार्धधातुके परतो लोपो भवति । बेभिदिता । बेभिदितुम् । बेभिदाञ्चक्रे । बेभिदिषीष्ट । यस्येत्यकारः किम् । (ईर्षिता मर्षिता ? ईर्ष्यितामर्ष्यिता) । हल इति किम् । लोलूयिता । अथवा हलन्तायाः प्रकृतेर्विहितस्य यकारस्य लोपो भवति । हलन्ताया इति किम् । इर्ष्यिता । कः पुनरनयोः सूत्रार्थयोर्विशेषः । तथा सौसुत्रिता शाशयितेति भवितव्यम् । यथ ... .... .... पर सौसूत्या शाशयितेति (?) । आर्धधातुक इति किम् । बेभिद्यते । चोच्छिद्यते ॥

1. 'अमः क्ङिति' ख. ग. पाठः.

क्यस्य वा ॥ ६५ ॥

हल उत्तरस्य क्यप्रत्ययस्य लोपो वा भवति । समिधिता, समिध्यिता । दृषदिता, दृषद्यिता । हल इत्येव । पटीयिता । आर्धधातुक इत्येव । समि(ध्य)ति । समिध्यते ॥

णेरनिटि ॥ ६६ ॥

अनिडादावार्धधातुके परतो णेर्लोपो भवति । इ(यु ? य्)यणुगुणवृद्धिदीर्घाणामपवादः । अततक्षत् । अररक्षत् । आटिटत् आशि(श ? श)त् । कारणा । हारणा । कारकः । हारकः । कार्यते । हार्यते । ज्ञीप्सति । अनिटीति किम् । कारयिता । हारयिता । आर्धधातुक इत्येव । कारयति, हारयति ॥

निष्ठायां सेटि ॥ ६७ ॥

इडादौ निष्ठायां परतो णेर्लोपो भवति । कारितः । कारितवान् । हारितः । हारितवान् । गणितः गणितवान् । सेटीति किम् । संज्ञपितः पशुः । सेड्ग्रहणसामर्थ्ये(नात् ? न) पूर्वेणापि न भवति । सनि 'इवन्तर्ध' (६-४-१२६) इत्यादिनेटि विकल्पिते 'यतोऽपतेर्वा' (६-४-१५६) इति प्रतिषेधः । अथैकाच इत्यत्रानुवर्त्तते, तदा ज्ञपेरपि निष्ठायां भवितव्यमिडागमेनेति सेड्ग्रहणमनर्थकं तत् क्रियते कालावधारणार्थम् । इडागमे (लोपे ?) कृते (णि)लोपो यथा स्यात् । (अकृते हि तत्र णिलोपे सति) कारितमित्यत्राप्येकाच्त्वात् प्रतिषेधः प्रसज्यते ॥

अयामन्ताल्वाय्येत्नुषु ॥ ६८ ॥

आमादिष्वार्धधातुकेषु परतो णेरयादेशो भवति । कारयाञ्चकार । गणयन्तः । मण्डयन्तः । स्पृहयालुः । स्पृहयाय्यः । स्तनयित्नुः ॥

ल्यपि लघुपूर्वात् ॥ ६९ ॥

लघुः पूर्वो यस्मात् स लघुपूर्वो वर्णस्तस्मात् परस्य णेर्ल्यपि प्रत्यये परतोऽय् इत्ययमादेशो भवति । प्रशमय्य गतः । प्रणमय्य गतः । प्रबेभिदय्य गतः । प्रगणय्य गतः । प्र(श ?)स्तनय्य गतः । ह्रस्वयलोपाल्लोपानामसमाना-

अयत्वाद् असिद्धत्वं नास्ति । (णेरुद्दि? णौ हि) ह्रस्वयलोपाल्लोपाः, ल्यपि णेरयादेशः । लघुपूर्वादिति किम् । प्रताय्य गतः । प्रतिसाय्य गतः ॥

आप्नो वा ॥ ७० ॥

आप्नोतेः परस्य णेर्ल्यपि परतः (आपो? अय्) वा भवति । प्रापय्य गतः । प्राप्य गतः इति । काक्वादिकत्वादि(ड)देशस्य न भवति ॥

क्षेः क्षी ॥ ७१ ॥

क्षेर्ल्यपि परतः क्षी इत्ययमादेशो भवति । प्रक्षीय । उपक्षीय ॥

उपदेशेऽज्झनग्रहदृशः स्यसिच्सीयुट्तासिनां भावकर्मकर्तृषु चिण्वदिड् वा ॥ ७२ ॥

उपदेशेऽजन्तेभ्यः प्रकृतिभ्यो हनादिभ्यश्च परेषां स्यसिच्सीयुट्तासीनां भावकर्मकर्तृविषयाणां चिण्वदिडागमो वा भवति । स्यस्य तावत्— चायिष्यते, चेष्यते । अचायिष्यत, अ(चायि? चे)ष्यत । दायिष्यते, दास्यते । अदायिष्यत, अदास्यत । शामिष्यते, शमिष्यते, शमयिष्यते । अशामिष्यत, अशमिष्यत, (अशमयिष्यत ।) घानिष्यते, हनिष्यते । अघानिष्यत, अहनिष्यत । ग्राहिष्यते, ग्रहीष्यते । अग्राहिष्यत, अग्रहीष्यत । दर्शिष्यते, द्रक्ष्यते । अदर्शिष्यत, अद्रक्ष्यत । सि(चः) — अचायिषाताम्, अचेषाताम् । अदायिषाताम्, अदिषाताम् । अशामिषाताम्, अशमिषाताम्, अशमयिषाताम् । अघानिषाताम्, अवधिषाताम्, अहसाताम् । अग्राहिषाताम्, अग्रहीषाताम् । अदर्शिषाताम्, अदृक्षाताम् सीयुट् — चायिषीष्ट, चेषीष्ट । दायिषीष्ट दासीष्ट । शामिषीष्ट, शमयिषीष्ट, (शमिषीष्ट) । घानिषीष्ट, वधिषीष्ट । ग्राहिषीष्ट, ग्रहीषीष्ट । दर्शिषीष्ट दृक्षीष्ट । तास् — चायिता, चेता । दायिता, दाता । शामिता, शमिता, शमयिता । घानिता, हन्ता । ग्राहिता, ग्रहीता । दर्शिता, द्रष्टा । उपदेश इति किम् । कारिष्यते । अत्र गुणे रपरत्वे च कृते (न) प्राप्नोति । उपदेशग्रहणा(न्न? द्) भवति । अज्झनग्रहदृश इति किम् । (पठिष्यते ।) स्यसिच्सीयुट्तासीनामिति किम् । चेतव्यम् । भावादिष्विति किम् । चेष्यति दास्यति । आर्धधातुके इत्येव । क्रियेत । ह्रियेत । चिण्वद्भावाच्चिणाश्रयं

कार्यं भवति, लु(ङा? ङ)श्रयं न भवति। घानिष्यते। आयिष्यते। अध्यायिष्यते। घानिषीष्टेत्यत्रापि वधादेशो न भवति। यदि स्यात् चिण्वद्भावोऽनर्थकः स्यात्॥

### दीङो लिटि युक्॥ ७३॥

दीङः प्रकृतेर्लिटि परतो युगागमो भवति। उपदिदीये। उपदिदीयाते। उपदिदीयिरे। लिटीति किम्। उपदीयते॥

### लोपोऽचि क्ङिति चातः॥ ७४॥

अजादौ क्ङित्यार्धधातुके (लिटि?)।

### ईद्यति॥ ७५॥

...प्रकृतेरलोऽन्त्यस्य ईद् भवति ग्लेयः। म्लेयः। देयः। (वै? हे)यः॥

### मास्थासागापिबहाग्दाधां हलि॥ ७६॥

मास्थादीनां प्रकृतीनां हलादौ क्ङित्यार्धधातुके परतः अलोऽन्त्यस्येद् भवति। मीयते। मेमीयते। स्थीयते। तेष्ठीयते। अवसीयते। अवसेसीयते। गीयते। जेगीयते। पीयते। पेपीयते। हीयते। जेहीयते। दीयते। देदीयते। धीयते। देधीयते। ........ चेति किम्। पातेः—पायते। ह्वाङः—हायते। हलीति किम्। गोदः। क्ङितीत्येव। दाता। आर्धधातुक इत्येव। (म्रहि?) 'दोऽपः' (१-२-५) इति प्रतिषेधाद् दाब्दैपोर्न भवति॥

### लिङ्येत॥ ७७॥

क्ङिति लिङ्यार्धधातुके परतो मादीनां प्रकृतीनामलोऽन्त्यस्यैद् भवति। मेयात्। स्थेयात्। अवसेयात्। गेयात्। (पेयात्।) हेयात्। देयात्। धेयात्। क्ङितीत्येव। दासीष्ट। आर्धधातुक इत्येव। (म्ला?मा)यात्॥

### दा संयोगादेरस्थः॥ ७८॥

संयोगादेराकारान्तायाः प्रकृतेः स्थावर्जितायाः क्ङित्यार्धधातुकेऽलोऽन्त्यस्य वा एद् भवति। ग्लेयात्, ग्लायात्। स्नेयात्, स्नायात्।

संयोगादेरिति किम् । यायात् । अस्थ इति किम् । स्थेयात् । क्ङितीत्येव । ग्लासीष्ट । प्रकृतेरित्येव । निर्यायात् ॥

न ल्यपि ॥ ७९ ॥

ल्यपि परतो मादीनां यदुक्तं तन्न भवति । प्रमाय । प्रस्थाय । अवसाय । प्रगाय । प्रपाय । विहाय । प्रदाय । प्रधाय ॥

मेङ इद्वा ॥ ८० ॥

मेङो ल्यपि परत इदादेशो वा भवति । अपमित्य, अपमाय ॥

लुङ्लङ्लृङ्क्ष्वडमाङ्योगे ॥ ८१ ॥

लुङादिषु प्रत्ययेषु प्रकृतेरडागमो भवति, माङ्योगश्चेन्न भवति । अकार्षीत् । अकरोत् । अकरिष्यत् । अनाङ्योग इति किम् । मा भवान् कार्षीत् । मा स्म करोत् । प्रकृतेरित्येव । प्राकरोत् ॥

अचि श्नुधातुभ्रुवां य्वोरियुवौ ॥ ८२ ॥

अजादौ प्रत्यये परतः श्नुधातुभ्रुवां सम्बन्धिनोरिकारोकारयोर्यथासंख्यमिय् उव् इत्येतावादेशौ भवतः । आप्नुवन्ति । राध्नुवन्ति । चिक्षियतुः । चिक्षियुः । नियौ । नियः । लुलुवतुः । लुलुवुः । श्रियौ । श्रियः । भ्रुवौ । भ्रुवः । अचीति किम् । आप्नुयात् । राध्नुयात् । लूः । भूः । श्नुधातुभ्रुवामिति किम् । लक्ष्म्यै । वध्वै । य्वोरिति किम् । चक्रतुः । प्रकृतेरित्येव । श्र्यर्थम् । भ्र्वर्थम् । इ(दुद् ? युव्)भ्यां गुणवृद्धी भवतो विप्रतिषेधेन । चयनम् । नयनम् । चायकः । लावकः ॥

अभ्यासस्यासवर्णे ॥ ८३ ॥

अभ्याससम्बन्धिनोर्य्वोरसवर्णेऽचि परतः इय् उव् इत्येतावादेशौ भवतः । इयेष । उवोष । असवर्ण इति किम् । ईषतुः । ईषुः । ऊषतुः । ऊषुः । अचीति किम् । उवाच ॥

स्त्रियाः ॥ ८४ ॥

परत्वादयन् ? )

वाम्शसोः ॥ ८५ ॥

अमि शसि च परतः स्त्रिया इयङ्यणादेशो (वा) भवति । स्त्रियं स्त्रीम् । स्त्रियः, स्त्रीः ॥

इणो यण् ॥ ८६ ॥

'इण् गता'वित्यस्य प्रकृतेरचि परतो यणादेशो भवति । यन्ति । यन्तु । मा स्म यन् । इयङपवादोऽयम् । गुणवृद्धिभ्यां तु परत्वात् बाध्यते । (अयनम् । आयकः ।)

एरसंयोगादेरनेकाचः ॥ ८७ ॥

असंयोगात् परं यदिवर्णं तदन्तायाः प्रकृतेरनेकाचोऽचि परतो यणादेशो भवति । निन्यतुः । निन्युः । निन्ये । निन्याते । निन्यिरे । एरिति किम् । लुलुवतुः । लुलुवुः । असंयोगादेरिति किम् । चिक्रियतुः । चिक्रियुः । अनेकाच इति किम् । अधीयाते । अधीयते ॥

ओश्च गतिकारकादेः सुप्यसुधियः ॥ ८८ ॥

गतेः कारकाच्च परस्याः प्रकृतेरुवर्णान्ताया इवर्णान्तायाश्च सुधीवर्जितायाः सुप्यजादौ प्रत्यये परतो यणादेशो भवति । न चेत् संयोगात् पराविवर्णोवर्णौ भवतः । ग्रामण्यौ । ग्रामण्यः । खलप्वौ । खलप्वः । धातुना संयोगविशेषणादिह भवति । उ(घ ? न्न्यौ) । उ(घौ ? न्न्यः) सकृल्ल्वौ । सकृल्ल्वः । गतिकारकादेरिति किम् । परमनियौ, परमनियः । परमलुवौ, परमलुवः । सुपीति किम् । उपलुलुवतुः । उपलुलुवुः । असुधिय (इति किम्) । सुधियौ । सुधियः । असंयोगादेरित्येव । यवक्रियौ । यवक्रियः । कटप्रुवौ । कटप्रुवः ॥

वर्षाहत्पुनःकारेभ्यो भुवः ॥ ८९ ॥

वर्षादिभ्यः परो यो भूशब्दस्तदन्तायाः प्रकृतेः सुप्यजादौ प्रत्यये परतो यणादेशो भवति । वर्षाभ्वौ । वर्षाभ्वः । दृग्भ्वौ । दृग्भ्वः । पुनर्भ्वौ । पुनर्भ्वः । कार(भ्वौ । कारभ्वः ।) वर्षा(त्य ? दिभ्य) इति किम् । आत्मभुवौ । आत्मभुवः । प्रकृतिभुवौ । प्रकृतिभुवः ॥

हुश्नुवोरलिटि ॥ ९० ॥

हु श्नु इत्येतयोर्यदुवर्णमसंयोगात् परं (तस्य) लिड्व्यजादौ प्रत्यये परतो यणादेशो भवति । जुह्वति । जुह्वतु । कर्तीह जुह्वानाः । सुन्वन्ति । सुन्वन्तु । कर्तीह सुन्वानाः । हुश्नुवोरिति किम् । (*पुवन्ति पवन्ति?) अलिटीति किम् । जुहुवतुः । जुहुवुः । अचीत्येव । जुहुतः । सुनुतः । असंयोगादेरित्येव । आप्नुवन्ति । गुणवृद्धिभ्यां परत्वात् बाध्यते । जु(ह्वा?हवा)नि । जु(ह्वा ? हवा)व । (लावनम्? ।) असुनवम् ॥

भुवो वुग् लुङ्लिटोः ॥ ९१ ॥

भुवः प्रकृतेर्लुङ्लिटोरजादौ वुगागमो भवति । अभूवन् । बभूवतुः । बभूवुः । बभूव । बभूविवेति । कृताकृतप्रसङ्गित्वेन नित्यत्वात् परे अपि गुणवृद्धी बाध्येते । शब्दान्तरप्राप्त्यानित्य इति चेदनवकाशत्वादागमत्वाद् भविष्यति ॥

ऊदु गोहोऽचः ॥ ९२ ॥

गोह इति कृतगुणस्य गुहेरजादौ प्रत्यये परतः अचः स्थाने ऊकारादेशो भवति । निगूहति । निगूहतः । निगूहयति । साधुनिगूही । निगूहम् । निगूहन्ति । गूहो वर्तते । (ऊ? ओकारनिर्देशः) किम् । निजुगुहतुः । निजुगुहुः । अच इति किम् । अन्त्यस्य मा भूत् । अचीत्येव । (अगूढाः ? निगोढा) ॥

दुषो णौ ॥ ९३ ॥

---

१. 'हंनु' ख. ग. पाठः.

---

* 'योयुवति रोरुवति' इति वृत्तौ प्रत्युदाहृतम् ।

दुषः णौ प्रत्यये परतोऽच ऊद् भवति । दुष्यन्तं प्रयुङ्क्ते दूषयति । दूषयतः । दूषयन्ति । णाविति किम् । दोषो वर्तते । धातोः स्वरूपग्रहणे तत्प्रत्यये विज्ञानादिह न भवति । दुष्यतीति दुषः, तमाचष्टे दुषयति ॥

वा चित्ते ॥ ९४ ॥

चित्ते विषयेऽर्थे वर्तमानस्य (दुषः) णौ परत ऊद् वा भवति । चित्तं मनः प्रज्ञां वा दूषयति दोषयति ॥

गमजनखनघसां ले लोपोऽपिति ॥ ९५ ॥

गमादीनां प्रकृतीनां (लो ? लेऽ)पित्यजादौ परतोऽचो लोपो भवति । जग्मतुः । जग्मुः । जग्मिवान् । (जज्ञतुः जज्ञुः ?) । जज्ञे । जज्ञाते । चख्नतुः । चख्नुः । जक्षतुः । जक्षुः । जक्षिवान् । ल इति किम् । अगमः । अघसन् । गमनम् । अपितीति किम् । जगाम । चखान । अचीत्येव । जजन्त जजवः(?) ॥

क्ङिति च हनः ॥ ९६ ॥

क्ङिति लादेशे चापिति प्रत्यये चकारादजादौ प्रत्यये परतो हन्ते(नें ? र)लोपो भवति । जायाघ्नः । विघ्नः । घ्नन्ति । घ्नन्तु । अघ्नन् । कति अघण्डून् (?) निघ्नानाः । जघ्नतुः । जघ्नुः । जघ्निवान् । अचीत्येव । हतः । हथः । हन्ता । हन्तुम् ॥

हुझल्भ्योऽनिटो हेर्धिः ॥ ९७ ॥

जुहोतेः(ह ? झ)लन्तायाश्च प्रकृतेः परस्य (अनिटो) हेर्धिरादेशो भवति । जुहुधि । अधि(ना) (इ ? भि)न्धि । छिन्धि । शाधि । एधि । हुझल्भ्य इति किम् । क्रीणीहि । याहि । अनिट इति किम् । रुदिहि । स्वपिहि । हेरिति किम् । जुहोतु । अत्तु । जुहुतात् त्वं, (जं छदन्ता ? छिन्तात्) त्वमित्यत्रान्तरङ्गत्वात् तातङ् । तस्य तु हेरिति शब्दग्रहणाद्धिभावो न भवति ॥

अतो लुक् ॥ ९८ ॥

अकारान्तायाः प्रकृतेः परस्य हेर्लुग् भवति। पच। दीव्य। चोरय। अत इति किम्। इहि। बिभृहि। तपरकरणं किम्। याहि। पाहि॥

उतोऽसंयोगपूर्वाद्धातोः॥ ९९॥

(अ)संयोगात् परो य उकारस्तदन्ताद् (अ)धातोः परस्य हेर्लुग् भवति। सुनु। चिनु। तनु। कुरु। उत इति किम्। लुनीहि। पुनीहि। असंयोगपूर्वादिति किम्। आप्नुहि। राध्नुहि। अधातोरिति किम्। लुहि। रुहि॥

वा[1] चास्य म्वोर्लोपः॥ १००॥

योऽयमुकारोऽसंयोगपूर्वस्तदन्तस्य वकारादौ प्रत्यये मकारादौ (च) प्रत्यये परतो लोपो वा भवति। सुन्वः, सुनुवः। सुन्मः, सुनुमः। तन्वः, तनुवः। तन्मः, तनुमः। अधातोरित्येव। युवः। युमः। असंयोगपूर्वस्येत्येव। शक्नुवः। अश्नुमः। लुगिति वर्त्तमाने लोपग्रहणमन्त्यलोपार्थम्॥

नित्यं करोतेर्ये च॥ १०१॥

करोतेः परस्य उकारस्य यकारादौ म्वोश्च परतो नित्यं लोपो भवति। कुर्यात्। कुर्याताम्। कुर्युः। कुर्वः। कुर्मः। कुर्वहे। कुर्महे॥

अत उत् तन्नादिति॥ १०२॥

करोतेरकारस्य तत्र उकारे परत उदादेशो भवति (अपिति।) कुरुतः। कुर्वन्ति। कुरुथः। कुरुथ। कुर्वन्। कुर्वाणः। कुरु। उदिति तपरकरणं गुणनिवृत्त्यर्थम्। तत्रेति किम्। कर्ता कर्तुम्। अ(चौ? पिती)ति किम्। करोति। करोषि। करोमि। कुर्वः, कुर्मः, कुर्यादित्युकारलोपस्यासिद्धत्वाद् उत्वं भवति। यासुटो ··· ··· ··· दुत्वं न भवति॥

श्नमसोर्लोपः॥ १०३॥

श्नमोऽस्तेश्च सम्बन्धिनोऽकारस्यापिति प्रत्यये परतो लोपो भवति। रु(न्धि? न्धः)। रुन्धन्ति। रुन्ध्यात्। स्तः। सन्ति। स्यात्। अपितीत्येव। रुणद्धि। अस्ति॥

---

१. 'चास्य म्वोर्लो' क, ख, पाठः।

दुषः णौ प्रत्यये परतोऽच ऊद् भवति । दुष्यन्तं प्रयुङ्क्ते दूषयति । दूषयतः । दूषयन्ति । णाविति किम् । दोषो वर्तते । धातोः स्वरूपग्रहणे तत्प्रत्यये विज्ञानादिह न भवति । दुष्यतीति दुषः, तमाचष्टे दुषयति ॥

वा चित्ते ॥ ९४ ॥

चित्ते विषयेऽर्थे वर्तमानस्य (दुषः) णौ परत ऊद् वा भवति । चित्तं मनः प्रज्ञां वा दूषयति दोषयति ॥

गमजनखनघसां ले लोपोऽपिति ॥ ९५ ॥

गमादीनां प्रकृतीनां (लो ? लेऽ)पित्यजादौ परतोऽचो लोपो भवति । जग्मतुः । जग्मुः । जग्मिवान् । (जह्नतुः जह्नुः ?) । जज्ञे । जज्ञाते । चख्नतुः । चख्नुः । जक्षतुः । जक्षुः । जक्षिवान् । ल इति किम् । अगमः । अघसन् । गमनम् । अपितीति किम् । जगाम । चखान । अचीत्येव । जजन्त जजवः(?) ॥

क्ङिति च हनः ॥ ९६ ॥

क्ङिति लादेशे चापिति प्रत्यये चकारादजादौ प्रत्यये परतो हन्ते(नें ? र)लोपो भवति । जायाघ्नः । विघ्नः । घ्नन्ति । घ्नन्तु । अघ्नन् । कति अघण्डून् (?) निघ्नानाः । जघ्नतुः । जघ्नुः । जघ्निवान् । अचीत्येव । हतः । हथः । हन्ता । हन्तुम् ॥

हुझल्भ्योऽनिटो हेर्धिः ॥ ९७ ॥

जुहोतेः(ह ? झ)लन्तायाश्च प्रकृतेः परस्य (अनिटो) हेर्धिरादेशो भवति । जुहुधि । अभि(ना) (इ ? भि)न्धि । छिन्धि । शाधि । एधि । हुझल्भ्य इति किम् । क्रीणीहि । याहि । अनिट इति किम् । रुदिहि । स्वपिहि । हेरिति किम् । जुहोतु । अत्तु । जुहुतात् त्वं, (जं छदन्ता ? छिन्तात् ) त्वमित्यत्रान्तरङ्गत्वात् तातङ् । तस्य तु हेरिति शब्दग्रहणाद्धिभावो न भवति ॥

अतो लुक् ॥ ९८ ॥

अकारान्तायाः प्रकृतेः परस्य हेर्लुग् भवति। पच। दीव्य। चोरय। अत इति किम्। इहि। बिभृहि। तपरकरणं किम्। याहि। पाहि॥

## उतोऽसंयोगपूर्वादधातोः॥ ९९॥

(अ)संयोगात् परो य उकारस्तदन्ताद् (अ)धातोः परस्य हेर्लुग् भवति। सुनु। चिनु। तनु। कुरु। उत इति किम्। लुनीहि। पुनीहि। असंयोगपूर्वादिति किम्। आप्नुहि। राध्नुहि। अधातोरिति किम्। युहि। रुहि॥

## वा[1] चास्य म्वोर्लोपः॥ १००॥

योऽयमुकारोऽसंयोगपूर्वस्तदन्तस्य वकारादौ प्रत्यये मकारादौ (च) प्रत्यये परतो लोपो वा भवति। सुन्वः, सुनुवः। सुन्मः, सुनुमः। तन्वः, तनुवः। तन्मः, तनुमः। अधातोरित्येव। युवः। युमः। असंयोगपूर्वस्येत्येव। शक्नुवः। अश्नुमः। लुगिति वर्त्तमाने लोपग्रहणमनन्त्यलोपार्थम्॥

## नित्यं करोतेर्ये च॥ १०१॥

करोतेः परस्य उकारस्य यकारादौ म्वोश्च परतो नित्यं लोपो भवति। कुर्यात्। कुर्याताम्। कुर्युः। कुर्वः। कुर्मः। कुर्वहे। कुर्महे॥

## अत उत् तत्रापिति॥ १०२॥

करोतेरकारस्य तत्र उकारे परत उदादेशो भवति (अपिति।) कुरुतः। कुर्वन्ति। कुरुथः। कुरुथ। कुर्वन्। कुर्वाणः। कुरु। उदिति तपरकरणं गुणनिवृत्त्यर्थम्। तत्रेति किम्। कर्ता कर्तुम्। अ(पो ? पिती)ति किम्। करोति। करोषि। करोमि। कुर्वः, कुर्मः, कुर्यादित्युकारलोपस्यासिद्धत्वाद् उत्वं भवति। यासुटो ········· दुत्वं न भवति॥

## श्नमसोर्लोपः॥ १०३॥

श्नमोऽस्तेश्च सम्बन्धिनोऽकारस्यापिति प्रत्यये परतो लोपो भवति। रु(न्धि ? न्धः)। रुन्धन्ति। रुन्ध्यात्। स्तः। सन्ति। स्यात्। अपितीत्येव। रुणद्धि। अस्ति॥

---

1. 'चास्य म्वोर्लों' क. ख. पाठः.

श्नाभ्यस्तयोरातः ॥ १०४ ॥

श्ना इत्येतस्याभ्यस्तसंज्ञायाश्च प्रकृते ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ... ॥

ई हलि तिङ्यदाधः ॥ १०५ ॥

... ... ... दाधावर्जिताया आकारस्य तिङि हलादौ अपिति प्रत्यये परत ईकारादेशो भवति । लुनीहि । पुनीहि । लुनीतः । पुनीतः, लुनीथः । पुनीथः । लुनीयात् । पुनीयात् । मिमीते । सञ्जिहीते । अमिमीत । समजि(हि ? ही)त । हलीति किम् । लुनन्ति । पुनन्ति । मिमते । सञ्जिहते । तिङीति किम् (सजीना ? संजिहा)सते । अदाध इति किम् । दत्तः । धत्तः । दध्मः । दद्यात् । दध्यात् । अपितीत्येव । पुनाति ॥

इद् दरिद्रः ॥ १०६ ॥

दरिद्रातेर्हलादौ तिङि अपिति प्रत्यये परत आकारस्येकारादेशो भवति । दरिद्रितः । दरिद्रिथः । दरिद्रिथ । दरिद्रिवः । दरिद्रिमः । दरि-द्र्यात् । हलीत्येव । दरिद्रति । तिङीत्येव । दरिद्रासति । अपितीत्येव । दरिद्राति ॥

भियो वा ॥ १०७ ॥

बिभेतेर्हलि तिङ्यपिति प्रत्यये परतोऽन्त्यस्येकारादेशो वा भवति । बिभितः बिभीतः । बिभिथः, बिभीथः । बिभियात्, बिभीयात् । हलीत्येव । बिभ्यति । बिभ्यतु । तिङीत्येव । बिभीषति । बिभीयते । अपितीत्येव । बिभेति । बिभेषि ॥

हाकः ॥ १०८ ॥

जहातेर्हल्यपिति प्रत्यये परतोऽलोऽन्त्यस्येदादेशो भवति । जहितः, जहीतः जहिथः जहीथः । हलीत्येव । जहति (जहाति ?) (क्ङिति ?

तिङी)त्येव । (ज? जि) हासति । जेहीयते । अपितीत्येव । जहाति । जहासि । ककारनिर्देशो हाङ्निवृत्त्यर्थः ॥

हौ वा ॥ १०९ ॥

जहातेर्हौ परत इः ईश्च वा भवति । जहिहि, जहीहि, जहाहि ॥

लोपो यि ॥ ११० ॥

यकारादौ तिङि परतो जहातेरलोऽन्त्यस्य लोपो भवति । जह्यात्, जह्यातां, जह्युः । तिङीत्येव । हीयते । कथं हेयात् । 'लि(ङ? ङ्यंत्')(६-३-७७)इत्यनवकाशत्वाद् भविष्यति ॥

दरिद्रः किति ॥ १११ ॥

दरिद्रातेर्यकारादौ किति लोपो भवति । दरिद्यते । दरिद्यात् । कितीति किम् । दरिद्रियात् ॥

अच्ययुवौ ॥ ११२ ॥

यु(वौ? वु)वर्जिते अजा(देशौ? दौ) प्रत्यये विषयभूते दरिद्रातेरलोऽन्त्यस्य लोपो भवति । दरिद्रयति । अदरिद्र(य)त् । दरिद्रिता । दरिद्रितुम् । (दरिद्राणः ?) । साधु दरिद्रि.... .... । दिदरिद्रिषति । विषयसप्तमीविज्ञानात् पूर्वमेवाकारलोपो भवति । दरिद्रातीति दरिद्रः । पचाद्यजेव भवति । तथा दुर्दरिद्रमिति यु.... .... .... वु न(?) भवति । घञि युगागमो न भवति । अ(पी? ची)ति किम् । दिदरिद्रासति । अयुवाविति किम् । दरिद्राणः । दरिद्रा(यि? य)कः । अपितीत्येव । दरिद्राति ॥

लुङि वा ॥ ११३ ॥

लुङि प्रत्यये परतो दरिद्रातेरन्त्यस्य लोपो वा भवति । अदरिद्रीत्, अदरिद्रासीत् । अदरिद्रि । अदरिद्रायि ॥

असिदाधां हावेदाद्विश्च ॥ ११४ ॥

असेर्दाधातो(र्धाधातो)श्च हौ परतोऽलोऽन्त्यस्य एत्वं द्विर्वचनाभावश्च (यथासंख्यं ?) भवति । एधि । देहि । धेहि ॥

## लिट्यनादेशादेरेकहल्मध्येऽतः ॥ ११५ ॥

अपिति लिटि परत आदेश आदिर्यस्याः प्रकृतेर्नास्ति तस्या (अ) कारस्यासहाययोर्हलोर्मध्ये वर्तमानस्यैत्वं द्विर्वचनाभावश्च भवति । रेणतुः रेणुः । येमतुः । येमुः । पेचतुः । पेचुः । देमतुः । देमुः । लिटीति किम् । यंयम्यते । रंरम्यते । अनादेशादेरिति किम् । बभणतुः । बभणुः । चकणतुः । चकणुः । (लिटः) आदेशविशेषणं किम् । इहापि यथा स्यात् । नेमतुः । नेमुः । सेहे । सेहाते । सेहिरे । अनैमित्तिके नत्वसत्वे इति तदादिरादेशादिर्न भवति । एकहल्मध्ये इति किम् । ततक्षतुः । ततक्षुः । अत इत्येव । दिदिवतुः । दिदिवुः । तपरः किम् । ररासे । ररासाते । अपितीत्येव । अहं पपच, अहं पपठ । इह प्रकृतेर्द्विरुक्तौ पूर्वस्यावयवस्यादेशः प्रकृत्यादेश इत्यभेदा(दु)च्यते ॥

## थलि च सेटि ॥ ११६ ॥

इडादौ थलि लिटि अनादेशादेरेकहल्मध्याकारस्य एत्वं द्विर्वचनाभावश्च भवति । पेचिथ । शेकिथ । सेटि इति किम् । पपक्थ । अनादेशादेरित्येव । बभणिथ । चकणिथ । चक्षणिथ । एकहल्मध्य इत्येव । ततक्षिथ, रराक्षिथ । अत इत्येव । दिदेविथ । पिदर्थं वचनम् ॥

## तॄफलभजत्रपः ॥ ११७ ॥

तरत्यादीनां लिट्यपिति थलि च सेटि परतोऽकारस्य एत्वं द्विर्वचनाभावश्च भवति । तेरतुः । (तेरुः ।) तेरिथ । फेलतुः । फेलुः । फेलिथ । भेजतुः । भेजुः । भेजिथ । त्रेपे । त्रेपाते । त्रेपिरे । अपितीत्येव । अहं ततर । सेटीत्येव । (दिदेविथ, पिदर्थं वचनम् ?) । (बभज्वान् ?) । तरतेर्गुणित्वात्, फलिभज्योरादेशादित्वात्, त्रपेरप्यनेकहल्मध्यस्थत्वात् न प्राप्नोतीति वचनम् ॥

## राधो हिंसायाम् ॥ ११८ ॥

राधो हिंसार्थस्य यदवर्णं तस्य लिटचपिति थलि च सेटि परत एत्वं द्विर्वचनाभावश्च भवति । अत इत्येतदिहोपस्थितमसम्भवात् तपर-

---

१. 'ददतिरा' क० पाठः

त्वकृतं कालविशेषमपास्य दर्पमात्रहेतुत्वमापद्यति। अपरेधतुः। अपरेधुः। अपरेधिथ। हिंसायामिति किम्? आरराधतुः। आरराधुः। आरराधिथ। अपितीत्येव। अपरराध॥

**वा जभ्रमुत्रसाम्॥ ११९॥**

जॄभ्रमुप्रभृतीनां लिट्यपिति थलि च सेटि परतोऽत एत्वं (भवति?) द्विर्वचनाभावश्च वा भवति। जेरतुः। जेरुः। जेरिथ। (जजरतुः। जजरुः) जजरिथ। भ्रेमतुः। भ्रेमुः। भ्रेमिथ। बभ्रमतुः। बभ्रमुः। बभ्रमिथ। त्रेसतुः त्रेसुः। त्रेसिथ। तत्रसतुः। तत्रसुः। तत्रसिथ। अपितीत्येव। अहं जजर। सेटीत्येव। जजर्थ॥

**फणस्यमस्वनराजभ्राजभ्राशभ्लाशाम्॥ १२०॥**

फणादीनां सप्तानां लिट्यपिति थलि च सेटि परतो वास्य एत्वं द्विर्वचनाभावश्च भवति। फेणतुः। फेणुः। फेणिथ। पफणतुः। पफणुः। पफणिथ। स्येमतुः, स्येमुः, स्येमिथ। सस्यमतुः। सस्यमुः। सस्यमिथ। स्वेनतुः। स्वेनुः। स्वेनिथ। सस्वनतुः। सस्वनुः। सस्वनिथ। रेजतुः रेजुः। रेजिथ। रराजतुः। रराजुः। रराजिथ। भ्रेजे। भ्रेजाते। भ्रेजिरे। बभ्राजे। बभ्राजाते। बभ्राजिरे। भ्रेशे। भ्रेशाते। भ्रेशिरे। बभ्राशे। बभ्राशाते। बभ्राशिरे। भ्लेशे भ्लेशाते भ्लेशिरे। बभ्लाशे। बभ्लाशाते। बभ्लाशिरे। अपितीत्येव। अहं पफण।

**दम्भश्लथग्रथाम्॥ १२१॥**

दम्भादीनां प्रकृतीनां लिट्यपिति प्रत्यये परतोऽत एत्वं द्विर्वचनाभावश्च भवति। देभतुः। देभुः। श्लेथतुः। श्लेथुः। ग्रेथतुः। ग्रेथुः। अपितीत्येव। ददम्भ। दंभेरपि नलोपस्यासिद्धत्वात् एकहल्मध्यस्थत्वं नास्तीति वचनम्। थलि च सेटि इति निवृत्तम्। तत्र नलोपाभावात्॥

**मनिपचिसचां नाम्नि॥ १२२॥**

मन्यादीनां प्रकृतीनां संज्ञायां विषये अत एत्वं भवति। मेना। मेनका। पेचकः। (से?मे)चकः॥

**नशोऽङि॥ १२३॥**

नशोऽकारस्याङ्कि प्रत्यये परत एत्वं भवति । नेशट् । अङीति किम् । नश्यति ॥

**न शसदद्वादिगुणानाम्[1] ॥ १२४ ॥**

शसिदद्योर्वकारादीनां गुण इत्येवमभिनिर्वृत्तस्य च योऽकारस्तस्य एत्वं न भवति । विशशसतुः । विशशसुः । विशशसिथ । ददद्दे । दददाते । दददिरे । ववमतुः । ववमुः । ववमिथ । ववशे । ववशाते । ववशिरे । ववले । ववलाते । ववलिरे । विशश्वरतुः । विशशरुः । विशशरिथ । निपपरतु । निपपरुः, निपपरिथ । (विवमिथ ?)। निनयिथ । लुलविथ ॥

**अर्वणस्त्रसावनञः ॥ १२२ ॥**

अर्वन् इत्येतस्याः प्रकृतेरसौ परतस्तृ इत्यय मन्तादेशो भवति । येषम् उत्तरात्र... ... .... ... ...

.... ... ... .... ...

**मघोनः सौ च वा ॥ १२६ ॥**

.... ... ... .... ....

...मघवन्तौ । मघवन्तः । मघवन्तम् । मघवन्तौ । मघवतः । मघवता । मघवद्भ्याम् । मघवद्भिः । मघवती । माघवतम् । पक्षे मघवा । मघवानौ । मघवानः । मघवानम् । मघवानौ । मघोनः । मघोना । मघवभ्याम् । मघवभिः । मघोनी । माघवनम् । केचित्तु मघवान्निति छन्दस्योदिति........ ।

... ... ...

**यचि स्वादावाशिस्रुटि[2] ॥ १२७ ॥**

... .... ...

.... ... ...

**पादः पत् ॥ १२८ ॥**

पादशब्दो लुप्ताकारः परिगृह्यते । तदन्तायाः प्रकृतेर्यचि स्वादाव(चि ? शि)सुटि प्रत्यये परतः पादित्ययमादेशो भवति । स च निर्दिश्य-

---

१. 'गुणिनाम्' क. पाठः. २. 'चि' ख. पाठः.

मानस्यादेशो भवति' इति यच्छब्दस्य भवति, न तदन्तस्य सर्वस्य । व्याघ्रस्येव पादावस्य व्याघ्रपात्, तस्यापत्यं वैयाघ्रपद्यः । द्वौ पादावस्य द्विपदः पश्य । द्विपदा । द्विपदे । द्विपादिका । त्रिपदा ऋक् । यचीति किम् । द्विपाद्भ्यां, द्विपाद्भिः । अशिसुटीति किम् । द्विपाद् ऋक् । द्विपादौ, द्विपादः । जस्सम्बन्धिनोऽपि शैषिकत्वस्य अनिर्देशात् सुटः सीपी(?)कारभावे प्रतिषेधो न भवति । द्विपदी कुले । स्वादाविति किम् । द्विपादमिच्छति *द्विप...ति । स्वादयः स्वौजसिस्यन आरभ्य आ कपः प्रत्यया गृह्यन्ते ॥

मतौ च वसोः सम्प्रसारणम् ॥ १२९ ॥

वस्वन्तस्य यचि स्वादावशिसुटि मतौ च प्रत्यये परतः सम्प्रसारणं भवति । विदुष्मान् । पेचुष्मान् । विदुषि साधुर्विदुष्यः । पेचु(षी ? षि) पेचुष्यः । विदुषः पश्य । विदुषा । (एष ? विदुषे) विदुषी कुले । विदुषी स्त्री । पेचुषः पश्य । पेचुषा । पेचुषे । पेचुषी कुले । पेचुषी स्त्री । यचीत्येव । विद्वद्भ्यां विद्वद्भिः । अशिसुटीत्येव । विद्वांसि कुलानि । विद्वांसौ । विद्वांसः । स्वादावित्येव । विद्वस्यति । विद्वयति ॥

श्वयुवमघोनामतद्धिते ॥ १३० ॥

श्वादीनां यचि स्वा(दा)वशिसुटि तद्धितवर्जिते परतः सम्प्रसारणं भवति । शुनः । शुना । प्रियशु(नि ? नी) कुले । शुनी । यूनः । यूना । यूने । अतियू(नि ? नी) स्त्री । मघोनः । मघोना, मघोने । अतिमघोनी कुले । अतिमघोनी स्त्री । अतद्धित इति किम् । शौवनं मांसम् । यौवनं वर्तते । माघवनः स्थालीपाकः । नकारान्तनिर्देशः किम् । युवतीः पश्य । युवत्या । मघवतः पश्य । मघवता । छन्दस्श्वना मातरिश्वने इत्यत्र 'अर्थवद्ग्रहणे नानर्थकस्य' (१. २. ७३) इति न भवति ॥

अल्लोपोऽनः ॥ १३१ ॥

---

* 'द्विपादीयति' इति स्यात् । इह क्यचः स्वादिषु पाठाभावात् पदादेशो न भवतीति प्रत्युदाहरणमिदं भवितुमर्हति ॥

अन्नन्तायाः प्रकृतेर्ङे (टरनः?) स्वादावशिसुटि प्रत्यये परतः अतो लोपो भवति । राज्ञः पश्य । राज्ञा । राज्ञे । राज्ञी । तक्ष्णः पश्य । तक्ष्णा । तक्ष्णे । तक्ष्णी ॥

षपूर्वहन्धृतराज्ञामणि ॥ १३२ ॥

षपूर्वस्यानो ह(न् ? नो )धृतराज्ञश्च सम्बन्धिनोऽणि प्रत्यये परतो-ऽतो लोपो भवति । (औ ? औ)क्ष्णः । ताक्ष्णः । औष्णः । (धार्त्त ? वार्त्र-घ्नः । धार्त्तराज्ञः । षपूर्वादीनामिति किम् । सामनः । वैमनः । अणि प्रकृतिभावेन टिलोपाल्लोपौ द्वावपि न भवतः । अणीति किम् । ताक्षण्यः । 'अभावकर्मणोरनो ये'(६-३-१९२) इति प्रकृतिभावः ॥

ङिश्योर्वा ॥ १३३ ॥

ङि शी इत्येतयोः परतोऽन्नन्तायाः प्रकृतेरलोपो वा भवति । राज्ञि, राजनि । साम्नी(सामनी । साम्नि)सामनि । दाम्नी( दामनी । दाम्नि)दामनि ॥

न संयोगाद् वमः ॥ १३४ ॥

वकारान्तान्मकारान्ताच्च संयोगात परस्यातो लोपो न भवति । पर्वणा । पर्वणे । अथर्वणा । अथर्वणे । कर्मणे । संयोगादिति किम् । प्रति-दीव्ना । साम्ना । वम इति किम् । तक्ष्णा । मूर्ध्ना ॥

अञ्चेरनः ॥ १३५ ॥

अञ्चतेर्लुप्तनकारस्य यचि स्वादावशिसुटि प्रत्यये परतोऽतो लोपो भवति । प्राप्त्यभावात् प्रतिषेधो नानुवर्त्तते । प्राचः । प्राचा । दधीचः । दधीचा । मधूचः । मधूचा । 'चौ' (६-२-१८४) इति पूर्वपदस्य दीर्घः । अन इति किम् । साध्वञ्चः पश्य । साध्वञ्चा । साध्वञ्चे । 'नाञ्चेः पूजायाम्' (६- ३- १४८)इति नलोपप्रतिषेधः ॥

उद ईत् ॥ १३६ ॥

उद उत्तरस्याञ्चतेर(द ? नः) अचि स्वादावशिसुटि प्रत्यये परतो-ऽत ईदादेशो भवति । उदीचः पश्य । उदीचा उदीचे ॥

आतोऽनापः ॥ १३७ ॥

आकारन्तायाः प्रकृतेरचि स्वादावशिसुटि प्रत्यये परत आपे वर्ज-बित्वालोऽन्त्यस्य लोपो भवति। कीलालपः पश्य। कीलालपा। कीलालपे। शुभंयः पश्य। शुभंया। शुभंये। आप इति किम्। नदीः पश्य। नद्या। अना-प इति किम्। खट्वाः पश्य। शालाः पश्य। अचीत्येव। कीलालपाभ्याम्। कीलालपाभिः। अशिसुटीत्येव। कीलालपौ। कीलालपास्तिष्ठन्ति। कीलालपाः पश्यन्ति॥

विंशतेर्डिति तेः॥ १३८॥

यचि स्वादावशिसुटि(डिति च)प्रत्यये परतो विंशतेरवयवस्य ति-शब्दस्य लोपो भवति। विंशः। विंशतिरधिका अस्मिन् विंशं शतम्। एकविंशः। आसन्ना विंशतिरेषामासन्नविंशाः। विंशतेरिति किम्। एकस-प्ततेः पूरणः एकसप्ततिः। एकाशीतिः। डितीति किम्। विंशत्या। विंशतिः॥

टेरन्यत्रापि॥ १३९॥

(णः?)प्रकृतेः सम्बन्धिनष्टिसंज्ञस्यावयवस्य यचि च स्वादावस्वादौ च डिति प्रत्यये परतो लोपो भवति। 'पाण्ड्वोड्यण्'(४-१-१७८)। पाण्ड्यः *(विंशतित्रिंशत्या ण्वुनसंज्ञामिति ड्वन्(?) त्रिंशता क्रीतः त्रिंश(त्कः)। अन जादावपि—कुमुद्वान्। वेतस्वान्। नड्वलम्। शाद्वलम्। अस्वादावपि — तुर(ङ्गः?) तुरङ्गः। उपसरजः। मन्दुरजः॥

नस्तद्धिते॥ १४०॥

यकारादावजादौ च तद्धिते परतो नकारान्तायाः प्रकृतेष्टेर्लोपो भवति। आग्निशर्मिः। औडुलोमिः। मैधावः। मायावः। दाण्डिकः। कावचि-कम्। न इति किम्। सात्वतः। पार्षदः। तद्धित इति किम्। शर्मणा। शर्मणे॥

कलापिकुथुमितैतिलिजाजलिलाङ्गलिशिखण्डिसब्र-ह्मचारिपीठसर्पिसूकरसद्मसुपर्वणां च॥ १४१॥

---

*विंशतित्रिंशद्भ्यां असंज्ञायां ड्वुन् इति सूत्रद्वये पञ्चमाध्याये पठितम्। तदेवेदं प्रमादाल्लेखकेन व्यामिश्रितं स्यात्।

कलाप्यादीनां यकारादावजादौ च तद्धिते परतष्टेर्लोपो भवति। अत्र य इन्नन्तास्तेषाम् 'अनपत्ये' (६-२-१८०) इति सूकरसद्मसुपर्वणाम्' अणि (६-३-१७३) इति प्रकृतिभावे प्राप्ते विधानम्। कलापिना प्रोक्तमधीयते कालापाः। कौथुमाः। तैतिलिजाजलिलाङ्गलयश्चाचार्याः। तत्कृतो ग्रन्थ उपचारा(त्त)च्छब्देनोच्यते। तमधीयते तैतिलाः। जाजलाः। लाङ्गलाः। शिखाण्डिन इमे शैखण्डाः। सब्रह्मचारिणः साब्रह्मचाराः। पीठसर्पिणः पैठसर्पाः। सूकरसद्मनः सौकरसद्माः। सुपर्वणः सौपर्वाः॥

अश्मनो विकारे ॥ १४२ ॥

अश्मन्शब्दस्य विकारेऽर्थे यजादौ तद्धिते परतष्टेर्लोपो भवति। अश्मनो विकार आश्मः। विकार इति किम्। आश्मनो (ऽन्यः)। (म १ अश्म)नः 'अणि'(६-३-१७३)इति प्रकृतिभावे प्राप्ते वचनम्॥

चर्मणः कोशे ॥ १४३ ॥

चर्मन्शब्दस्य विकारविशेषे कोशेऽभिधेये यजादौ तद्धिते परतष्टेर्लोपो भवति। चर्मणो विकारः कोशः चार्मः। कोशादन्यत्र चार्मणः॥

शुनोऽवयवसङ्कोचयोः ॥ १४४ ॥

श्वन्शब्दस्यावयवसङ्कोचयोर्यजा(दौ॰दि॰)यस्तद्धितस्तस्मिन् परतष्टेः लोपो भवति। शौवः पुच्छः। शौवः सङ्कोचः। अवयवसङ्कोचयोरिति किम्। शौवनो वेगः॥

अव्ययस्यै चानाराच्छश्वतोऽसिति ॥ १४५ ॥

अव्ययस्याराच्छश्वद्वर्जितस्यासिति यजादौ तद्धिते परतष्टेर्लोपो भवति। बहिर्भवति बाह्यः। बा(हि॰र्हि)कः। सायंप्रातिकः। पौनःपुनिकः। पौनःपुन्यम्। अनाराच्छश्वतोरिति किम्। आरातीयः। शाश्वतिकः। असितीति किम्। कंयुः। शंयुः। अहंयुः। शुभंयुः॥

अह्नः खे ॥ १४६ ॥

अहन्नित्येतस्य खे तद्धिते परतष्टेर्लोपो भवति। द्वे अहनी भूतः

१. 'स्याना' ग. पाठः.

द्यहीनः । त्र्यहीनः । 'राज्याहस्संवत्सराच्च' (५-१-८७) इति खः । अह्नां समूह अहीनः । (अह्नः) खः क्रतौ (४-२-७३) इति खः । ख इति (किम् । ) अह्नां समूहः (अ? आ)ह्नः, अह्ना निर्वृत्तमाह्निकम् ॥

अनव्ययसंख्यैकदेशसर्वेभ्यष्टे[1] ॥ १४७ ॥

अहन्शब्दस्य टप्रत्यये परतष्टेर्लोपो भवति न चेदव्ययादिभ्यः परोऽहन्शब्दो भवति । परमाहः । उत्तमाहः । पुण्याहम् । सुदिनाहम् । सङ्ख्याताह । अनव्ययसंख्यैकदेशसर्वेभ्य इति किम् । अत्यह्नः । निरह्नः । व्यहनजातः । व्यहनप्रियः । पूर्वाह्णः । सायाह्नः । सर्वाह्णः । टे इति किम् । अह्नां समूहः (अ? आ)ह्नः । अह्ना निर्वृत्तमाह्निकम् ॥

समाहारे ॥ १४८ ॥

अहन्शब्दस्य समाहारतत्पुरुषविषयस्य टे प्रत्यये परतष्टेर्लोपो भवति । द्वे अहनी समाहृते द्व्यहः । त्र्यहः । समाहार इति किम् । द्वे अहनी जातस्य द्व्यहजातः । उत्तरपदाद्विगौ न भवति ॥

एकाच्च[2] ॥ १४९ ॥

एकशब्दात् परस्याहन्शब्दस्य टे प्रत्यये परतष्टेर्लोपो भवति । एकाहः ॥

अन्तिकस्य तमे तादेः* ॥ १५० ॥

कादेर्बहुलम् ॥ १५१ ॥

ओरोदस्त्वयस्मुवः ॥ १५२ ॥

अकद्रुपाण्ड्वोर्ढे लोपः ॥ १५३ ॥

यस्यायुसि ॥ १५४ ॥

---

१. 'ष्टेः' ग. पाठः. २. 'तु' ग. पाठः.

---

* इत आरभ्य चतुर्दश सूत्राणि तद्वृत्तिश्च क मातृकायां न दृश्यन्ते ।

ङ्यां मत्स्यस्य यः ॥ १५५ ॥

हलस्तद्धितस्य ॥ १५६ ॥

सूर्यागस्त्ययोश्छे च ॥ १५७ ॥

तिष्यपुष्ययोर्नक्षत्रेऽणि ॥ १५८ ॥

आपत्यस्य तद्धितेऽनाति ॥ १५९ ॥

क्यच्व्योः ॥ १६० ॥

बिल्वकीयादीनामियस्य ॥ १६१ ॥

टेरिमेष्ठेयस्सु ॥ १६२ ॥

स्थूलदूरयुवक्षिप्रक्षुद्राणां यणादेर्ग्वौगुणश्च ॥ १६३ ॥

... ... .... .... ... ति ।

स्थविष्ठः । स्थवीयान् । दविष्ठः । दवीयान् । यविष्ठः । यवीयान् । क्षेपिष्ठः । क्षेपीयान् । क्षेपिमा । क्षोदिष्ठः । क्षोदीयान् । (क्षोदिमा) । णाविष्ठवद्भावात् (स्त ? स्थ)वयति । दवयति । क्षेपयति । क्षोदयति ॥

बहोरेर्भू चास्य ॥ १६४ ॥

बहोः परस्य इमेयसोरिवर्णस्य लोपः, तत्सन्नियोगेन चास्य बहोर्भू इत्ययमादेशो भवति । भूमा भूमानौ भूमानः । भूयान् भूयांसौ भूयांसः ॥

इष्ठे युक् च ॥ १६५ ॥

इष्ठे परतो बहोर्भू इत्यादेशो युगागमश्चेवर्णलोपापवादो भवति । भूयिष्ठः भूयिष्ठौ भूयिष्ठाः । णाविष्ठवद्भावाद् भूययति ॥

ज्यादादीयसः ॥ १६६ ॥

ज्यशब्दात् परस्येयसुन आदेराकारादेशो भवति । ज्यायान् ज्यायांसौ ज्यायांसः ॥

प्रियस्थिरस्फिरोरुगुरुबहुलतृप्रदीर्घह्रस्ववृद्धवृन्दारकाणां प्रस्थस्फवर्गर्बंहित्रब्द्राघह्रसुवर्षवृन्दाः ॥ १६७ ॥

प्रियादीना(यथासङ्ख्य?)मिष्ठेमेयस्सु परतो यथासङ्ख्यं प्रादय आदेशा भवन्ति । प्रेमा प्रेष्ठः प्रेयान् । स्थेमा स्थेष्ठः स्थेयान् । स्फेमा स्फेष्ठः स्फेयान् । वरिमा वरिष्ठः वरीयान् । गरिमा गरिष्ठः गरीयान् । बंहिमा बंहिष्ठः बंहीयान् । त्रपिमा त्रपिष्ठः त्रपीयान् । द्राघिमा द्राघिष्ठः द्राघीयान् । ह्रसिमा ह्रसिष्ठः ह्रसीयान् । वर्षिमा वर्षिष्ठः वर्षीयान् । वृन्दिमा वृन्दिष्ठः वृन्दीयान् । णाविष्ठवद्भावात् प्रापयति । स्थापयति । स्फापयति । वरयति । गरयति । बंहयति । त्रपयति । द्राघयति । ह्रसयति । वर्षयति । वृन्दयति ॥

र ऋतः पृथुमृदुकृशभृशदृढपरिवृढानाम् ॥ १६८ ॥

पृथ्वादीनामृतः स्थाने इष्ठेमेयस्सु परतः रशब्द आदेशो भवति । प्रथिमा प्रथिष्ठः प्रथीयान् । म्रदिमा म्रदिष्ठः म्रदीयान् । क्रशिमा क्रशिष्ठः क्रशीयान् । भ्रशिमा भ्रशिष्ठः भ्रशीयान् । द्रढिमा द्रढिष्ठः द्रढीयान् । (परिव्रढिमा) परिव्रढिष्ठः परिव्रढीयान् । णाविष्ठवद्भावात् प्रथयति । म्रदयति । क्रशयति । भ्रशयति । द्रढयति । परिव्रढयति । पृथ्वादीनामिति किम् । ऋजिमा ऋजिष्ठः ऋजीयान् । कृच्छ्रयति । कृतयति ॥

नैकाचः ॥ १६९ ॥

इमेष्ठेयस्सु परतो यदुक्तं तदेकाचो न भवति । स्रजिष्ठः स्रजीयान् । स्रुचिष्ठः स्रुचीयान् । स्रजयति । स्रुचयति । 'टेरिमेष्ठेयस्सु' (६-३-१६२) इति लोपो न भवति । 'यस्य—' (६-३-१५४) इत्यपि न भवति । श्रेष्ठः श्रेयान् । प्रेष्ठः प्रेयान् । एकाच इति किम् । वसुमत्तमो वसिष्ठः । वसुमत्तरो वसीयान् । वसुमन्तमाचष्टे वसयति । इमेष्ठेयस्स्वित्येव । अस्यापत्यमिः । ज्ञो देवता अस्य ज्ञः । इदं परिमाण(म)स्य इयान् । कियान् ॥

अके राजन्यमनुष्ययूनाम् ॥ १७० ॥

अके प्रत्यये परतो राजन्यमनुष्ययूनां यदुक्तं तन्न भवति । राजन्यानां समूहो राजन्यकम् । मानुष्यकम् । 'आपत्यस्य तद्धितेऽनाति'

(६-३-१५९) इति यलोपो न भवति । यूनो भावः कर्म वा यौवनिका । 'नस्तद्धिते' (६-३-१४०) इति टिलोपो न भवति ॥

आत्माध्वनोः खे ॥ १७१ ॥

आत्मन् अध्वन् इत्येतयोः खे प्रत्यये परतो यदुक्तं (तद्) न भवति । आत्मने हित आत्मनीनः । अध्वानमलङ्गामी अध्वनीनः । 'नस्तद्धिते' (६-३-१४०) इति टिलोपो न भवति । ख इति किम् । अध्यात्मम् । प्राध्वम् ॥

अभावकर्मणोरनो ये ॥ १७२ ॥

अन्नन्तायाः प्रकृतेरभावकर्मवाचिनि यकारादौ प्रत्यये यदुक्तं तन्न भवति । सामनि साधुः सामन्यः । वेमन्यः । ब्रह्मण्यः । मूर्ध्नि भवो मूर्धन्यः । शीर्षण्यः । तक्ष्णोऽपत्यं ताक्षण्यः । 'नस्तद्धिते' (६-३-१४०) इति टिलोपो न भवति । अभावकर्मणोरिति किम् । राज्ञो भावः कर्म वा राज्यम् । दौरात्म्यम् । य इति किम् । महाराजः । द्विमूर्धः । अन इति किम् । छत्रिणि साधुः छत्रियः ॥

अणि ॥ १७३ ॥

(अणि परतः) अन्नन्तायाः प्रकृतेर्यदुक्तं तन्न भवति । सुत्वनोऽपत्य सौत्वनः । सामनि भवः सामनः । कर्मैव ... ...दिष्टं कर्माणि (?) । पर्वणि भवः पार्वणः । अणीति किम् । कर्म शील(म)स्य कार्मः । छत्रादित्वाण्णः । कर्मणे प्रभवति (कर्मकः? कार्मुकम् ।) 'कर्मण उकञ्'(५-१-११३)॥

मात्वर्मण एवापत्ये ॥ १७४ ॥

मात् परस्यानो वर्मण एवापत्यार्थे अणि यदुक्तं तन्न भवति । चक्रवर्मणोऽपत्यं चाक्रवर्मणः । भ्रातृवर्मणः । मादिति किम् । सौत्वनः । राज्वनः । वर्मण इति किम् । सुषाम्नोऽपत्यं सौषामः । अपत्य इति किम् । चर्मणा परिवृतः चार्मणो रथः । कर्मणोऽयं कार्मणो रथः । अन्यत्र 'अणि' (६-३-१७३) इति प्रतिषेध एव भवति । एवकार इष्टतोऽवधारणार्थः ॥

हितनाम्नो वा ॥ १७५ ॥

हितनामन्शब्दस्यापत्यविषये अणि यदुक्तं तद्वा (न) भवति । हितनाम्नोऽपत्यं हैतनामनः । हैतनामः ॥

ब्रह्मणो जातौ ॥ १७६ ॥

ब्रह्मन्नित्यस्याः प्रकृतेरपत्यविषये जातावभिधेयायां च यदुक्तं तन्न भवति । ब्रह्मणोऽपत्यं ब्राह्मणः । जाताविति किम् । ब्रह्मणोऽपत्यं (ब्रह्मणो ? ब्राह्मो) नारदः । अपत्य इत्येव । ब्राह्मी ओषधिः ॥

उक्ष्णः ॥ १७७ ॥

उक्षन्नित्यस्याः प्रकृतेः अपत्याणि यदुक्तं तन्न भवति । उक्ष्णोऽपत्यम् औक्ष्णः । 'षपूर्वहन्धृतराज्ञामणि' (६-३-१३९) इति पुनर्विधानादल्लोपो(नः?)भवत्येव । अपत्य इत्येव । उक्ष्ण इदमुपसर्ग(न)म् (औक्षम्) ॥

संयोगादिनः ॥ १७८ ॥

संयोगात् परो य इन् तदन्तायाः प्रकृतेरपत्यविषयेऽणि यदुक्तं तन्न भवति । शाङ्खिनोऽपत्यं शाङ्खिनः । चाक्रिणः । वाज्रिणः । (द्राविणः ? माद्रिणः) । संयोगादिति किम् । मेधाविनोऽपत्यं मैधावः । मायावः । अणीत्येव । प्राकारमर्दिनोऽपत्यं प्राकारमर्दिः ॥

गाथिविदथिकेशिगणिपणिनाम् ॥ १७९ ॥

गाथिप्रभृतीनामिन्नन्तानामपत्याणि यदुक्तं तन्न भवति । गाथिनोऽपत्यं गाथिनः । वैदथिनः । कैशिनः । गाणिनः । पाणिनः ॥

अनपत्ये ॥ १८० ॥

इन्नन्तायाः प्रकृतेरपत्यादन्यत्रार्थे योऽण् तस्मिन् परतो यदुक्तं तन्न भवति । साङ्कूटिनं वर्तते । *ते गविणः (?) । गर्भिणीनां समूहो गार्भिणम् । भिक्षादित्वादण् । स्रग्विण इदं स्राग्विणम् । अनपत्य इति किम् । मेधाविनोऽपत्यं मैधावः । अणीत्येव । दण्डिनां समूहो दाण्डम् । गणिनां गाणम् । स्रग्विणां स्राग्वम् । रथिनां राथम् । अनुदात्तादित्वादञ् ॥

---

*'सांराविणम्' इति स्यात् ।

दाण्डिनायनहास्तिनायनजैह्माशिनेयवाशिनायनि-
भ्रौणहत्यधैवत्यसारवैक्ष्वाकहिरण्मयानि ॥ १८१ ॥

दाण्डिनायनादीनि शब्दरूपाणि निपात्यन्ते । दण्डहस्तिभ्यां नडादिपाठात् फकि टिलोपाभावो निपात्यते । दण्डिनोऽपत्यं दाण्डिनायनः । हस्तिनः हास्तिनायनः । जिह्माशिनः शुभ्रादित्वात् ढकि टिलोपाभावो निपात्यते । जैह्माशिनेयः । वाशिनोऽपत्यं वृद्धाद(णन्ता?गो)त्रात् फिञिति फिञि टिलोपाभावः वाशिनायनिः । भ्रूणघ्नो भाव इति ष्यञ् । थलोपाभावस्तत्त्वं च निपात्यते । भ्रौणहत्यम् । धैवत्यम् । सरय्वां भवमित्यणि (अय्शब्द) लोपः । सारवम् । इक्ष्वाकोरपत्यं जनपदतुल्यनामत्वादञ् । उकारलोपः । इक्ष्वाकोरयमिति वाणि ऐक्ष्वाकः । हिरण्यस्य विकारार्थे मयटि (य)लोपः । हिरण्यस्य विकारो हिरण्मयमिति ॥

इति श्रीदण्डनाथनारायणभट्टसमुद्धृतायां
सरस्वतीकण्ठाभरणस्य व्याकरणस्य
लघुवृत्तौ षष्ठस्याध्यायस्य
तृतीयः पादः ॥

---

१. 'नाथर्बणिकजे', २. 'कर्मैत्रेयहि' ख. ग. पाठः.

## अथ चतुर्थः पादः

### युवोरनाकावसः ॥ १ ॥

यु वु इत्येतयोरसकारानुबन्धयोर्यथासङ्ख्यमन अक इत्येतावादेशौ भवतः । नन्दनः । रमणः । गमनम् । करणम् । सायन्तनम् । कारकः । हारकः । नर्त्तकः । खनकः । औपगवकम् । औक्ष(क म्)। अस इति किम् । कंद्रुः शंयुः । ऊर्णायुः । ऋष्वः युध्यति मृत्युरित्यर्थवद्ग्रहणान्न भवति । युतः युतवानिति यौतेः 'यवयवक—' (५-२-३) इति ज्ञापकान्न भवति । युवोरिति समाहारैकत्वादेकवचनम् । सौत्रत्वान्नुम् न भवति ॥

### आयनेयीनीयियः फढखछघां तद्धितादीनाम् ॥ २ ॥

फकारादीनां यथासङ्ख्यमायनादय आदेशा भवन्ति । 'नडादिभ्यः फक्' (४-१-९९) नाडायनः । चारायणः । 'तिकादिभ्यः फिञ्' (४-१-१५४) तैकायनिः । कैतवायनिः । 'प्राग्वतेरग्निकलिभ्यां ढक्' (४-१-१८) — आग्नेयः । कालेयः । 'छगालिनो ढिनुक्' (४-३-१३४) — छागलेयिनः । कर्त्र्यादिभ्यो ढकञ् — कात्रेयकः । 'पारावारात् खः' । (४-३-३) पारीणः । अवारीणः 'धान्येभ्यो भवने क्षेत्रे खञ्' (५-२-१) — कौलत्थीनम् । कौद्रवीणम् । 'वृद्धाच्छः' (४-३-३७) शालीयः, मालीयः । 'तित्तिरिवरतन्तुखण्डिकोखाच्छण् (४-३-१२८)—तित्तिरिणा प्रोक्तं वेदं (वेत्ति ? विदन्ति) अधीयते वा तैत्तिरीयाश्छात्राः । वारतन्तवीयाः । 'क्षत्राज्जातौ घः' (४-१-१२७)— क्षत्रियः । 'राष्ट्राद् घः' (४-३-२) — राष्ट्रियः । 'शुक्राद् घन्' (४-२-३०) शुक्रियः । 'शतरुद्रात् घश्च' (४-२-३२) — शतरुद्रियम् । तद्धितग्रहणं किम् । ढौकते । खनति । छिनत्ति । घूर्णते । गुल्फः । षण्ढः । शङ्खः । गुच्छः । दीर्घः ॥

### ठस्येकः ॥ ३ ॥

ठकारस्य तद्धितादेरिक इत्ययमादेशो भवति । आक्षिकः । शालाकिकः । तद्धितस्येत्येव । कण्ठः । आदेरित्येव । कर्मणि घटते कर्मठः । (अ?आय)नादयश्चैते निर्निमित्तत्वादुपदेशावस्थायामेव भवन्ति । कृतेष्वेतेषु प्रत्ययाद्युदात्तत्वं प्रवर्तते । एवं च (ठ ? घ)चश्चित्करणमर्थवद् भवति ॥

इसुसुग्दोर्भ्यः कः ॥ ४ ॥

इस् उस् (उक्) इत्येवमन्तात् दोश्शब्दाच्च परस्य ठकारस्य ककार आदेशो भवति। सर्पिः पण्यमस्य सार्पिष्कः। बार्हिष्कः। धनुः प्रहरणमस्य धानुष्कः। निषादकर्ष्वां भवः नैषादकर्षुकः। सौयरजम्बुकः। मातुरागतं मातृकम्। पैतृकम्। दोर्भ्यां तरति दौष्कः। आशिषा चरति आशिषिकः इत्यत्रानर्थकत्वाल्लाक्षणिकत्वाच्च न भवति॥

तोऽनकस्माच्छश्वतः ॥ ५ ॥

तकारान्तायाः प्रकृतेरकस्माच्छश्वद्वर्जाया विहितस्य ठस्य स्थाने क इत्येवमादेशो भवति। उदश्विता संस्कृतः औदश्वित्कः। भवतोऽयं भावत्कः। अनकस्माच्छश्वत इति किम्। अकस्माद् भवमाकस्मिकम्। शाश्वतिकम्। विहितविशेषणं किम्। माथितं पण्यमस्य माथितिकम्॥

भाविनि गत्युपपदसमासे क्त्वो ल्यप् ॥ ६ ॥

भाविनि गतिसमासे उपपदसमासे च वर्तमानस्य क्त्वाप्रत्ययस्य ल्यबित्ययमादेशो भवति। प्रकृत्य। अपहृत्य। श्रद्धाय। अन्तर्धाय। ऊरीकृत्य। सूक्ष्मीकृत्य। पटपटाकृत्य। कारिकाकृत्य। नमस्कृत्य। जीविकाकृत्य। अच्छोद्य। उच्चैःकृत्य। नीचैःकृत्य। पार्श्वतःकृत्य। पूर्वतोभूय। धानाकृत्य। तूष्णींभूय। अन्वग्भूय। गत्युपपदसमास इति किम्। अकृत्वा। परमकृत्वा। स्नात्वाकालकः पीत्वा (पिकरः ? स्थिरकः)। समासग्रहणं किम्। अलं कृत्वा। खलु कृत्वा। भाविनीति वचनादन्तरङ्गानपि हेत्वदत्त्वात्वे(त्वे)त्वदीर्घत्वशूठिडादीन् बहिर(ङ्गान?ङ्गो)ऽपि ल्यप् बाधते। स्थाय। प्रदाय। प्रखन्य। प्रस्थाय। विहाय। निशम्य। प्रपृच्छ्य। प्रदीव्य। अपत्य इति॥

ऋत इद्धातोः ॥ ७ ॥

ऋकारान्तस्य धातोः प्रकृतेरलोऽन्त्यस्येकारादेशो भवति। किरति। गिरति। दीर्णम्। आस्तीर्णम्। विस्तीर्णम्। धातोरिति किम्। मातॄणाम्।

पितॄणाम् । ननु च लाक्षणिकत्वादेवात्र न भविष्यति । एवं तर्हि ज्ञापयत्याचार्यः लाक्षणिक(त्वा?स्या)पि ग्रहणं भवतीति । तेन चिकीर्षति, जिहीर्षतीत्यादावपि भवति ॥

उपधायाश्च ॥ ८ ॥

प्रकृतेरुपधाया ऋकारस्येकारादेशो भवति । कीर्तयति । कीर्तयतः । कीर्तयन्ति ॥

उदोष्ठ्यपूर्वस्य ॥ ९ ॥

ओष्ठ्यः पूर्वो यस्मात् स ओष्ठ्यपूर्व ऋकारः तदन्तायाः प्रकृतेरलोऽन्त्यस्योदित्ययमादेशो भवति । पिपूर्तः । पिपुरः । (पुपुरुः? । पुपूर्षति) दन्त्योष्ठ्यपूर्वोऽप्योष्ठ्यपूर्वः । तेनात्रापि भवति—वुवूर्षते ऋत्विजम् । प्रावुवूर्षति कम्बलम् । ओष्ठ्योऽत्र प्रत्यासत्तेर्धातुसम्बन्ध्येव गृह्यते । तेनेह न भवति । समीर्णम् । तपरकरणं दीर्घं स्यादिति दीर्घनिवृत्त्यर्थम् । इत्वोत्वाभ्यां गुणवृद्धी भवतो विप्रतिषेधेन । आस्तरणम् । आस्तारकः । निपरणम् । निपारकः । प्रावरणम् । प्रावारकः ॥

इदितो नुम्[1] ॥ १० ॥

इदितो धातोर्नुमागमो भवति । कुण्डिता । हुण्डिता । वन्दिता । अयं च धातूपदेशावस्थायामेव भवति । अनैमित्तिकत्वात् । 'गुपो निन्दायाम्' 'हिसि हिंसाया'मित्यादेर्निर्देशाच्च । तेन कुण्डा, हुण्डेत्यादौ 'गुरोर्हलः' (२-४-१३६) इत्यप्रत्ययः सिद्धो भवति । धातोरित्येव । अन्येषामकारो देविध्यर्थः (?) ॥

मुचलुपलिपविदसिचकृतखिदपिषतृपदृफगुफोभशुभां शे ॥ ११ ॥

मुचादीनां धातूनां शे प्रत्यये परतो नुमागमो भवति । मुञ्चति । लुम्पति । लिम्पति । विन्दति । सिञ्चति । कृन्तति । खिन्दति । पिंषति । तृम्पति । दृम्फति । गुम्फति । उम्भति । (शुम्भति ।) (अञ्चति ?)

१. 'नुं धातोः' ग. पाठः.

तृपादयः सानुषङ्गा निरनुषङ्गाश्च तु(रा ? दा)दिषु पठ्यन्ते । तत्र ये सानुषङ्गास्तेषां (षिन्य ? षिङस्य)नुषङ्गलोपः । यस्तु विधीयते तस्य विधानसामर्थ्याल्लोपो न भवति । मुचादीनामिति किम् । (तुदति । नुदति । शे इति किम् ) । मोक्ता । मोक्तुम् ॥

नशो झलि ॥ १२ ॥

नशेर्धातोर्झलादौ प्रत्यये परतो नुमागमो भवति । नंष्टा । नंष्टुम् । नङ्क्ष्यति । झलीति किम् । नश्यति । नशिता ॥

मस्जोऽन्त्यात् पूर्वः ॥ १३ ॥

मस्जेर्धातोर्झलादौ प्रत्यये परतोऽन्त्यात् पूर्वं नुमागमो भवति । मङ्क्ता । मङ्क्तुम् । मङ्क्ष्यति । मिमङ्क्षति । अन्त्यात् पूर्ववचनमनुषङ्गसंयोगादिलोपार्थम् । मग्नः । मग्नवान् । झलीत्येव । मज्जनम् ॥

रधिजभोरचि ॥ १४ ॥

रधिजभोर्धात्वोरजादौ प्रत्यये परतो नुमागमो भवति । रन्धयति । रन्धकः । साधुरन्धी । (रन्धं) रन्धम् । रन्धो वर्तते । जम्भयति । जम्भकः । साधुजम्भी । जम्भं जम्भम् । जम्भो वर्तते । अचीति किम् । र(न्ध्य ? ध्य)ते । जभ्यते ॥

रधेरिटि लिट्येव ॥ १५ ॥

रधेर्धातो(लि ? रि)डादौ प्रत्यये लिट्येव नुम् भवति, नान्यत्र । ररन्धिव । ररन्धिम । लिटीति किम् । रधिता । रधिष्यति । एवकार इष्टतोऽवधारणार्थः । तेनेह नियमो न भवति—ररन्ध । ररन्धतुः । ररन्धुरिति ॥

रभेरशब्लिटोः ॥ १६ ॥

रभेर्धातोः शब्लिड्वर्जितेऽजादौ प्रत्यये परतो नुमागमो भवति । आरम्भयति । आरम्भकः । साध्वारम्भी । आरम्भमारम्भम् । आरम्भो वर्तते । अशब्लिटोरिति किम् । आरभते । आरेभे । अचीत्येव । आरब्धा ॥

लभेश्च ॥ १७ ॥

लभेः शब्लिड्वर्जितेऽजादौ प्रत्यये परतो नुमागमो भवति । लम्भयति । लम्भकः । साधुलम्भी । (लम्भं लम्भम् । लम्भो वर्तते ।) अशब्लिटोरिति किम् । लभते । (आ?)लेभे । अर्चात्येव । लब्धा । योगविभाग उत्तरार्थः ॥

## आङो यि ॥ १८ ॥

आङः परस्य लभेर्यकारादिप्रत्ययविषये नुमागमो भवति । आलम्भ्या गौः । आलम्भ्या बडवा । आङ इति किम् । लभ्यः । यीति किम् । आलब्धा ॥

## उपात् प्रशंसायाम् ॥ १९ ॥

उपात् परस्य लभेर्यकारादिप्रत्ययविषये प्रशंसायां गम्यमानायां नुमागमो भवति । उपलम्भ्या विद्या भवता । उपलम्भ्यानि धनानि । प्रशंसायामिति किम् । उपलभ्यमस्माद् वृषलात् किञ्चित् । यीति विषयसप्तमीविज्ञानात् प्राक् प्रत्ययोत्पत्तेर्नुमि सति (विहतम्) अदुपधत्वमिति (स? यत्)प्रत्ययाभावाण्ण्य(त्)प्रत्यये सत्यन्तस्वरितत्वं भवति । य(दि ? ति) पुन(रन्तो ? रुत्तरपदाद्यु)दात्तत्वं स्यात् ॥

## उपसर्गात् खल्घञोः ॥ २० ॥

उपसर्गात् परस्य लभेः खलि घञि च प्रत्यये परतो नुम् भवति । ईषत्प्रलम्भः । दुष्प्रलम्भः । सुप्रलम्भः । प्रलम्भः । उपलम्भः । विलम्भः । उपसर्गादिति किम् । ईषत्सुलभः । लाभो वर्तते । 'लभेश्च' (६-४-१७) इति सिद्धे नियमार्थं वचनम् ॥

## न सुदुर्भ्यां केवलाभ्याम् ॥ २१ ॥

सुदुरित्येताभ्यां केवलाभ्यामन्योपसर्गरहिताभ्यां परस्य लभेर्नुमागमो (न) भवति । सुलभम् । दुर्लभम् । सुलाभः । दुर्लाभः । केवलाभ्यामिति किम् । अतिसुल(भ?म्भ)म् । अतिदुर्ल(भ ? म्भ)म् । कथमतिसुलभमतिदुर्लभमिति । अतेः कर्मप्रवचनीयत्वात् केवलावेवात्र सुदुराविति नुम न भवति ॥

## चिण्णमुलोरनुपसर्गस्य वा ॥ २२ ॥

अनुपसर्गस्य लभेश्चिणि णमुलि च प्रत्यये परतो नुमागमो (वा) भवति । अलाभि, अलम्भि । लाभं लाभम् । लम्भं लम्भम् । अनुपसर्गस्येति किम् । प्रालम्भि । प्रलम्भं प्रलम्भम् ॥

सुट्यधातोरुगितः पुंसि ॥ २३ ॥

उगितः प्रकृतेः पुंसि वर्तमानायाः धातुवर्जितायाः सुटि प्रत्यये परतो नुमागमो भवति । श्रेयान् । श्रेयांसौ । श्रेयांसः । श्रेयांसम् । श्रेयांसौ । गोमान् । गोमन्तौ । गोमन्तः । गोमन्तम् । गोमन्तौ । पचन् । पचन्तौ । पचन्तः । पचन्तम् । पचन्तौ । सुटीति किम् । श्रेयसः पश्य । पचतः पश्य । अधातोरिति किम् । उखास्रत् । पर्णध्वत् । उगित इति किम् । अग्निचित् । अग्निचितौ । पुंसीति किम् । श्रेयसी कुले । पचती कुले ॥

अञ्चेः ॥ २४ ॥

अञ्चेर्धातोः पुंसि विषये सुटि प्रत्यये परतो नुमागमो भवति । प्राङ् । प्राञ्चौ । प्राञ्चः । अञ्चतेरेवोगितो धातोर्नान्यस्येति प्रतिषेधे सिद्धे पूर्वत्र (अ)धातोरितिवचनमधातुभूतपूर्वादपि यथा स्यादित्येवमर्थम् । गोमत्यतेर-प्रत्ययः । गोमान् । गोमन्तौ । गोमन्तः । पुंसीत्येव । प्राची कुले ॥

युजेरसमासे ॥ २५ ॥

युजेर्धातोरसमासे वर्तमानस्य सुटि परतः पुंसि नुमागमो भवति । युङ् । युञ्जौ । युञ्जः । युञ्जम् । युञ्जौ । असमास इति किम् । अश्वयुक् । पुंसीत्येव । यु(जे ई)जी कुले । (इकारनिर्देशः किम् ।) युजमापन्ना मुनयः । सुटीत्येव । युजः पश्य ॥

शावयमः ॥ २६ ॥

यमन्तादन्यस्याः प्रकृतेः शिप्रत्यये परतो नुमागमो भवति । श्रेयांसि तिष्ठन्ति । श्रेयांसि पश्य । उदश्विन्ति । कुण्डानि । वनानि । शाविति किम् । श्रेयसी कुले । गोदुहौ । अयम इति किम् । चत्वारि । अहानि । विमलदिवि । सुगणि ॥

बहूर्जि बहूर्ञ्जि[1] ॥ २७ ॥

बहूर्जि इत्यस्याः प्रकृतेः अन्त्यात् पूर्व एव नुम् वा निपात्यते । बहूर्जि बहूर्ञ्जि ब्राह्मणकुलानि ॥

नपुंसकस्येकोऽचि सुपि ॥ २८ ॥

इगन्तस्य नपुंसकस्याजादौ सुपि परतो नुमागमो भवति । दधिनी । मधुनी । वारिणी । त्रपुणी । कर्तृणी कुले । वारीणि । वारिणः । वारिणोः । वारिणि । त्रपुणी । त्रपुणे । त्रपुणोः । त्रपुणि । नपुंसकस्येति किम् । अग्नी । नद्यौ । इक इति किम् । काण्डे । कुड्ये । अचीति किम् । हे त्रपो । अस्मादेव लिङ्गाद् 'न लुमता—' (१-२-५९) इति सम्बुद्धिगुणप्रतिषेधो न भवति । सुपीति किम् । तौम्बरवं चूर्णम् ॥

गुणष्टादौ पुंवद्वा ॥ २९ ॥

विशेषणं गुणः । तद्वचनः शब्दोऽपि । गुणस्य (आ)श्रयतो लिङ्ग-वचनानि भवन्ति । स इगन्तो नपुंसकलिङ्गष्टादावजादौ सुपि परतः पुंवद् (भावो ? वा) भवति । यथा पुंसि नुम् न भवति, तथात्रापि न भवती-त्यर्थः । ग्रामण्या कुलेन, ग्रामणिना कुलेन । ग्रामण्ये कुलाय, ग्रामणिने कुलाय । ग्रामण्यः कुलात् , ग्रामणिनः कुलात् । ग्रामण्यः कुलस्य, ग्रामणिनः कुलस्य । ग्रामण्योः कुलयोः, ग्रामणिनोः कुलयोः । ग्रामण्यां कुले, ग्राम-णिनि कुले । एवं कर्त्रा, कर्तृणा । कर्त्रे, कर्तृणे । कर्तुः, कर्तृणः । कर्त्रोः, कर्तृणोः । कर्तृणि, कर्तरि । शुचये, शुचिने । मृदवे, मृदुने । शुचेः, शुचिनः । मृदोः, मृदुनः । शुच्योः, शुचिनोः । मृद्वोः, मृदुनोः । शुचौ, शुचिनि । मृदौ, मृदुनि । चित्रगवे, चित्रगुणे । अतिराया, अतिरिणा । अतिनावा, अतिनुना । (अ ?)गुण इति किम् । त्रपुणे । जतुने । पीलुने । फलाय । टादाविति किम् । ग्रामणिनी शुचिनी कुले । अचीत्येव । ग्रामणिभ्यां कुलाभ्याम् । ग्रामणिभिः कुलैः । इक इत्येव । कीलालपेन कुलेन । नपुंसकस्येत्येव । कल्याण्यै ॥

---

१. 'ञ्जि बहूर्जि' ग. पाठः.

## अस्थिदधिसक्थ्यक्ष्णां तदन्तानाञ्चानङ् ॥ ३० ॥

अस्थ्यादीनां नपुंसकानां तदन्तानां चेगन्तानां टादावजादौ सुपि प्रत्यये परतोऽनङादेशो भवति । अस्थ्ना । अस्थ्ने । अस्थ्नि, अस्थनि । दध्ना । दध्ने । दध्नि, दधनि । सक्थ्ना । सक्थ्ने । सक्थ्नि, सक्थनि । अक्ष्णा । अक्ष्णे । अक्ष्णि, अक्षणि । परमास्थ्ना । परमदध्ना । परमसक्थ्ना । परमाक्ष्णा । अत्यस्थ्ना । अतिदध्ना । अतिसक्थ्ना । अत्यक्ष्णा । प्रियदध्ना । दृढसक्थ्ना शकटेन । स्थूलाक्ष्णा । अचीत्येव । अस्थिभ्याम् । अस्थिभिः । टादावित्येव । अस्थिनी । अस्थीनि । नपुंसकस्येत्येव । दधातीत्येवंशीलः दधिः । दधिना । दधये । इक इत्येव । गौरसक्थेन पद्माक्षेण । (त) दन्तानाञ्चेत्यधिकारः प्रागार्धधातुकाधिकारात् । (वित्युदानां चान्यत्रेत्यदादीनां च 'नान्यच्च) संज्ञोपसर्जनात् ' (२ १-१६८) इति प्रतिषेधादुपसर्जनत्वे न भवति । ङकारोऽन्तादेशार्थः ॥

## नाभ्यस्ताच्छतुः ॥ ३१ ॥

अभ्यस्तसंज्ञकायाः प्रकृतेः परस्य शतुर्नुमागमो न भवति । ददत् ददतौ । ददतः । ददतम् । ददतौ । एवं दधत् । जुह्वत् । जक्षत् । जाग्रत् । अभ्यस्तादिति किम् । लिहन् । लिहन्तौ । लिहन्तः ॥

## शौ वा ॥ ३२ ॥

अभ्यस्तादुत्तरस्य शतुः शौ परतो नुमागमो वा भवति । ददति कुलानि, ददन्ति कुलानि । दधति, दधन्ति । जुह्वति, जुह्वन्ति । जक्षति, जक्षन्ति । जाग्रति, जाग्रन्ति ॥

## आच्छीङ्योः ॥ ३३ ॥

अकारात् परस्य शतुः शीङ्योः प्रत्यययोः परतो नुमागमो वा भवति । तुदती कुले, तुदन्ती कुले । तुदती स्त्री, तुदन्ती स्त्री । करिष्यती कुले, करिष्यन्ती कुले । करिष्यती स्त्री, करिष्यन्ती स्त्री । याती कुले, यान्ती कुले । याती स्त्री, यान्ती स्त्री । आदिति किम् । सुन्वती कुले । सुन्वती स्त्री । तन्वती कुले । तन्वती स्त्री । रुन्धती कुले । रुन्धती स्त्री । क्रीणती कुले । क्रीणती स्त्री । अदती कुले । अदती स्त्री । शीङ्योरिति किम् । तुदताम् ॥

